तत्त्वनिर्वचनप्रसङ्गे —

**"सतश्च सद्भावोऽसतश्चासद्भावः। सत् "सत्" इति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं भवति। असच्च "असत्" इति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं भवति।"** इत्युक्तवान्। एवं व्युत्पत्तीनां भावार्थानुसारेण एव तत्त्वशब्दः विविधार्थेषु प्रयुक्तः दृश्यते तद्यथा—

परात्मनि

**वदन्ति तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम्।**
**ब्रह्मेति परमात्मेति भगवानिति शब्द्यते।।**[1]

वाद्यभेदे

**विलम्बितं द्रुतं मध्यं तत्त्वमोघो घनं क्रमात्।।**[2]

स्वरूपे

**"तत्त्वज्ञानान्निःश्रेयसाधिगमः।"**[3]

याथार्थ्ये

**सन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम्।।**[4]

स्वभावे

**शून्यं तत्त्वं भावो विनश्यति वस्तुधर्मत्वाद्विनाशस्य।।**[5]

चेतसि

**वयं तत्त्वान्वेषान्मधुकरहतास्त्वं खलु कृती।।**[6]

वस्तुस्थितौ

**शृणु नारद तत्त्वेन यत् तज्ज्ञानमनुत्तमम्।।**[7]

पदार्थे

**"तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः"।।**[8]

---

1. भागवतम्, 1/3/11.
2. अमरकोशः, 1/7/9.
3. न्यायसूत्रम्,1/1/1.
4. गीता, 18/1 व 3/28.
5. सांख्यसूत्रम्, 1/44.
6. अभिज्ञानशाकुन्तलम्, 1/24.
7. अहिर्बुध्न्यसंहिता, 2/3.
8. पातञ्जलयोगसूत्रम्, 1/32.

तत्रापि मतभेदे पदार्थभेदाः तदेवम्— **"एकं वा इदं विबभूव सर्वम्"**[1] **"एकं सद् विप्रा बहुधा वदन्ति"**,[2] **"पुरुष एवेदं सर्वम्"**[3] इति वैदिकाः वेदेषु। **"सदसदुभयात्मकं चतुष्कोटिविनिर्मुक्तं शून्यमेव तत्त्वम्"**। इति शून्य- वादिनो बौद्धाः। **"पृथिव्यादीनि चत्वारि भूतानि तत्त्वानि"** इति चार्वाकाः। **"जीवाकाशधर्माधर्म-पुद्गलास्तिक्याः पञ्चतत्त्वानि"** इत्यार्हतैकदेशिनः।[4] **"जीवाजीवास्त्रवबंधसंवर-निर्जरमोक्षाः सप्त तत्त्वानि।"** इत्यपरे आर्हतैकदेशिनः। **"स्वतन्त्रास्वतन्त्रभेदेन द्विविधं तत्त्वम्।"** इति द्वैतवादिनः माध्वाः **"चिदचिदीश्वरभेदेन त्रिविधं तत्त्वम्"** इति विशिष्टाद्वैतवादिनः रामानुजादयः आचार्याः। **"पतिपशुपाशभेदेन त्रिविधं तत्त्वम्"** इति पाशुपताचार्याः नाकुलीशाः[5]। तथैव सिद्धान्तशैवाश्च —

**शैवागमेषु मुख्यं पतिपशुपाशा इति क्रमात् त्रितयम्।**
**तत्र पतिः शिवः उक्त पशवो ह्येणवोऽर्थपञ्चकं पाशः॥**[6]

**"महदादीनि पञ्चविंशति तत्त्वानि"** इति सांख्याः। तद्यथा सांख्यसूत्र एव —

**"सत्वरजस्तमसां साम्यावस्था प्रकृतिः प्रकृतेमहान्महतोऽहंकारोऽहंकारात् पञ्चतन्मात्राण्युभयमिन्द्रियं तन्मात्रेभ्यः स्थूलभूतानि पुरुष इति पञ्चविंशतिर्गणः"॥**[7]

**"शिवादिक्षित्यन्तं षट्त्रिंशत् तत्त्वानि"** इति शैवशाक्तागमानुरोधिनः शैवाः

**षट्त्रिंशत्तत्त्वमयं वन्दे कौलं कुलातिगं शम्भुम्॥**[8]

शाक्ताश्च

**एषैव स्पन्दशक्तिः शिवादिधरण्यन्तं षट्त्रिंशत्तत्त्वमयी जगदात्मना स्फुरति॥**[9]

---

1. ऋग्वेदः, 8/58/2.
2. ऋग्वेदः, 1/164/46॥ अथर्ववेदः, 9/10/28॥ निरुक्तम्, 7/18, 14/1.
3. ऋग्वेदः, 10/90/2॥
4. सर्वदर्शनसंग्रहे बौद्धदर्शनम्, चार्वाकदर्शनम्, आर्हतदर्शनम्।
5. सर्वदर्शनसंग्रहे आर्हतदर्शनम्, रामानुजदर्शनम्, पूर्णप्रज्ञदर्शनम्, नकुलीशपाशुपतदर्शनञ्च।
6. तत्त्वप्रकाशः 5
7. सांख्यसूत्रम्, 1/61.
8. षट्त्रिंशतत्त्वसंदोहः, 21.
9. स्पन्दकारिका पराप्रावेशिकानुसारञ्च.

अत एषा स्थिता संविदन्तर्बाह्योभयात्मना।
स्वयं निर्भास्य तत्रान्यद्भासयन्तीव भासते।।[1]

"ब्रह्मैकमेव परमार्थतत्त्वम्" इति औपनिषदश्रुत्यनुरोधिनः वेदान्तिनः।

एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्।।[2]
ॐ आत्मा वा इदमेक एवाग्र आसीत् नान्यत्किंचन मिषत्।
स ईक्षत लोकान्नु सृजा इति।।[3]
सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत्।।[4]
"नेह नानास्ति किञ्चन"।।[5]
एको वशी निष्क्रियाणां बहूनामेकं बीजं बहुधा यः करोति।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्।।[6]

"ब्रह्मभिन्नाः मायाकल्पिताः" इतिमायावादिनो वेदान्तिनः।

"एवं विविधेष्वर्थेषु अत्र याथार्थ्यमेव ग्राह्यम्।।"

## अथ विमर्शशब्दविमर्शः

विमर्शनमेव विमर्शः। विमृश्यते बुद्ध्यात्मिकया क्रियया स्पृश्यते, बुद्ध्या निश्चीयते वा, इति विग्रहे 'वि' उपसर्गपूर्वकाद् "**मृश आमर्शने**"[7] इत्यस्माद्धातोः धात्वर्थे वाच्ये "**भावे**"[8] इत्यनेन सूत्रेण 'घञ्' प्रत्यये इत् लोपे "**नोदात्तोपदेशस्य मान्तस्यानाचमेः**"[9] इत्यनेन सूत्रेण प्राप्त उपधावृद्धि निषेधे "**अङ्गस्य**"[10]

---

1. तन्त्रालोकः, 4/147.
2. कठोपनिषद्, 2/2/12.
3. ऐतरेयोपनिषद्, 1/1/1.
4. छा.उ., 3/14/1.
5. बृहदारण्यकोपनिषद्, 4/4/19.
6. श्वे.उ., 5/12.
7. तु.प.अ., 6/134.
8. पा., 3/3/18.
9. पा., 7/3/34.
10. पा., 6/4/1.

"**सार्वधातुकार्धधातुकयोः**"[1] "**इको गुणवृद्धी**"[2] इत्येतैः सूत्रैः मकारोत्तरवर्त्तीय ऋकारस्तस्य गुणे कृते सति (वि + म् + अर् + श् + अ + सु) विमर्शशब्दसिद्धिः। आमर्शनं स्पर्शः दर्शनं विचारो वा।

अतो विशेषेण आमर्शनमेव विमर्शः। ज्ञानात्मकमामर्शनं स्पर्शो वा, बुद्ध्यात्मिका क्रिया विचारो वा चैतन्ये एव भवितुमर्हति। न तु एतदेवापितु ज्ञानात्मको विमर्श एव चैतन्यत्वं प्रमातृत्वं वा, अर्थात् यत्र यत्र ज्ञानात्मको विमर्शः तत्र तत्र चैतन्यत्वं प्रमातृत्वं वा। यत्र ज्ञानात्मकविमर्शाभावो तत्र प्रमातृत्वाभावोऽपि यथा शिलादिषु। अत एव सकलसिद्धिवितरणचतुरचिन्तामणिप्रख्यम् आगमिकाः एवं वदन्ति "**अहं जानामि, इत्येवं स्वप्रकाशःहंपरामर्शपरिनिष्ठितमेव इदं ज्ञानं नाम, किं तत्र अन्यत् विचार्यते, तदप्रकाशे हि विश्वमन्धतमसं स्यात्, तदपि वा न स्यात्, बालोऽपि हि प्रकाशविश्रान्तिमेव संवेदयते। तन्निह्नवे हि कः प्रश्नः किमुत्तरञ्च स्यात्। तत्र च जानामि-इत्यन्तः संरम्भयोगोऽपि भाति येन शुक्लादेर्गुणात् अत्यन्तजडात् 'जानामि' इति वपुः चित्स्वभावतामभ्येति, स च संरम्भो विमर्शः क्रियाशक्तिर्भवति। तेन आन्तरी क्रियाशक्तिः ज्ञानवदेव स्वतः सिद्धा स्वप्रकाशा, सैव तु स्वशक्त्या प्राणपुर्यष्टकक्रमेण शरीरमपि संचरमाणा स्पन्दनरूपा सती व्यापारात्मिका मायापदेऽपि प्रमाणस्य प्रत्यक्षादेर्विषयः। सा च परशरीरादिसाहित्येन- अवगता स्वं स्वभावं ज्ञानात्मकमवगमयति। न च ज्ञानं इदन्तया भाति, इदन्ता हि अज्ञानत्वम् न च अन्यद्वस्तु अन्येन वपुषा भातं भातं भवेत्, तत् ज्ञानम् भात्येव परम्, भाति च यत् तदेव अहमित्यस्य वपुः**"[3]। विमर्शशक्तिरेव ज्ञानशक्तित्वमासाद्य क्रियाशक्तिभावेन स्फुरति। अहं जानामि, अहं करोमि, इत्यत्र हि प्रथममहंपरामर्शः जानामीति भावेन परिणमते, ततः करणभावेन स्फुरति, अन्यथा शिलादेरपि करणप्रसङ्गात्। तस्मादवियुक्तं ज्ञानं क्रिया च। ज्ञानं विमर्शानुप्राणितम्,विमर्श एव च क्रियेति। अतो न ज्ञानविमर्शविहीनस्य क्रियायोगः।

विमर्शनमेव अजाड्यजीवितम् — अन्तर्बहिष्करणस्वातन्त्र्यरूपं स्वाभाविकमवभासस्य स्वात्मविश्रान्तिलक्षणम् - अनन्यमुखप्रेक्षित्वं नाम। "अहमेव प्रकाशात्मा प्रकाशे" इति हि विमर्शोदये स्वसंविदेव प्रमातृप्रमेयप्रमाणादि कृतार्थम् - अभिमन्यते

---

1. पा., 7/3/84.
2. पा., 1/1/3.
3. **ईश्वरप्रत्यभिज्ञाविमर्शिनी, 1/1/4.**

न तु अतिरिक्तं काङ्क्षति, स्फटिकादि हि गृहीतप्रतिबिम्बमपि तथा भावेन सिद्धौ प्रमात्रन्तरमपेक्षते इति निर्विमर्शत्वाज्जडम्। सर्वत्र वस्तुतो विमर्शात्मक-प्रमातृस्वभावतादात्म्याहंपरामर्शविश्रान्तेः अजडत्वमेव पूर्वापरकोट्योः। यथोक्तम्—

**इदमित्यस्य विच्छिन्नविमर्शस्य कृतार्थता।**
**या स्वस्वरूपे विश्रान्तिर्विमर्शः सोऽहमित्ययम्॥**[1]

इति विमर्श एव प्रधानमात्मनः। तदेवोत्पलदेवेनोक्तम् —

**स्वभावमवभासस्य विमर्शं विदुरन्यथा।**
**प्रकाशोऽर्थोपरक्तोऽपि स्फटिकादिजडोपमः॥**[2]

यतो विमर्श एव प्रधानमात्मनो रूपममुमेव हेतुं प्रयोजनरूपमुद्दिश्य आत्मा धर्मिस्वभावो द्रव्यभूतोऽपि **"आत्मा चेतनः"** इति वक्तव्ये धर्मान्तराधरीकरणाय विमर्शधर्मोद्धुरीकरणाय च चैतन्यमिति धर्मवाचिना शब्देन सामानाधिकरण्यमाश्रित्य भगवता शिवसूत्रेषु—

**"चैतन्यमात्मा"।**[3]

इति पठितम्। तदेव महामाहेश्वराचार्यः उत्पलंदेवः ईश्वर-प्रत्यभिज्ञाकारिकायामुक्तवान् —

**आत्मात एव चैतन्यं चित्क्रिया चितिकर्तृता।**
**तात्पर्येणोदितस्तेन जडात्स हि विलक्षणः॥**[4]

आगमेषु खलु परमेश्वरः प्रकाशात्मा, प्रकाशश्च विमर्शस्वभावः, तदेवं चिदात्मनि स्वस्वातन्त्र्य-शक्त्या स्वावबोधात्मकः पूर्णाहंभावपरामर्शो निरवच्छेदेन भवति। एषः पूर्णाहंभावनया स्वसत्तात्मकस्स्फुरणमेव विमर्शः। अनया स्वस्फुरणात्मिकया शक्त्या एव सर्वमिदं क्रियते परमात्मना। तदेवमपि वक्तुं शक्यते **"जगदुत्पत्तिस्थितिलयहेतुभूता-कृत्रिमाहंभावपरामर्शो विमर्शः।"** तद्यथा कामकलाविलासे मङ्गलाचरणे एवोक्तम्—

**सकलभुवनोदयस्थितिलयमयलीलाविनोदनोद्युक्तः।**
**अन्तर्लीनविमर्शः पातु महेशः प्रकाशमात्रतनुः॥**[5]

---

1. ईश्वरप्रत्यभिज्ञाविमर्शिन्यामुद्धृतम्, 1/5/11.
2. ई.प्र.का., 1/5/11.
3. शिवसूत्रम्,1/1.
4. ईश्वरप्रत्यभिज्ञा कारिका 1/5/12.
5. कामकलाविलासः 1.

पुनश्च एवमपि वक्तुं शक्यते "**विमर्शो नाम विश्वाकारेण विश्वप्रकाशनेन विश्वसंहरणेन च अकृत्रिमाहम्-इति विस्फुरणम्।**" तद्यथा पराप्रावेशिकायाम् —

**विश्वात्मिकां तदुत्तीर्णां हृदयं परमेशितुः।**
**परादिशक्तिरूपेण स्फुरन्तीं संविदं नुमः॥**[1]

एष एव विमर्शः — चित्, चैतन्यं, स्वरसोदिता परावाक्, स्वातन्त्र्यं, परमात्मनो मुख्यमैश्वर्यं, कर्तृत्वं, स्फुरत्ता, सारो, हृदयं, स्पन्दः इत्यादि शब्दैरागमेषु उद्घोष्यते; अत एव अकृत्रिमाहमिति सतत्त्वः स्वयंप्रकाशरूपः परमेश्वरः पारमेश्वर्या शक्त्या शिवादि-धरण्यन्तजगदात्मना स्फुरति प्रकाशते च। एतदेव अस्य जगतः कर्तृत्वमजडत्वञ्च।

अत्र च अनुसंधाननिबन्धप्रसङ्गे उद्घाटितविमर्शनिरुक्तिषु "बुद्ध्यात्मकः क्रियारूपः ज्ञानात्मक आमर्शः स्पर्शो वा ग्राह्यः।" अर्थादत्र गवेषणया सुचिन्तनेन परिष्कृतः विशुद्धः निगमितोऽपि अजडः विचार एव विमर्शपदेन ग्राह्यः।



1. पराप्रावेशिका 1.

द्वितीयोऽध्यायः

# निगमेषु परमतत्त्वविमर्शः

## तत्त्वजिज्ञासा

प्रभातसमये सूर्य उदयन्नस्ति। अम्बा अङ्कस्थेन शिशुना सह बहिः आयाति। शिशुः हरितपर्णयुतान् वृक्षान्, तत्र रक्ताभकिसलयान्, चित्रविचित्रं नानाकारं सर्वं पश्यति। ततश्च किसलयोपरि स्वर्णाभान् रश्मीन्, उदयन्तं सूर्यं पश्यति। आश्चर्येण तस्यान्तः ह्लादते। आह्लादितः सन् विस्मयेन उल्लसन् मातरं पश्यति। मातरं दृष्ट्वा सूर्यं पश्यति। पुनश्च सूर्यं दृष्ट्वा मातरं पश्यति। उल्लसतः शिशोः मुखात् अस्फुटः शब्दः निस्सरति। एवं शब्दज्ञानरहितः शिशुः प्रमुदितनेत्राभ्यां स्वाननोल्लासेन विस्मयेन सूर्यं दृष्ट्वा मातरं पश्यन् स्वान्तरोद्भूतजिज्ञासां व्यनक्ति। अनुक्तापि व्यक्ता एषा जिज्ञासा एवमस्ति। किमस्ति चित्रविचित्रं नानाकारमेतद् सर्वम्? तत् किमस्ति ज्योतिर्मयं दिव्याभम्? अम्बापि शिशोः आननोल्लासेन, नेत्राभ्यां विकासेन, क्रियाकलापेन च शिशोरन्तरवर्ति-जिज्ञासामनुमन्य प्रमुदिता ज्ञापयति। दिव्याभः ज्योतिर्मयः सः भगवान् भुवनभास्करः अस्ति। एते वृक्षाः सन्ति। वृक्षे हरित् — पर्णानि सन्ति। नूतनकिसलयाः सन्ति। यद्यपि शिशुः किमपि शब्दं शब्दार्थं वा न जानाति। किन्तु मातुः अङ्गुलिर्निदिष्टाम्— आकृतिं पश्यति शब्दञ्च शृणोति। एवञ्च शनैः शनैः आकृतिं पश्यन् तदनुशब्दं शृण्वन्, आकृतिं दृष्ट्वा रूपं दृष्ट्वा, शब्दं स्मरति, नाम स्मरति। तथैव शब्दं श्रुत्वा नाम श्रुत्वा, आकृतिं स्मरति रूपं स्मरति। एवं शनैः शनैः मात्रा नामरूपसंस्कारं प्राप्नुवन् किञ्चिद्शब्दाभिव्यक्त्यात्मिकां वर्षात्मिकामवस्थां प्राप्य स्फुटतया स्वीयां जिज्ञासां व्यनक्ति। यथा गच्छन्तीं लघुकृष्णाकृतिं भूमौ पश्यन् मातरम् पृच्छति। एतत् किम्? माता वदति एषा पिपीलिका। पुनश्च उद्याने विकसितानि पुष्पाण्यवलोक्य शिशुः वदति। एतत् किम्? माता—एतत् पुष्पम्। शिशुः— तत् किम्? माता तदपि पुष्पमेव। तदा बालकः आकृतिभेदं पश्यन् पुनः पूर्वपुष्पविषये अङ्गुलिनिर्देशेन प्राबल्येन पृच्छति, तर्हि एतत् किम्? मातापि तस्य समाधानं करोति। एतत् जपापुष्पं, तत् कुन्दपुष्पम् एवं नामरूपैः अव्याकृतं जगत् व्याकृतं भवति। किन्तु शिशौ मूलोल्लासात्मिका या जिज्ञासा आसीत् यत् सूर्ये दिव्याभः प्रकाशः कुतः कथम् वा? किसलयेषु अङ्कुरायमाणः कः जागर्ति? पुष्पेषु कः उल्लसति? येन ममान्तः ह्लादते? अस्याः जिज्ञासायाः किमपि समाधानं न जातम्। नामरूपेऽनुस्यूतं यच्चैतन्यमस्ति तद्विषये सः किमपि न ज्ञातवान्। गच्छन्तीं पिपीलिकां गमनक्रियासामर्थ्यात्मकं किमस्तीति न ज्ञातवान्।

एतद्विषयमुद्घाटयन्ती श्रुतिः एवमस्ति—

**''तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यामेव व्याक्रियत-असौनामायमिदं रूप इति। तदिदमप्येतर्हि। नामरूपाभ्यामेव व्याक्रियतेऽसौनामायमिदं रूप इति।''[1]**

.तद्धेदं तदिति सृष्ट्यादौ कल्पारम्भकाले, परोक्षत्वात् सर्वनाम्ना प्रत्यक्षाभिधानेन इदमित्यभिधीयते। भूतकालसम्बन्धित्वात् अव्याकृतस्वरूपो जगतः सुखग्रहणार्थमैतिह्यप्रयोगः ''ह'' शब्दः। इदमिति व्याकृतनामरूपात्मकं जगत्। तदिदं शब्दयोः परोक्षप्रत्यक्षावस्थाजगद्वा-चकयोः सामानाधिकरण्यादेकत्वमेव परोक्षप्रत्यक्षावस्थस्य जगतोऽवगम्यते। तदेवंभूतं जगत् सृष्ट्यादौ- अव्याकृतमासीत्। तन्नामरूपाभ्यामेव नाम्ना रूपेणैव च व्याक्रियत। अर्थात् परस्परव्यवहारार्थं ज्ञातृभिः स्वयमेव तस्मिन् सृष्ट्यारम्भकाले विविधाकृतिमवलम्ब्य विविधशब्दाभिधानं कृतम्। तदेवं असौ नामायमिदं रूपमिति। एवं विविधैः शब्दैः नाम्नां विविधाकृतिं विविधं रूपं व्याकृतम्। सा नामरूपा शब्दरूपा वागेव भाषणात् भाषा। असौ ''नामा'' इति सर्वनाम्ना श्रुतिः नाममात्रं व्यपदिशति। देवदत्तो यज्ञदत्त इति वा नाम अस्य इत्यसौ नामायम्। इदं शुक्लमिदं कृष्णं वा रूपमस्य इतीदं रूपम्। तदिदमव्याकृतं वस्तु एतर्हि एतस्मिन्कालेऽपि नामरूपाभ्यामेव व्याक्रियते असौनामायमिदं रूप इति। अस्माकमन्येषां प्राणिनामपि च समग्रमेव ज्ञानं नामरूपात्मकमेवास्ति। जगतः सकलो व्यवहारः नामरूपात्मकेन ज्ञानेनैव प्रचलन्नस्ति। जागतिकाः नामरूपात्मकेन ज्ञानेनैव स्वात्मानं ज्ञानिनं मन्यमानाः दृश्यन्ते। किन्त्वत्र सर्वत्र नामरूपे विद्यमानमिच्छाज्ञानक्रियात्मकं उन्मिषत् विकसत् विजानत् यच्चैतन्यात्मकं तत्त्वं वर्तते तद्विषये ते किमपि न हि जानन्ति। तमेव विज्ञापयन् निर्दिशन्ती श्रुतिः वक्ति अग्रे—

**''स एष इह प्रविष्टः। आ नरवाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः स्याद्विश्वम्भरो वा विश्म्भरकुलाये तं न पश्यन्ति। अकृत्स्नो हि स प्राणन्नेव प्राणो नाम भवति। वदन् वाक्, पश्यँश्चक्षुः, शृण्वञ्श्रोत्रं, मन्वानो मनस्, तान्यस्यैतानि कर्मनामान्येव। स योऽत एकैकमुपास्ते न स वेदाकृत्स्नो ह्येषोऽतएकैकेन भवत्यात्मेत्येवोपासीतात्र ह्येते सर्वं एकं भवन्ति। तदेतत्पदनीयमस्य सर्वस्य यदयमात्मानेन ह्येतत्सर्वं वेद। यथा ह वै पदेनानुविन्देदेवं कीर्तिं श्लोकं विन्दते य एवं वेद।''[2]**

स एष व्याकर्ता इह नामरूपाभ्यां व्याकृते लोके प्रविष्टः समाविष्टः जिज्ञासुरूपेण, व्याकर्त्रात्मना, विज्ञात्रात्मना ज्ञानात्मना च। कथं प्रविष्टः इति वक्ति श्रुतिः आ नखाग्रेभ्यः

1. बृहदारण्यकोपनिषद्, 1/4/7.
2. बृहदारण्यकोपनिषद्, 1/4/7.

नखाग्र-भागादारभ्य आ समन्तात् शिखापर्यन्तं चैतन्यात्मना। यथा क्षुरः क्षुरधाने क्षुरावरणे, खड्गः खड्गकोषे वा अवहितः प्रवेशितः, क्षुरावरणे आवृतः क्षुरः न हि दृश्यते। किन्तु आसमन्तात् आवरणाभ्यन्तरे तस्यैव उपस्थितिः भवति। यथा वा खड्गकोशे प्रविष्टः खड्गः कोशाभ्यन्तरे आसमन्तात् विद्यते एव। तथापि क्षुरावरणे क्षुरात् खड्गकोशे खड्गाद्वा किञ्चिद् स्थानं रिक्तमपि भवितुं शक्नोति। अतस्ततोऽप्यन्तरतरमुदाहरति श्रुतिः। यथा वा विश्म्वभरोऽग्निः विश्वस्य भरणात् विश्वम्भरः कुलाये नीडे अग्निः काष्ठादौ अवहितः स्याद्। तत्र हि सः घर्षणादुपलभ्यते। यथाग्निः काष्ठादौ सर्वतो व्याप्य अवस्थितः तथैव नामरूपात्मना व्याकृतं देहं संव्याप्यावस्थित आत्मा जिज्ञासुः व्याकर्ता विज्ञाता। तत्र हि सः प्राणनादिक्रियावान् दर्शनादिक्रियावाञ्श्चोपलभ्यते। तस्मात्तत्रैवं प्रविष्टं तमात्मानं प्राणनादिक्रियाविशिष्टं जनाः न पश्यन्ति।

तत्र प्राणनादिक्रियाविशिष्टस्यादर्शने हेतुमाह— अकृत्स्नोऽसमस्तो हि यस्मात्स प्राणनादिक्रियाविशिष्टः। प्राणन्नेव प्राणनक्रियामेव कुर्वन् प्राणो नाम भवति। तथैव वदन् वदनक्रियां कुर्वन् वक्तीति वाक्, पश्यन् दर्शनक्रियां कुर्वन् चक्षुः, चष्ट इति चक्षुः, शृण्वन् श्रवणक्रियां कुर्वन् शृणोति इति श्रोत्रम्। मन्वानः मननक्रियां कुर्वन् मनुत इति मनः। ज्ञानशक्तिविकासानां साधारणं करणं मनो मनुतेऽनेनेति। आत्मैष कर्ता समन्वानो मन इत्युच्यते। तान्येतानि प्राणवाक्चक्षुःश्रोत्रमनांसि अस्यात्मनः कर्मनामानि न तु आ समन्तादात्मवस्तुप्रकाशकानि। एवमात्मा प्राणनादिक्रियया तत्क्रियाजनितप्राणादिनामरूपाभ्यां व्याक्रियमाणः प्रकाशमानोऽपि आसमन्तात् न प्रकाशते। स योऽतोऽस्मात्प्राणनादि क्रियासमुदायाद् एकैकं प्राणं चक्षुः मन इति वा विशिष्टमनुपसंहृतेतरविशिष्टक्रियात्मकं आत्मानमुपास्ते मनुते न स वेद, न स जानाति आत्मा। प्राणवाक्चक्षुःश्रोत्रमनसादिना एकैकेनोक्तः एष आत्मा असम्पूर्णः भवति। तर्हि कथं वेद? इत्याह — आत्मेत्येव, आत्मेति — प्राणादीनि विशेषणानि यान्युक्तानि यस्य स आप्नुवन्स्तानि अतः "आत्मा" इत्युच्यते। स तथा समस्तविशेषोपसंहारी सन् सम्पूर्णः भवति। सः वस्तुमात्ररूपेण हि प्राणाद्युपाधिविशेषक्रियाजनितानि विशेषणानि व्याप्नोति। तथा चान्यत्र श्रुतिः— "**ध्यायतीव लेलायतीव**"[1] इति। तस्मादात्मेत्येवोपासीत। अत्रास्मिन्नात्मनि हि विशिष्टकर्मणा नामरूपाभ्याञ्च व्याकृताः प्राणादयः सर्वमेकं भवन्ति।

तेदतत् प्रकृतमेव पदनीयं गमनीयम्। "अस्य सर्वस्य" इत्यत्र निर्धारणार्था षष्ठी। अस्मिन्सर्वस्मिन् प्राणादिषु यदयमात्मा। प्राणात्मा, वक्ता, द्रष्टा, श्रोता, मन्ता, चात्मा। यथाह वै लोके पदेन, गवादिखुराङ्कितो देशः पदमित्युच्यते तेन पदेन नष्टमपेक्षितं पशुं पदेनान्विष्यमाणोऽनुविन्देल्लभेत। एवं प्राणादिषु प्राणन्, वदन्, पश्यन्, शृण्वन्, मनन्

---

1. बृहदारण्यकोपनिषद्, 4/3/7.

यच्चैतन्यात्मा विद्यते तेन चैतन्येन स्वरूपगवेषणया आत्मानमनुविन्देत। य एवं वेद यः कोऽपि एवं प्रकारेण आत्मानं वेद सः आत्मनः सर्वप्रकाशात्मिकां कीर्तिं श्लोकं तथ्यात्मकं स्वरूपं विन्दते लभते।

एवं प्रकारेण आदावव्याकृतमिदं जगत् नामरूपाभ्यामेव व्याकृतम्। तथा च विविधैः कर्मभिः कर्मनामानि जातानि प्राणवाक्चक्षुःश्रोत्रमन आदीनि। पुनश्च चित्रविचित्रं नानाकारमिदमवलोक्य तद्विज्ञानविषयिणी या उत्कण्ठा जाता तया उत्कण्ठया कीदृशः ज्ञानात्मकः प्रयासः संजातः? प्रायश एवं दृश्यते यत् प्रथमतया जिज्ञासा दृश्यमानानां वस्तुविषयाणां विज्ञानाकाङ्क्षिणी भवति सैव जिज्ञासा सूक्ष्मतां गच्छन्ती सर्वत्र गतिमती पश्यन्ती चैतन्यानुरोधिनी भवति। एतद्विषये ऋषिवामदेवमुखादृग्वेदः एवमुद्घाटयति—

**अयमिह प्रथमो धायि धातृभि र्होता यजिष्ठोऽध्वरेष्वीडयः।**
**यमप्नवानो भृगवो विरुरुचुः वनेषु चित्रं विभ्वं विशे विशे॥**[1]

अन्वयः — इह धातृभिः वनेषु विभ्वं चित्रं प्रथमः धायि। अध्वेरषु अयं यजिष्ठः ईडयः होता। यं भृगवः अप्नवानः विशे विशे विरुरुचुः।

इहेति अस्मिन् जगति धातृभिः ज्ञानधारणसामर्थ्यसम्पन्नैः विद्वद्भिर्जनैः, वनेषु वननीयेषु अरण्येषु, नानाकारेषु प्रसृतेषु दृश्यमानेषु लोकेषु विभ्वं ('वि' उपसर्गपूर्वक 'भू' सत्तायामिति धातोर्बाहुलकाद् औणादिकः 'वन्' स च ङित्) चैतन्यविद्याव्याप्तं, चित्रमाश्चर्यगुणयुक्तं नानाविधमद्भुतं विज्ञानम् प्रथमः धायि (वैदिकः लुङ् लकारः) ज्ञानधारणात्मकोऽयं प्रथमः धर्मः अधीयत। तदेवं निश्चिते काले अहोरात्रादारभ्य ऋतुमासवर्षात्मकं प्रकृतौ स्वाभाविकं परिवर्तनम्। तत्रोद्भवद्वस्तूनि। जीवेषु ऋतूनां प्रभावः। प्राणिषु पारस्परिकी आत्मीयता। तैः आत्मरक्षार्थं क्रियमाणाः आहारप्राप्तिनीड-निर्माणाद्युपायाः। जीवानां वैविध्यम्। भिन्नतया सर्वेषामाहारविहाराद्यावश्यकता अपेक्षा च। तद्यथा यः बुभुक्षुः अस्ति सः स्वयं भुक्त्वैव तृप्तिमनुभवति। यः पिपासुः भवति सः स्वयं पीत्वैव सुखदायिनीं रसात्मिका — तृप्तिं प्राप्नोति। अन्येन कृतेन भोजनेन अन्यस्य क्षुधाशान्तिरन्येन कृतेन जलपानेन अन्यस्य पिपासाशान्तिर्न भवति कुत्रापि। एवं सर्वे प्राणिनः सर्वे मनुष्याः स्वातन्त्र्येण भिन्नतया स्वात्मानमनुभवन्ति। एवं प्राणिनां बहुत्वमनुभूयते प्राणिभिः मानवैश्च।

पुनश्च किञ्चिदेव गूढ़े प्रविष्टे ततः भिन्नोऽपि अनुभूयते। तद्यथा शिशोः क्षुधाव्याकुलतया अन्यया पीडया वा मातरि व्याकुलता पीडा च दृश्यते। एवमपि दृश्यते यदेकान्ते निर्जने दुर्घटनायां व्रणितं पीडितं दृष्ट्वा तस्य चीत्कारञ्च श्रुत्वा ततः

1. ऋग्वेदः, 4/7/1.

मार्गात् गच्छन्नपरिचितोऽपि जनः तत्तया पीडया व्याकुलतया स्वात्मन्यप्यनुभवति व्याकुलतामयीं संवेदनाम्। यया पीडिताय साहाय्यार्थं गच्छतोऽस्यात्मा एनं प्रेरयति। एषः गच्छन् पथिकः एनं पीडितं न जानाति। अनेन पीडितेन व्रणितेन सह गच्छतोऽस्य कोऽपि सम्बन्धः नास्ति। तथाप्यस्यैवात्मा एनं प्रेरयति व्रणिताय साहाय्यार्थम्। व्रणितस्य पीडया स्वात्मन्यप्यनुभवत्याकुलताम्। अस्पृष्टोऽस्त्येषः व्रणितः गच्छता। उभयोर्मध्ये पर्याप्तमन्तरालं वर्तते। तर्हि कथमायाति व्रणितस्य पीडा गच्छति जने? किं किमपि चेतनतत्त्वमेवमपि वर्तते यत् व्रणितेऽस्ति? अन्तरालेऽस्ति? अस्मिन् पथिकेऽप्यस्ति? नान्योऽन्यमनुभवति। आत्मैवानुभविता सर्वत्र। तर्हि किमेतत् चेतनतत्त्वमात्मनः एव गूढं रूपम्? किमेषः गूढात्मा व्रणितेऽस्ति? पथिकेऽस्ति? अन्तरालेऽप्यस्ति? उदयति सूर्येऽस्ति? अङ्कुरायमाणेषु किसलयेषु प्रस्फुटति? एष एव पुष्पेषु विकसति? एष एव दिव्याभः सूर्ये विभाति? पिपीलिकायां गमनसामर्थ्यमप्येष एव? एष एव प्रकृतौ उल्लसन् शिशौ ह्लादति? अत एव उल्लसितायां प्रकृतौ ममाप्यन्तः उल्लसति? निर्जने व्रणितस्य पीडा, समीपात् मार्गात् गच्छति पथिकेऽपि स्फुरत्यनेनैव?

तर्हि आत्मनः द्विविधं वा रूपम्? शारीरिकसुखदुःखक्षुत्पिपासानामनुभविता शरीरमात्रानुगन्ता सीमितात्मा, संकुचितात्मा जीवात्मा वा एकः? करुणायां परपीडामनुभवन् व्रणिते जने, अन्तराले, गच्छति पथिके सहैव स्फुरन्। शिशौ, मातरि, पुष्पे, प्रकृतौ किसलयेषु सूर्ये सहैव उल्लसन् गूढात्मा सर्वत्र चेतनत्वेन बृंहणाद्ब्रह्म। समष्टेरात्मा सर्वात्मा। सर्वत्र गतत्वात् परमत्वात् परमात्मा वा अपरः?

अथवा संकुचितात्मनोऽप्यात्मत्वादेषः गूढात्मा एव तत्त्वत आत्मा? एवं चैतन्यविद्याव्याप्तात् नानाविधादद्भुतविज्ञानादात्मविज्ञानात्मिका जिज्ञासा समर्थेषु महापुरुषेषु जागरिता। ततः तैः आत्मानुसन्धानं कृतम्।

## आत्मानुसन्धानं तत्त्वबोधश्च

एतदेवात्मानुसन्धानमुद्घाटयति श्रुतिः बृहदारण्यके—

**"ब्रह्म वा इदमग्र आसीत्। तदात्मानमेवावेत्। अहं ब्रह्मास्मीति। तस्मात्तत्सर्वमभवत्। तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्। तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवँ सूर्यश्चेति। तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति। तस्य ह न देवाश्च ना भूत्या ईशते। आत्मा ह्येषा स भवति।"**[1]

ब्रह्मेति वृद्धिं प्राप्नुवदेतदुपरोक्तप्रकारकं करुणायां संवेदनायामात्मनान्तरात्मतयानुभूतिपथमागच्छद्विज्ञानात्मा इदं ब्रह्म वै निश्चयेन अग्रे सृष्टौ सर्वत्र चेतनत्वेन

1. बृहदारण्यकोपनिषद्, 1/4/10.

विकसदासीत्। तद्विज्ञानात्मा ब्रह्म करुणायां संवेदनायामात्मनान्तरात्मतयानुभूतिपथमागच्छदपि स्पष्टतयाप्रकाशितत्वात् आत्मानं विज्ञातारमेवावेत् विदितवत्। एवं वा चिन्तनीयं यः निर्जने एकान्ते व्रणितस्य क्लेशः तत्र मार्गात् गच्छति पथिके अनुभूयमानः आसीत्। यः उदयति सूर्ये उदयन् मातुः अङ्के स्थितशिशौ ह्लादितः आसीत्। यः विकसति पुष्पे विकसन् शिशौ तदनुमातरि उल्लसन् आसीत्। यः प्रस्फुटत्सु किसलयेषु प्रस्फुटन् शिशौ जिज्ञास्यमानः आसीत्। यः शिशौ जिज्ञासायां जागरन् मातरि विज्ञातृतया नामरूपाभ्यां व्याकुर्वन् आसीत्। तद्ब्रह्म आत्मानमेव अवेत् विदितवत्। सीमितात्मानः सीमानमतिक्रम्य निस्सीमे परमे आत्मनि स्थितवत्। अहं ब्रह्मास्मीति। अहमेव सर्वस्मिन् विज्ञानात्मतया बृंहन्नस्मि। तस्मात् तत्त्वतः स्वस्वरूपप्रकाशात् तत् विज्ञानात्मा ब्रह्म सर्वमभवत्। तत् तदात्मतया सर्वात्मतया विकसद्ब्रह्म यः कोऽपि सर्वोऽपि देवानां द्योतनवतां मध्ये प्रत्यबुध्यत प्रतिबुद्धवानात्मानं यथोक्तेन विधिना स एव प्रतिबुद्धात्मा तत् सर्वमभवत्। तथर्षीणां तथा मनुष्याणां च मध्ये यः कोऽपि यथोक्तविधिना प्रतिबुद्धवानात्मानं स एव प्रतिबुद्ध आत्मा सर्वमभवत्। एतस्या ब्रह्मविद्यायाः सर्वभावापत्तिः फलमित्येतस्यार्थस्य दार्ढ्याय मन्त्रानुदाहरति श्रुतिः। तद् सर्वात्मतया सर्वस्मिन् बृंहद् ब्रह्म हि एतत् स्वात्मा एवं स्वात्मानमेव सर्वस्मिन् पश्यन्ननुभवन् सर्वात्माभवत्। "सर्वमहमस्मि" इति परमात्मदर्शनादेव ऋषिर्वामदेवाख्यः प्रतिपेदे प्रतिपन्नवान्। ब्रह्मात्मदर्शने सर्वात्मदर्शने परमात्मदर्शनेऽवस्थित एतान्मत्रान्ददर्श—

**अहं मनुरभवं सूर्यश्चाऽहं कक्षीवाँ ऋषिरस्मि विप्रः।**
**अहं कुत्समार्जुनेयं न्यृञ्जेऽहं कविरुशना पश्यता मा॥** इत्यादीन्।[1]

सेयं ब्रह्मविद्यया सर्वभावापत्तिरासीन्महतां वामदेवादीनां महर्षीणां वीर्यातिशयात्। नेदानीं वर्तमानकालीनानां मनुष्याणामल्पवीर्यत्वादिति स्यात्कस्यचिद्बुद्धिः तदुत्थापनायाह—

तदिदं प्रकृतं ब्रह्म यत्सर्वभूतानुप्रविष्टं दृष्टिक्रियादिलिङ्गम् एतर्हि एतस्मिन् वर्तमानकालेऽपि यः कश्चिद् यथोक्तविधिना स्वात्मनि प्रविश्य सर्वस्मिन्नात्मानं वेद सः परमात्मविज्ञानात् सर्वं भवति। न तु महावीर्येषु वामदेवादिषु हीनवीर्येषु वा वार्तमानिकेषु मनुष्येषु वा ब्रह्मणः विशेषः तद्विज्ञानस्य वास्ति।

वर्तमानकालीनाः जनाः स्वात्मना स्वात्मनि सर्वात्मसाधनायां परमात्मसाधनायां बाह्यव्यवधानस्य शङ्कां कुर्वन्ति। तन्निराकरणाय श्रुतिराह— 'तस्य ह' इति, यथोक्तेन विधिना सर्वात्मविज्ञातुः देवाः महावीर्या अपि अभूत्य अभवनाय ब्रह्मसर्वभावस्य नेशते न समर्थाः भवन्ति। अन्येषां का कथा। केन कारणेन महावीर्या देवा अपि आत्मविदः अहितकरणेऽसमर्थाः भवन्ति? इत्युद्घाटयति श्रुतिः — "एषः स्वात्मना स्वात्मनि ब्रह्मणि परमात्मनि प्रविष्टः सर्ववित्सर्वात्मा एव भवति। एवं प्रकारेण एतेषां महावीर्याणां समेषामपि

---

1. ऋग्वेदः, 4/26/1 तः 4/27/5 पर्यन्तान् मन्त्रान्।

स आत्मवित् आत्मा एव भवति। कोऽपि आत्मनो हितमेवेच्छति न त्वहितम्। अन्तरतरत्वात् प्रियतमोऽयमात्मा सर्वेषाम्। तथा च श्रुतिः —

**"तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा। स योऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात् 'प्रियं रोत्स्यीति', ईश्वरो ह तथैव स्यादात्मानमेव प्रियमुपासीत। स य आत्मानमेव प्रियमुपास्ते न हास्य प्रियं प्रमायुकं भवति।"**[1]

## सर्वात्मभावादहिंसनीयानां सत्कर्मणां रचना

अध्वरेष्विति ध्वरति हिंसाकर्मा तत्प्रतिषेधः, अहिंसनीयेषु सत्कर्मसम्पादकक्रियामय-व्यवहारेषु, अहिंसनीयेषु धर्म्येषु व्यवहारेषु चायं सर्वात्मभावः यजिष्ठः — अतिशयेन सङ्गमयिता यष्टा, ईड्यः — नित्योस्तोतव्योऽन्वेष्टव्यश्च पूजाऽर्हः, होता - सत्यस्य ग्रहीता ग्राहयिता च सत्कर्मसाधकः विपरीतभावानां होमकर्ता च विद्यते।

यमिति वननीयेष्वरण्येषु नानाकारेषु प्रसृतेषु दृश्यमानेषु लोकेषु चैतन्यविद्याव्याप्तमाश्चर्यगुणयुक्तं नानाविधमद्भुतं विज्ञानं ज्ञानधारणसामर्थ्यसम्पन्नैः जनैः धृतम् तं विज्ञानमप्नवानः कर्मणि क्रियमाणः अहिंसनीयकर्मणां सम्पादनं कुर्वन्तः अप्नान् विद्यासन्तानान् कुर्वन्तश्च (अत्र "अन" इति कमनामसु[2] अपत्यनामसु[3] च पठितं निघण्टौ। आप्लृ व्याप्तौ धातो; **"आपः कर्माख्यायां ह्रस्वो नुट् च"**[4] इत्यनेन उणादिसूत्रेण 'असुन्' प्रत्यये विकल्पेन नुडागमश्च "अप्नः" रूपम्। आप्यते सुखं येन इति विग्रहः। "अप्नः" इति प्राति पदिकात् **"तत्करोति तदाचष्टे"**[5] इत्यनेन वार्तिकेन करोत्यर्थे 'णिच्' ततो **"अन्येभ्योऽपि दृश्यन्ते"**[6] इत्यनेन वार्त्तिकेन 'वनिप्' प्रत्यये प्रथमा बहुवचने रूपम्) भृगवः विद्ययाविद्यायाः भर्जकाः परिपक्वविज्ञानाः सर्वात्मभावसम्पन्नाः विद्वांसः विशे विशे प्रजायै प्रजायै (विशः मनुष्यनामसु पठितम्[7], आद्या हीमाः प्रजाः विशः,[8] तस्माद् ब्रह्म च क्षत्रं च विशि प्रतिष्ठिते[9] एवं विशः प्रजाः तस्मै) जनाय

---

1. बृहदारण्यके, 1/4/8.
2. निघण्टुः, 2/1.
3. निघण्टुः, 2/2.
4. उणादिः, 4/208.
5. पा. अष्टाध्यायी सूत्रवार्तिक, 3/1/26.
6. पा. अष्टाध्यायी सूत्रवार्तिक, 5/2/108.
7. निघण्टुः, 2/3/5.
8. शतपथब्राह्मणम्, 4/2/1/17.
9. शतपथब्राह्मणम्, 12/2/7/16.

जनाय विरुरुचुः विशेषेण अहिंसनीयसत्कर्मणां रचना कृतवन्तः प्रजायै प्रजायै गुरुशिष्य-परम्परया प्रकाशितवन्तश्च। वि + रुच दीप्तावभिप्रीतौ च भ्वादेर्धातोर्लिट् व्यत्ययेन परस्मैपदम्।

## सर्वात्म भावापन्नस्य सर्वभूतहितत्वमार्त्तानामभिरक्षणं हिंसकाय दण्डविधानञ्च

अत्रेदमप्यवधेयम्। यथा सर्वात्मभावापन्नस्य कोऽपि हितमेवेच्छति सर्वेषामात्मत्वात् तस्य। तथैव सर्वात्मभावापन्नः सर्वमात्मतया पश्यन् विजानन् सर्वभूतहिते रत एव भवति। आत्मनात्मन्यात्मनः हिंसायाः परिकल्पनाऽप्यसंभवात्। यथा रामायणे भगवान् रामः दण्डकारण्यं प्रविश्य तापसाश्रममण्डलं ददर्श। आतिथ्यञ्च स्वीकृतवान्।—

कुशचीर परिक्षिप्तं ब्राह्म्या लक्ष्म्या समावृतम्।
यथा प्रदीप्तं दुर्दर्शं गगने सूर्यमण्डलम्॥
शरण्यं सर्वभूतानां सुसम्मृष्टाजिरं सदा।
मृगैर्बहुभिराकीर्णं पक्षिसंघैः समावृतम्॥
समिद्भिस्तोयकलशैः फलमूलैश्च शोभितम्।
आरण्यैश्च महावृक्षैः पुण्यैः स्वादुफलैर्वृतम्॥
फलमूलाशनैर्दान्तैश्चीरकृष्णाजिनाम्बरैः।
सूर्यवैश्वानराभैश्च पुराणैर्मुनिभिर्युतम्॥
पुण्यैश्च नियताहारैः शोभितं परमर्षिभिः।
तद् ब्रह्म भुवनप्रख्यं ब्रह्मघोषनिनादितम्॥
अत्रैनं हि महाभागाः सर्वभूतहिते रताः।
अतिथिं पर्णशालायां राघवं सन्यवेशयन्॥[1]

तथैव महर्ष्यत्रिविषये, तस्य पत्न्यनसूयाविषयेऽपि च तत्रैव—

पत्नीं च तमनुप्राप्तां बृद्धामामन्त्र्य सत्कृताम्।
सान्त्वयामास धर्मज्ञः सर्वभूतहिते रतः॥
अनसूयां महाभागां तापसीं धर्मचारिणीम्।
प्रतिगृह्णीष्व वैदेहीमब्रवीदृषिसत्तमः॥
रामाय चाचचक्षे तां तापसीं धर्मचारिणीम्।
दशवर्षादनावृष्ट्यादग्धेलोकनिरन्तरम्॥

---

1. वाल्मीकिरामायणेऽरण्यकाण्डम्, प्रथमसर्गे, श्लोकाः क्रमशः 2,3,5,7,8,15.

यया मूलफले सृष्टे जाह्नवी च प्रवर्त्तिता।
उग्रेण तपसा युक्ता नियमैश्चाप्यलंकृता।।
देवकार्यनिमित्तञ्च यया सत्वरमाणया।
दशरात्रं कृता रात्रिः सेयं मातेव तेऽनघ।।
एवं ब्रुवाणं तमृषिं तथेत्युक्त्वा स राघवः।
सीतामालोक्य धर्मज्ञामिदं वचनमब्रवीत्।।
राजपुत्रि श्रुतं त्वेतन्मुनेरस्य समीरितम्।
श्रेयोऽर्थमात्मनः शीघ्रमभिगच्छ तपस्विनीम्।।[1]

तथैव महर्षिसुतीक्ष्णविषये भगवता रामेण स्वयमुक्तम्—

भवान् सर्वत्र कुशलः सर्वभूतहितेरतः।
आख्यातं शरभङ्गेन गौतमेन महात्मना।।[2]

तथैव भगवते रामाय सर्वे जनाः एवमेव कथयन्ति स्म यथोक्तं रामायणे—

कुलीनः सत्त्वसम्पन्नस्तेजस्वी चरितव्रतः।
रामः करुणवेदी च प्रजानां च हिते रतः।।
सानुक्रोशो महोत्साहः समयज्ञो दृढव्रतः।
इत्येतत् सर्वभूतानि कथयन्ति यशो भुवि।।[3]

तथैव रामानुजः लक्ष्मणः रामविषये परिचयं ददन् हनुमन्तं प्रति वदति—

शरण्यः सर्वभूतानां पितुर्निर्देशकारकः।
ज्येष्ठो दशरथस्यायं पुत्राणां गुणवत्तरः।।
अहमस्यावरो भ्राता गुणैर्दास्यमुपागतः।
कृतज्ञस्य बहुज्ञस्य लक्ष्मणो नाम नामतः।।[4]

किमधिकं सर्वात्मभावापन्नतैव रामायणकथायाः मूलमस्ति। तदेवं तपसा सर्वात्मभावमुपलभ्य नारदमुनेः रामकथां श्रुत्वा महात्मा वाल्मीकिः तमसातीरं जगाम। सन्मनुष्यमनोवदकर्दमं रमणीयं प्रसन्नाम्बु दृष्ट्वा तमसातीर्थे एवावगाहनेच्छुः सर्वतो विपुलं

1. रामायणम्, अयोध्याकाण्डम्, 117/7 तः 15 पर्यन्तम्।
2. रामायणम्, अरण्यकाण्डम्, 7/15.
3. रामायणम्, किष्किन्धाकाण्डम्, 17/17-18.
4. रामायणम्, किष्किन्धाकाण्डम्, 4/9,12.

वनं पश्यन् सर्वात्मभावापन्नः सः महात्मा विचचार। विचरन्नेव सः मुनिः स्वपार्श्वे एव चारुनिःस्वनमनपायिनं चरन्तं क्रौञ्चयोः मिथुनं ददर्श। तादात्म्येन चारुनिःस्वनं शृण्वन् विचरन्तं महर्षेः समक्षमेव वैरनिलयः पापनिश्चयः निषादः तस्मान्मिथुनादेकं पुंमासं जघान। महीतले शोणितपरीताङ्गं चेष्टमानं तं पक्षिणं निहतं दृष्ट्वा तस्य भार्या क्रौञ्ची करुणां गिरां रुरोद। एवं निषादेन निपातितं पक्षिणं दृष्ट्वा करुणवेदित्वात् धर्मात्मनः सर्वात्मनः ऋषेः कारुण्यं समपद्यत। तेन महात्मना स्पष्टतया अन्तरात्मन्येव दृष्टमनुभूतम्, "**अधर्मोऽयमिति**"।[1] रुदतीं क्रौञ्चीञ्च निशाम्य हृदयाद् निःसृतं वचनमिदम् —

**"मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।**
**यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्॥"[2]**

एवं सर्वात्मभावाद् कारुण्याद् धर्माधर्मनिश्चयपूर्वकाद् महर्षेः हृदयादनायासेन निःसृतोऽयं श्लोकः रामायणकथायाः मूलम्। महर्षेः सर्वात्मभावापन्नतां दृष्ट्वा तं मुनिपुङ्गवं द्रष्टुं महातेजा लोककर्ता स्वयं प्रभुः ब्रह्मा आजगाम। तं देवं ऋषिः पूजयामास। भगवान् ब्रह्मापि आसने उपविश्य ऋषिमासन- ग्रहणाय संदिदेश। ब्रह्मणा समनुज्ञातः सोऽप्यासने उपविशत्। तदा तस्मिन् साक्षाल्लोकपितामहे उपविष्टेऽपि तस्मिन् महात्मनि तच्चिन्तनमेव प्रचलन्नासीत्। तद्यथा रामायणे—

**तद्गतेनैव मनसा वाल्मीकिर्ध्यानमास्थितः।**
**पापात्मना कृतं कष्टं वैरग्रहणबुद्धिना॥**
**यत् तादृशं चारुरवं क्रौञ्चं हन्यादकारणात्।**
**शोचन्नेव पुनः क्रौञ्चीमुपश्लोकमिमं जगौ॥**
**पुनरन्तर्गतमना भूत्वा शोकपरायणः।[3]**

वाल्मीकेर्मुनेः एवं स्वात्मानुभूतिं परमात्मानुभूतिं पश्यन्ननुभवन् पितामहः मुनिपुङ्गवमुवाच —

**श्लोक एवास्त्वयं बद्धो नात्र कार्या विचारणा।**
**मच्छान्दादेव ते ब्रह्मन् प्रवृत्तेयं सरस्वती॥[4]**

अत्र मच्छन्दादिति मम सर्वात्मस्वरूपानुभवात् दर्शनादेव तव मुखादियं सर्वात्मसंवेदनामयी सरस्वती प्रवृत्ता। अतएव जनेष्वपि स्वात्मानुभूतिमयीं परदुःखापहरणाय

1. रामायणम्, बालकाण्डम्, 3/14.
2. रामायणम्, बालकाण्डम्, 3/15.
3. रामायणम्, बालकाण्डम्, 3/28,29,30.
4. रामायणम्, बालकाण्डम्, 3/31.

कारुण्यात्मिकां संवेदनां जागरयितुं त्वं कृत्स्नं रामस्य चरितं कुरु। तद्यथा रामायणे—

**रामस्य चरितं कृत्स्नं कुरु त्वं ऋषिसत्तम।**
**धर्मात्मानो भगवतो लोके रामस्य धीमतः॥**
**वृत्तं कथय धीरस्य यथा ते नारदाच्छुतम्।**
**रहस्यं च प्रकाशं च यद्वृत्तं तस्य धीमतः॥**
**रामस्य सह सौमित्रे राक्षसानां च सर्वशः।**
**वैदेह्याश्चैव यद्वृत्तं प्रकाशं यदि वा रहः॥**
**तच्चाप्यविदितं सर्वं विदितं ते भविष्यति।**
**न ते वागनृता काव्ये काचिदत्र भविष्यति॥**
**कुरु रामकथां पुण्यां श्लोकबद्धां मनोरमाम्।**
**यावत् स्थास्यन्ति गिरयः सरितश्च महीतले॥**
**तावद् रामायणकथा लोकेषु प्रचरिष्यति।**[1]

एवं प्रकारेण रामायणकथायाः उद्देश्योऽपि स्पष्टः। यदहिंसकप्राणिनां हिंसा-अधर्मः। आर्तानां निरपराधानां प्राणिनामभिरक्षणं हिंसकानां दण्डविधानञ्च धर्मः तथैव।

## विषयवासनाकर्षणं भिन्नतया विषयाणां सेवनञ्चात्मोपलब्धौ व्यवधानम्

**''अथ यो अन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति। न स वेद यथा पशुरेवं स देवानाम्। यथा वै वहवो पशवो मनुष्यं भुज्युरेवमेकैकः पुरुषोदेवान्भुनक्ति। एकस्मिन्नेव पशावदीयमानेऽप्रियं भवति, किमु बहुषु। तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः।''**[2]

अथ यः कश्चिदनात्मविदन्यामात्मनो व्यतिरिक्तां काञ्चिद्देवतामिन्द्रियमिन्द्रियविषयञ्च (द्योतयन्ति प्रकाशयन्ति विषयानत इन्द्रियाः देवताः तथैव द्योतते प्रकाशते इन्द्रियैरत इन्द्रिय-विषया अपि देवताः) उपास्ते सेवते, कथमुपास्त इति ज्ञापयति श्रुतिः, असौ विषयोऽस्मदादन्योऽहमन्योऽस्मि। अतोऽसौ विषयः मया सेवनीयः, इन्द्रियाय भोगप्रदानाय इन्द्रियसुखाय (इन्द्रेण जीवात्मना दुर्जयमिन्द्रियमथवा इन्द्रेण जीवेन जुष्टं संप्रीत्या सेवितमिन्द्रियम्)। इत्येवम्प्रत्ययः सन्नुपास्ते न स इत्थम्प्रत्ययो वेद विजानाति तत्त्वम्।

न स केवलमेवंभूतोऽविद्वानविद्यादोषवानेव, किं तर्हि? यथा पशुर्गवादिवाहन-दोहनाद्युपकारैरुपभुज्यते तथैव मनुष्योऽपि तत्तदिन्द्रियसुखाय पशुवद्दिवारात्रौ श्रमं करोति।

1. रामायणम्, बालकाण्डम्, 3/32 तः 36 पर्यन्तम्
2. बृहदारण्यकोपनिषद्, 1/4/10.

यथा ह वै लोके गो अश्वादयः पशवो मनुष्यं स्वामिनमात्मनोऽधिष्ठातारं भुञ्ज्युः पालयेयुरेवं बहु पशुस्थानीय एकैकोऽविद्वान्पुरुषो देवानिन्द्रियान्, देवानिति इन्द्रियद्वारेणैव मातृपितृपतिपत्नीपुत्राद्युपलक्षणार्थम् — भुनक्ति पालयतीति।

तत्र लोके बहुपशुमतो यथैकस्मिन्नेव पशावदीयमाने व्याघ्रादिनापह्रियमाणे महदप्रियं भवति, तथा बहुपशुस्थानीय एकस्मिन्पुरुषे पशुभावाद् व्युत्तिष्ठत्यप्रियं भवतीति। किमाश्चर्यं देवानामिन्द्रियाणां तद्द्वारेणैव मातृपितृपत्नीपुत्रादीनां तन्न प्रियम्, किं तत्?यदेतत् ब्रह्मात्मतत्त्वं सर्वात्मतत्त्वं मनुष्याः विद्युः। सर्वात्मकं स्वातन्त्र्यं मनुष्याः न प्राप्नुयुः। तदेव वदति महात्मा भर्तृहरिः —

**भोगा न भुक्ता वयमेव भुक्ताः**
**तपो न तप्तं वयमेव तप्ताः।**
**कालो न यातो वयमेव याताः**
**तृष्णा न जीर्णा वयमेव जीर्णाः॥**[1]

अतो देवताः इन्द्रियाणि विषयवासनाकर्षणरूपशृंखलाभिः पुरुषं पशूनिव विषयैः सह बध्नन्ति। ब्रह्मविज्ञानात्मके स्वातन्त्र्ये विघ्नमाचिकीर्षन्तीति।

वयं मनुष्याः। परतन्त्रतायामेवास्माकं जन्म। विषयवासनाकर्षणरूपशृंखलाभिः सहैवास्मिन् जगत्यस्माकमागमनम्। अतिसूक्ष्मबन्धनैः बद्धाः वयम्। स्वातन्त्र्यमस्माभिरर्जनीयम्। जीवने यत्किमपि श्रेयस्करं वर्तते तन्निर्मूल्यं न हि प्राप्तुं शक्यते। प्रकृतितः प्राप्ता परतन्त्रता दुर्भाग्यं नास्ति, अपितु स्वतन्त्रताया अनार्जनमेव दुर्भाग्यम्। न दोषः दासतायां जन्म, अपितु दासतायां मृत्युरेव दोषः। शृंखलाभिः बद्धेषु पशुषु, विषयवासनाभिः बद्धेषु मनुष्येषु च नास्ति भेदः। परमात्मानं प्राप्तव्यं चेत् वासनायाः शृंखलाः भञ्जनीयाः। ये वासनाभिः पराजिताः सन्ति नास्ति तेषां कृते परमात्मराज्यविजयम्, परमात्मनः स्वातन्त्र्यम्।

तावदेव मानवानां पशुत्वं यावदात्माभिमुखत्वं नास्ति। आत्माभिमुखत्वे सति समग्रमेव दृश्यं परिवर्तते। तदा कापि देवता किमपीन्द्रियम् — आत्मोपलब्धौ व्यवधानं न कुर्वन्ति। कर्तुमेव न हि शक्नुवन्ति। इन्द्रियरूपदेवतासु यत्किञ्चिदपि चैतन्यात्मकं कर्तृत्वं दृश्यते तत्सर्वमात्मनः एव। आत्मचेतनारहितानीन्द्रियाणि जडानि।

अतो आत्माभिमुखः मानवः इन्द्रियाणां प्रभुः भवति। इन्द्रियाणि चात्मप्रभोरुपासकानि। आत्मानुभूतेरेवोद्घोषः **"प्रज्ञानं ब्रह्म"**,[2] **"अहं ब्रह्मास्मि"**,[3]

---

1. भर्तृहरिकृतम् वैराग्यशतकम्, 7.
2. ऐतरेयोपनिषद्, 3/3, ऋग्वेदीयं ऐतरेय ब्राह्मणान्तर्गम्
3. बृहदारण्यकोपनिषद् 1/4/10; यजुर्वेदीयं शतपथब्राह्मणान्तर्गतम्

"**तत्त्वमसि**",[1] "**अयमात्मा ब्रह्म**",[2] अयमेव धारणीयं धर्मः। शरीरमेव सृष्टिरात्मैव धर्मः।

## 'वेदेषु सृष्टिप्रक्रियायां परमतत्त्वविमर्शः

वेदेषु सृष्ट्युत्पत्तिक्रमे मूलतत्त्वरूपेण सर्वत्रेदमेकमेव तत्त्वं स्वीकृतमस्ति, समग्रा सृष्टिः तत एव उद्भूता वर्ण्यते—

**एक एवाग्निर्बहुधा समिद्ध एकः सूर्यो विश्वमनु प्रभूतः।**
**एकैवोषा सर्वमिदं विभात्येकं वा इदं विबभूव सर्वम्।।**[3]

एष विषयः ऋग्वेदीयपुरुषसूक्तीयसृष्टिप्रक्रियायां स्पष्टमस्ति अतस्तस्य व्याख्यां करोमि। तत्र मन्त्रः —

**पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्।**
**उतामृतत्त्वस्येशानो यदन्नेनातिरोहति।।**[4]

अयं भावः — इदंतया ज्ञायमानं क्षित्यादिब्रह्माण्ड पर्यन्तं चित्रविचित्रं नानाकारं सृष्टिरूपं यदस्ति यद् भूतं यच्च भाव्यम्, भूतभविष्यद्वर्तमानकालिकं यदस्तित्वं तत्सर्वं पुरुष एव, न तु इदंतया ज्ञायमानं यदस्ति तदेव पुरुषः किन्तु तत्त्वमृतत्वस्य स्वानुभूतिरुपचितेः, जीवनस्य, ईशानः अधिष्ठाता आत्माऽस्ति। लोके दृश्यते यदेषा सृष्टिरन्नेनैव वृद्धिं प्राप्नोति तत्र पुरुषस्य किं प्रयोजनम् ? अत एव श्रुतिशब्देनोन्मील्यते रहस्यम् "**अन्नेनातिरोहति**" इत्यनेन । बीजादङ्कुरम् अंकुरात् किसलयम्, किसलयात् क्रमशः वृक्षपर्यन्तं नैरन्तर्येणान्नेन वृद्धिं प्राप्नुवन् योऽवस्थितः पुरुषः स परमात्मैव । अयमेव भावो दृश्यते यजुर्वेदस्य चत्वारिंशदध्यायेऽपि। यत् किञ्चिदप्यस्तित्वमस्ति तत्सर्वं ईशावास्यम्।[5]

उक्तकथनात् तथ्येऽविज्ञाते सति इत्थं भ्रमो भवितुं शक्नोति । एषा सृष्टिरेव परमसत्यत्वेनोपास्या, सृष्टिगतलौकिकसुखप्राप्तिरेव पुरुषार्थः तदर्थमेव प्रयासो विधेयः। अतोऽनुग्रहरूपपरमात्मनः निःश्वासरूपा श्रुतिः कारुण्येन वक्ति —

**एतावानस्य महिमातो ज्यायाँश्च पुरुषः।**
**पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि।।**

---

1. छान्दोग्योपनिषद्, 10/2, सामवेदीयं ब्राह्मणान्तर्गतम्
2. माण्डूक्योपनिषद् ( 2 ) अथर्ववेदीयब्राह्मणान्तर्गतम्
3. ऋग्वेदः 8/58/2.
4. ऋग्वेदः 10/90/2.
5. यजुर्वेदः, 40/1.

त्रिपादूर्ध्वमुदैत्पुरुषः पादोऽस्येहाभवत्पुनः।
ततो विष्वङ् व्यक्रामत्साशनानशनेऽभि॥
तस्माद्विराडजायत विराजो अधिपूरुषः।
सजातो अत्यरिच्यत पश्चाद् भूमिमथो पुरः॥[1]

अयं भावः — एतावद् विविधात्मकं जगदस्य पुरुषस्य परमात्मनो महिममात्रमेव तत्तु अतोऽधिकतमं ज्यायः। एतदुत्पत्तिविनाशात्मकं जगत् नित्यनूतनतां प्राप्नुवद्विश्वं भूतानि च तस्य पादमात्रमेव, त्रिपादन्तु दिवि प्रकाशात्मके द्युलोकेऽमृतम्। उत्कृष्टमेतत्त्रिपादं पुरुषस्य सर्वोत्तमरूपेण विज्ञेयम्। एकपादेनैवैषा सृष्टिरभवत्। ततः विश्वं व्याप्तं, स परमात्मैव, अशने—भोजनव्यापारयुक्तचेतनेषु, अनशने भोजनव्यापाररहितेषु जडेषु च अभितः सर्वतः समाविष्टोऽस्ति। तस्मात्परमात्मन एवैतद्विराड्ब्रह्माण्डरूपं शरीरमजायत उत्पन्नम्। स पुरुषोऽस्य विराट्शरीरस्याधिष्ठानम्। सः विराडुद्भूयाऽतिशयनं विस्तारं प्राप्नुवन् पश्चात् क्रमशः भूमिपुरशरीरादिकमभूत्। एषः विराडेव तस्य परमात्मनः सामर्थ्यं शक्तिर्वा। अथर्ववेदे परमात्मनो विराट्शक्तेः स्वरूपं सम्यक् वर्णितमस्ति। तद्यथा —

**यां प्रच्युतामनुयज्ञाः प्रच्यवन्त उपत्तिष्ठन्त उपतिष्ठमानाम्।**
**यस्या व्रते प्रसवे यक्षमेजति सा विराडृषयः परमे व्योमन्॥[2]**

**विराड् वा इदमग्र आसीत् तस्या जातायाः सर्वमबिभेदियमेवेदं भविष्यतीति।[3]**

निगमानामवलोकनाज्ज्ञायते यत्सृष्टेरुत्पत्तिपूर्वं क्षितिजलपावकगगनसमीरादिभेदो नासीत्, किन्तु तत्रातीव सूक्ष्ममेकं तत्त्वमासीत्, यस्याम्भोरूपेणोल्लेखो वर्तते। सूक्ष्माध्ययनेन प्रकाशते यत् परमचेतनाया एव चित्यात्मकः स्वावबोधः। प्रवहमानत्वात् अम्भोरूपेणोल्लेखो वर्तते। एतदर्थं विस्पष्टीकरणाय ऋग्वेदीयनासदीयसूक्तस्य व्याख्या तन्यते मया। तत्र मन्त्रः—

नासदासीन्नो सदासीत्तदानीं
नासीद्रजो नो व्योमा परो यत्।
किमावरीयः कुह कस्य शर्मन्नम्भः
किमासीद् गहनं गभीरम्॥[4]

---

1. ऋग्वेदः, 10/10/3-5.
2. अथर्ववेदः, 8/9/8.
3. अथर्ववेदः, 8/10/1.
4. ऋ. 10/129/4.

अयं भावः — तदानीं यदा सृष्टिरचना न हि आसीत् न असद् आसीत् न सद् आसीत् (भावाभावे परस्पराश्रयित्वात् तस्य भावाभावपरत्वम्) न रजः आसीद् न च व्योम आसीत्। यत् परः सूक्ष्मः श्रेष्ठः व्यापकः आच्छादकः आसीत् तत् किम्? तस्मिन् कुह कुत्र, कस्य शर्मन् गृहमासीत्? तद् गहनं गभीरमम्भः किमासीत्?

**न मृत्युरासीदमृतं न तर्हि**

**न रात्र्या अह्नआसीत्प्रकेतः।**

**आनीदवातं स्वधया तदेकं तस्मा-**

**द्धान्यन्न परः किञ्चनास ॥**[1]

तर्हि न मृत्युरासीत् नामृतमासीत्। सृष्ट्यभावे जीवनमरणयोः कल्पनाप्यसंभवा। कालमापकरात्रिदिवसयोः प्रकेतः प्रतीकः व्यवस्थापकः सूर्य एव न हि आसीत्। तत्र रात्रिदिवसयोः का कथा? अर्थात् कालविभागस्याभावः आसीत्।

प्रश्नानुपस्थाप्य समाधानं करोति श्रुतिः — तदेकं गहनं गभीरमम्भः स्वात्वबोधात्मकं चिद्रूपं तारल्यम् स्वधया— अहमात्मिकया स्वशक्त्या अहमित्येवं स्फुरत् अवातं वायुरहितं निष्कम्पं पूर्णतया द्वैतकल्पनारहितमानीद्—श्वासप्रश्वासमकरोत्। तस्मात् अन्यत् परं किञ्चन न आस।

**तम आसीत् तमसा गूढमग्रेऽप्रकेतं**

**सलिलं सर्वमा इदम्।**

**तुच्छ्येनाभ्वपहितं यदासीत्तपस-**

**स्तनहिनाजायतैकम्॥**[2]

अग्रे सृष्टेरव्यक्तावस्थायां तमसा गूढं तमः कल्पनातीतं बुद्ध्युत्तीर्णं रहस्यमासीत् **"सर्वमा इदं"** एतत् सर्वम् न अप्रकेतं निराकारमनिर्वचनीयं सलिलं स्वात्मस्फुरणरूपप्रवहमानं चैतन्यमासीत्। तत् चैतन्यं तुच्छ्येन अतिसूक्ष्मस्वात्मविमर्शेन **"आ भु अपिहितं"** समग्रतया आच्छादितमासीत्।

तत् तपसा महिना—अहंविमर्शात्मकस्वातन्त्र्यशक्त्या '**अहमिदम्**' इत्याकारक-एकत्वबोधोऽजायत।

**कामस्तदग्रे समवर्तताधि**

**मनसो रेतः प्रथमं यदासीत्।**

---

1. ऋ., 10/129/2.

2. ऋ., 10/129/3.

सतो बन्धुमसति निरविन्दन्

हृदि प्रतीष्या कवयो मनीषा॥[1]

अहंविमर्शात्मके पूर्णे अद्वैते ब्रह्मणि अग्रे सृष्टेः पूर्वम् सृष्टिसंरचनायाः कामः जायेत। एतदेव अधिमनसः अहंविमर्शात्मके स्वाधिष्ठाने प्रथमं रेतः सृष्टिसंरचनायाः वीर्यमासीत्। अत एव निगमसंहितासु सृष्टिकामनायुक्तस्य ब्रह्मणः हिरण्यगर्भनाम्ना प्रसिद्धि तद्यथा—

**हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्।**[2]

तत्र स्वयं पूर्णे अद्वैते कामनारहिते ब्रह्माणि सृष्टिः इच्छारूपः कामः संकल्पः संजातः। स्वयं पूर्णे अकामे कामना संजाता इति कथं तथा च अनुदितायां सृष्टौ अभावे अस्य भावस्य दर्शनं कथं केन कृतम्। एवं शङ्का मा भवतु एतदर्थमेव श्रुतिः वदति अग्रे—कवयः क्रान्तिद्रष्टारः सत्यसाक्षात्कृतः ऋषयः, मनीषा— हृदि स्वात्मविमर्शात्मकमनुत्तरामृतकुलमेव हृदयं यथोक्तं —

**तदुभययामलस्फुरितभावविसर्गमयम्।**

**हृदयमनुत्तरामृतकुलं मम संस्फुरतात्॥**[3]

तस्मिन् चिदात्मनि हृदि प्रतीष्य—अनुसंधाय अर्थात् तस्मिंश्चिदाकाशे परमात्मनि एव प्रविश्य स्वात्मतया एव तं विजानन् असति संकल्पविकल्पाभावात्मके स्वरूपे अहंविमर्शात्मकेन नित्यविमर्शस्वभावेन सतो बंधुम् इदंतया स्वसत्ताको भावः "**अहमिदम्**" एकमिदंविमर्शयुतम् (अत एव सतो बन्धुमसतीत्युक्तम्)। सृष्टिसत्त्वं निरविन्दन् ज्ञातवन्तः। अयमेव भावः व्यक्तः अभिनवगुप्तेन प्रत्यभिज्ञाविमर्शिन्यां मङ्गलाचरणे तदेवम् —

**निराशंसात्पूर्णादहमिति पुरा भासयति यद्**

**द्विशाखामासास्ते तदनु न विभङ्क्तुं निजकलाम्।**

**स्वरूपादुन्मेषप्रसरणनिमेषस्थितिजुषस्,**

**तदद्वैतं वन्दे परमशिव-शक्त्यात्मनिखिलम्॥**[4]

**श्रुतिरग्रे वक्ति**

**तिरश्चीनो विततो रश्मिरेषामधः-**

**स्विदासीदुपरिस्थिदासीत्।**

---

1. ऋ., 10/129/4.
2. ऋग्वेदः, 10/12/11; यजुर्वेदः, 13/4, 23/1; अथर्ववेद, 4/2/7.
3. तन्त्रालोकः, 1/1.
4. ईश्वरप्रत्यभिज्ञाविमर्शिन्याः मङ्गलाचरणम्

**रेतोधा आसन्महिमान आसन्त्स्वधा**

**अवस्तात् प्रयतिः परस्तात्।।**[1]

एषां प्रकाशविमर्शात्मकपरमात्मनः शिवशक्त्यात्मकस्य अद्वैतयुगलस्य रश्मिः विमर्शात्मिका स्वातन्त्र्यशक्तिः अधःस्वित् आसीत् कदाचित् सृष्टिप्रक्रियायां अधोमुखी अभवत्, कदाचित् ऊर्ध्वमुखी अभवत् अर्थात् इदंतायाः प्राबल्येन अधोमुखी कथिता, तत्र इदमहमित्याकारको विमर्शः। अहंतायाः प्राबल्येन ऊर्ध्वमुखी कथिता, तत्र अहमिदमित्याकारको विमर्शः। ततः रश्मिः तिरश्चीनः विततः। अनेनैव प्रकाशविमर्शात्मकस्य तृतीययामलबिन्दोरुत्पत्तिः। एवमेव परा सृष्टिः संजाता। तत्र रेतोधा आसन् स्वात्मावबोधरूपपरमात्मन आसन्, तस्य महिमानः स्वातन्त्र्यरूपा विमर्शात्मिका शक्तयः आसन्। स्वधा अवस्तात् इदंता न्यूना आसीत्, प्रयतिः परस्तात्, अहं विमर्शात्मक उल्लासः प्रयासः अधिक आसीत् अथवा शुद्धसृष्टिरेव अधिका आसीत्, अशुद्धसृष्टेः तु अल्पता एव आसीत्।

सृष्टिप्रक्रियाकथनप्रसङ्गे श्रुतिः पुनः प्रश्नानुपस्थाप्य समाधानं करोति —

**को अद्धा वेद क इह प्रवोचत्कुत**

**आजाता कुत इयं विसृष्टिः।**

**अर्वाग्देवा अस्य विसर्जनेनाऽथ**

**को वेद यत आबभूव।।**

**इयं विसृष्टिर्यत आबभूव**

**यदि वा दधे यदि वा न।**

**योऽस्याध्यक्षः परमे व्योमन्त्सो**

**अङ्ग वेद यदि वा न वेद।।**[2]

इह लोके कः सम्यक्तया वेद विजानाति, क इह प्रकृष्टेन अवोचत् यत् एतंत् सर्वं कुतः आजातः इयं विसृष्टिः विलक्षणा विविधाकारा विशिष्टा सृष्टिः कुत उद्भूता निःसृता। अस्याः सृष्टे विसर्जनेन जन्मना देवाः विद्वांसः क्रान्तिद्रष्टारः कवयः अर्वाक्पश्चाद् जाताः सन्ति। अथ—एतदनन्तरमस्यां स्थितौ को वेद कः वक्तुं शक्नोति को विजानाति यतः एषा सृष्टिः आबभूव संजाता। एवं प्रकारेण सृष्टेः परमकारणं परमात्मनः प्रत्यक्षविषये निरासा निवारणार्थम् अतिशयकारुण्येन श्रुतिः स्वप्रत्यक्षरूपतां व्यनक्ति।

इयं विसृष्टिः एषा विलक्षणा सृष्टिः यतः यस्मात् आबभूव आगतवती समुत्पन्ना वा। यदि (यद्) वा दधे यः अस्याम् एनां धारयति। यदि (यद्) वा न—अथवा

1. ऋ., 10/129/5.
2. ऋ., 10/129/6-7.

नापि धारयति। अयमत्राशयः परमात्मनः एव एषा सृष्टिरुद्भूता अत एव धारयति तथापि निर्विकारे स्वयंपूर्णे परमात्मनि अनया कोऽपि विकारो न हि संजातः, स्वात्मचमत्काररूपमेव तस्य महिममात्रमेव एषा सृष्टिः। अत एव नापि धारयति इत्युक्तम्। तत्तु सम्यगवधेयं शुक्लयजुर्वेदीयपूर्णमदादि मन्त्रे।[1] यः परमे व्योमन् परमं चिद् तस्मिन् आकाशे चिदाकाशे अस्याः सृष्टेः अध्यक्षः अधिष्ठाता स्वामी अस्ति। हे अङ्ग ! ज्ञातुकाम! स वेद जानाति यदि (यद्) वा—किं न वेद जानाति ? अर्थात् जानाति एव।

एवमिदं स्पष्टं यद् वेदेषु एकमेव मूलतत्त्वं स्वीकृतमस्ति। तदेवास्याः सृष्टेः मूलं कारणम्। तदेवैकं स्वधया— स्वातन्त्र्यशक्त्या एतद् सर्वं सृजति संहरति च। यथा च श्रुतिः —

**ते ध्यानयोगानुगता अवश्यन्**
**देवात्मशक्तिं स्वगुणैर्निगूढाम्।**
**यः कारणानि निखिलानि तानि**
**कालात्मयुक्तान्यधितिष्ठत्येकः॥[2]**

अस्य परमात्मनः महिमरूपा अस्ति एषा सृष्टिः। परमात्मन आत्मभूतां स्वगुणैस्सर्वज्ञत्वादिभिः सत्वादिभिः निगूढ़ां कार्यकारणविनिर्मुक्तपूर्णानन्दाद्वितीय-ब्रह्मात्मनैवोपलभ्यमानां परात्परतरां शक्तिमपश्यन्। परमात्मनः स्वातन्त्र्यशक्तिरूपा प्रथमा सृष्टिः, विराडिति— अपरनामधेया। परमात्मनः महिमरूपा एषा विराट् शक्तिः प्रकाशरूपपरमात्मनः विमर्शरूपा शक्तिः प्रकाशविमर्शात्मिका दिव्यमिथुनरूपा वर्णितास्ति। अस्या एव शक्तेः माया नाम्नापि ख्यातिः। यथावेदे—

**यां प्रच्युतामनु यज्ञाः प्रच्यवन्त उपतिष्ठन्त उपतिष्ठमानाम्।**
**यस्यां व्रतप्रसवे यज्ञमेजति सा विराड्ऋषयः परमे व्योमन्॥**
**अप्राणैति प्राणन प्राणतीनां विराट् स्वराज मभ्येति पश्चाद्।**
**विश्वं मृशन्तीमभिरूपां विराजे पश्यन्ति त्वे न त्वे पश्यत्येनाम्॥**
**को विराजं मिथुनत्वं प्रवेद ऋतून् क उ कल्पमस्याः क्रमान्।**
**को अस्याः कतिधा विदुग्धान् को अस्या धाम कतिधा व्युष्टीः॥**

1. पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥ यजुर्वेदीय ईशावास्योपनिषदः शान्तिपाठः।
2. श्वेताश्वतरोपनिषद्, 1/3.

इयमेव सा या प्रथमा व्यौच्छदास्वितरासु चरति प्रविष्टा।
महान्तो अस्यां महिमानो अन्तर्वधूर्जिगाय नवगज्जनित्री।।[1]
सोदक्रामत् सासुरानागच्छत् तामसुरा उपाह्वयन्त माय एहीति।
तस्या विरोचनः प्राह्लादिर्वत्स आसीदयस्पात्रं पात्रम् ।।
तां द्वि मूर्धान्योऽधोक् तां मायामेवाधोक्।
तां मायामसुरा उपजीवन्ति उपजीवनीयो भवति य एवं वेद।।[2]

यद्यपि वेदेषु क्षितिजलपावकगगनसमीरादीनां स्वतन्त्रतत्त्वरूपेणोल्लेखो नास्ति तथापि परमात्मरूपपरमतत्त्वात् सृष्टिप्रक्रियायामेतेषामुत्पत्तिक्रमः स्पष्टतया उपनिषत्सु दृश्यते। तद्यथा —

सत्यं ज्ञानमनन्तं ब्रह्म। यो वेद निहितं गुहायां परमे व्योमन्। सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति।

तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी। पृथिव्याः ओषधयः। ओषधीभ्योऽन्नम्। अन्नात्पुरुषः। स वा एष पुरुषोऽन्नरसमयः। तस्येदमेव शिरः। अयं दक्षिणः पक्षः। अयमुत्तरः पक्षः। अयमात्मा। इदं पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति।[3]

अन्नाद्वै प्रजाः प्रजायन्ते। याः काश्च पृथिवीं श्रिताः।
अथो अन्नेनैव जीवन्ति। अथैनदपि यन्त्यन्ततः।
अन्नं हि भूतानां ज्येष्ठम्। तस्मात्सर्वौषधमुच्यते।
सर्वं वै तेऽन्नमाप्नुवन्ति। येऽन्नं ब्रह्मोपासते ।
अन्नं हि भूतानां ज्येष्ठम्। तस्मात्सर्वौषधमुच्यते ।
अन्नाद्भूतानि जायन्ते। जातान्यन्नेन वर्धन्ते ।
अद्यतेऽत्ति च भूतानि। तस्मादन्नं तदुच्यते। इति।।[4]

## क्रमाद् स्थूलात् सूक्ष्मविज्ञानादात्मावबोधः

एवं प्रकारेण सच्चिदानन्दात् परमात्मनः आकाशाद्युत्पत्तिमारभ्य पुरुषशरीरोऽन्नरसमयः इति वर्णितमस्ति। तथैवात्रेदमपि स्पष्टं यत्— अज्ञाय पुरुषाय

1. अथर्ववेदः, 8/9/8 तः 11
2. अथर्ववेदः, 8/10/1 तः 4
3. तैत्तिरीयोपनिषद् ब्रह्मानन्दवल्ली, प्रथमोऽनुवाकः
4. तैत्तिरीयोपनिषद् ब्रह्मानन्दवल्ली, द्वितीयोऽनुवाकः

अन्नरसमयः एषः पुरुषशरीरमेवात्मा। किन्तु यः सूक्ष्मतया चिन्तयति सः झटिति एव जानाति यदेतद् विनाशि शरीरम् आत्मा भवितुं नार्हति। अपितु एतस्मादन्नसमयादन्योऽन्तर एव आत्मा भवितुमर्हति। क्रमविमर्शेन प्राणमयमात्मानं विजानाति। प्राणमयं कोशं विज्ञाय "**प्राणमयादन्योऽन्तर आत्मा**" इति विचिन्त्य मनोमयमात्मानं विजानाति। तथैव क्रमविमर्शेन मनोमयं कोशं विज्ञाय "**मनोमयादन्योऽन्तर आत्मा**" इति निष्कर्षं प्राप्नोति। पुनश्च क्रमेण स्वात्मविमर्शेन विज्ञानमयमात्मानं विजानाति। तदनन्तरं विज्ञानमयं कोशं विज्ञाय "**एतस्माद्विज्ञानमयादन्योऽन्तर आत्मा**" इत्यनुभवति। पुनश्च स्वात्मना स्वात्मानं गवेषयन् आनन्दमयमात्मानं विजानाति। तद्यथा —

**तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमयः। तेनैष पूर्णः। स वा एष पुरुष विध एव। तस्य पुरुषविधतामन्वयं पुरुषविधः। तस्य प्रियमेव शिरः। मोदो दक्षिणः पक्षः। प्रमोद उत्तरः पक्षः। आनन्द आत्मा। ब्रह्म पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति।**

**असन्नेव स भवति। असद्ब्रह्मेति वेद चेत्।**
**अस्ति ब्रह्मेति चेद्वेद। सन्तमेनं ततो विदुः॥ इति ॥**[1]

एवं प्रकारेण क्रमसाधनया अन्नमयकोशात् तदन्तरवर्ति प्राणमयम्। प्राणमयात् तदन्तरवर्ति मनोमयम्। मनोमयातदन्तरवर्तिविज्ञानमयम्। विज्ञानमयात् तदन्तरवर्ति—आनन्द-मयम्। आनन्दमयादानन्दात्मकमात्मानं परमात्मानं प्राप्नोति। यत्प्राप्य सर्वं प्राप्नोति। न किञ्चिद्वाञ्छति। यद्वा एतत्सुकृतम्। तथा च श्रुतिः—

**यद्वै तत्सुकृतं रसो वै सः। रसं ह्येवायं लब्ध्वानन्दी भवति। को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्यात्। एष ह्येवानन्दयाति।**

**यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। अथ सोऽभयं गतो भवति।**[2]

## निगमेषु स्त्रीपुंधारारूपेण सृष्टेः साधनायाश्च द्विधा प्रवाहः विद्यते

एषा समग्रा एव सृष्टिः स्त्रीपुंभेदात् द्विधाऽस्ति। अनेनैव भेदादेषा सृष्टिः गतिमती विद्यते। स्त्रीप्रकृतिः भिन्ना, पुरुषप्रकृतिश्च भिन्ना। अनयोः प्रकृतिभेदाद् विपरीताकर्षणं भवति। एनाकर्षणेनाकृष्टाः एते सम्मिल्य सृष्टिं जनयन्ति। कापि स्त्री स्वप्नेऽपि स्वात्मानं पुरुषं न पश्यति, तथैव कोऽपि पुरुषः स्वप्नेऽपि स्वात्मानं स्त्री न पश्यति। स्त्रीधारापुंधारारूपेण

---

1. तैत्तिरीयोपनिषद् ब्रह्मानन्दवल्ली, 5-6 अनुवाकः
2. तैत्तिरीयोपनिषद् ब्रह्मानन्दवल्ली, सप्तमोऽनुवाकः

सृष्टेः द्विधाविचारप्रसङ्गे आगमवचनम् —

**द्वे धारे स्वतन्त्ररूपत्वात्।**
**स्त्रीधारा पुंधारामयी कैवल्याधिकारिणी॥**[1]

यद्यप्यात्मनः पारमार्थिके स्वरूपे स्त्रीपुरुषभेदाभावः वर्तते तत्त्वतः सर्वात्मकत्वादात्मनः। तद्यथा—

**त्वं स्त्री त्वं पुमानसि त्वं कुमारः उत वा कुमारी।**
**त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः॥**[2]

तथापि साधनाकाले स्त्रीपुंसैः परमात्मनि स्त्रीपुंप्रकृत्यानुसारी एव भावना स्वाभाविकी। स्वात्मना स्वात्मानं पश्यन्ती स्त्री स्वात्मानं चितिस्वरूपां पश्यन्ती भवतु पुरुषश्च स्वात्मानं चिन्मयम्। अनेनैव कारणात् सर्वात्मत्वानुभूतेरभिव्यक्तिरपि स्त्रीपुंप्रकृत्यानुसारी एव भवति। तद्यथा आत्मानं सर्वात्मानं पश्यन्ननुभवन् ऋषिर्वामदेव; प्रतिपेदे—

**अहं मनुरभवं सूर्यश्चाऽहं कक्षीवाँ ऋषिरश्मि विप्रः।**
**अहं कृत्स्नमार्जुनेयं न्यञ्जे,ऽहं कविरुशना पश्यता मा॥**

इत्यादीन्।[3]

तथैव ऋषिका वागाम्भृणी आत्मानं सर्वात्मानं पश्यन्ती प्रतिपन्नवती। सर्वात्मदर्शने ब्रह्मात्मदर्शनेऽवस्थितवाक्सूतीयान् मन्त्रान् दृष्टवती। पुंधारायाः विशदं वर्णनं पूर्वमेव कृतं मया। अतः स्त्रीधाराया अभिव्यक्तेः स्पष्टीकरणाय वाक्सूक्तस्य व्याख्या क्रियते मया।

## अथ वाक्सूक्तम्

### प्रथमा ऋचा

**अहं रुद्रेभिर्वसुभिश्चरामि। अहमादित्यैरुत विश्वदेवैः।**
**अहं मित्रावरुणोभा विभर्मि। अहमिन्द्राग्नी अहमश्विनोभा॥**

अहमित्यादि वाक्सूक्तस्य द्रष्ट्री ऋषिका वागाम्भृणी सर्वात्मरूपा या जगत्कारणरूपा चितिः तद्रूपा भवन्ती सर्वात्मानुभूतिमुल्लसन्ती वक्ति[4] अहं रुद्रेभिः — दशप्राणैः एकादशेन

1. कर्ममीमांसादर्शनधर्मसूत्रम्, 55-56.
2. श्वेताश्वतरोपनिषद्, 4/3.
3. ऋग्वेदः, 4/26/1 तः 4/27/5 पर्यन्तम्
4. ऋग्वेदः, 10/125/1 तः 8.

जीवात्मना[1] सह तेषां प्राणात्मना, वसुभिः उषितसर्वविद्यैः विद्वभिः सह विज्ञानात्मना आदित्यैः संवत्सरमासैः सह संवत्सरात्मना[2] उत विश्वदेवैः सर्वेषां प्रकाशकैः सूर्यरश्मिभिः[3] सह प्रकाशात्मना चरामि संचरमाणास्मि। अर्थात् यत्र कुत्रापि यत्किञ्चिदपि शक्तिमत्तास्ति ज्ञातृतास्ति कतृतास्ति तत्र सर्वत्र अहमेव तत्तदात्मना शक्तिमती जानन्ती कुर्वन्ती अस्मि।

मित्रावरुणौ प्राणापानौ[4] अहोरात्रौ[5] च उभावहमेव विभर्मि धारयामि।

इन्द्राग्नी ओजोवलं[6] तेजोवलं[7] वा उभौ, अश्विना व्याप्तिमन्तौ सूर्याचन्द्रमसौ[8] द्यावापृथिव्यौ[9] वा जलाग्नी वा वैद्यकविद्यानिपुणौ[10] विद्वान्सौ वा व्याप्तशुभगुणस्वभावौ स्त्रीपुरुषौ वा स्त्रीपुरुषात्मकमिदं सर्वं वा[11] तत्तदात्मना अहमेव धारयामि। मया मय्येव इदं सर्वं जगत्प्रकाशते। अत एव अहमेव इदं सर्वं धारयामि।

अथवा "अहं रुद्रेभिरिति" दुष्टान् रोदयद्भिर्प्रलयकाले संहारकर्तृभिरेकादश-रुद्राख्यदेवगणैः सह संहारकर्तृशक्तिरूपेण, वसुभिः वासहेतुभूतैः अष्टवस्वाख्यदेवगणैः सह पालयितृरूपेण, आदित्यैः सकलप्रकृतिप्रकाशकैः भूतानामधिपतिभिः द्वादशादित्याख्यकालावयवैः मासानामधिपतिदेवैः सह ज्योतिरूपेण उत एवं विश्वदेवैः-भूतेषु कर्मसम्पादकदशसंख्याकैः विश्वदेवाख्यदेवगणैः इन्द्रियाणामधिपतिभिः सह

---

1. "कतमे रुद्रा इति। दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदस्यान् मर्त्याच्छरीरादुत्क्रामन्त्यथ रोदयन्तीति। यद्रोदयन्ति तस्माद्रुद्रा इति।" शतपथब्राह्मणम्, 11/6/3/7.
2. "एष वै संवत्सरो य एष ( आदित्यः ) तपति। शतपथब्राह्मणम्, 14/1/1/29.
3. "रश्मयो ह्यस्य विश्वेदेवाः"। शतपथब्राह्मणम्, 3/7/3/6.
4. "प्राणापानौ मित्रावरुणौ"। ताण्ड्यमहाब्राह्मणम्, 6/10/5.
   "प्राणो वै मित्रोऽपानो वरुणः।" शतपथब्राह्मणम्, 8/4/2/6.
5. "अहोरात्रौ वै मित्रावरुणौ"। ताण्ड्यब्राह्मणम्, 25/10/10.
6. "ओजोबलं वा एतौ देवानां इन्द्राग्नी"। तैत्तिरीयब्राह्मणम्, 1/6/4/4.
7. "बलं वै तेज इन्द्राग्नी"। गोपथब्राह्मणम् उ. 1/22
8. निरुक्तम्, 12/1.
9. "इमे ह वै द्यावापृथिवी प्रत्यक्षमश्विनाविमे।" शतपथब्राह्मणम्, 4/2/2/14.
10. "अश्विनौ वै देवानां भिषजौ"। ऐतरेयब्राह्मणम्, 1/18.
11. "इन्द्राग्नी वा इदं सर्वम्।" शतपथब्राह्मणम्, 4/2/2/14.

तत्तत्कर्मसम्पादकसामर्थ्यशक्त्यात्मनाहमेव चरामि विचरामि।[1] अहमेव उभौ मित्रावरुणौ, उभौ इन्द्राग्नी, उभौ अश्विनौ धारयामि।

## द्वितीया ऋचा

**अहं सोममाहनसं विभर्मि। अहं त्वष्टारमुत पूषणं भगम्।**
**अहं दधामि द्रविणं हविष्मते। सुप्राव्ये यजमानाय सुन्वते।।**

आहनसं शत्रूणामाहन्तारं दिवि वर्तमानं देवतात्मानं सोममहमेव विभर्मि धारयामि। त्वष्टारं दुखानां छेदकं सर्वपदार्थानां विभाजितारं वियोगसंयोगादिकर्तारं देवमु उतापि च पूषणं पुष्टिकर्तारं पुरुषं देवं वा पुष्टिकरमोषधिगणं पुष्टिकरं भोगञ्च भगं भजते सुखानि येन तच्चक्रवर्त्यादिराज्यधनं सकलैश्वर्यप्रदं व्यवहारञ्च, ऐश्वर्यवन्तमीश्वरं वाहमेव धारयामि।

हविष्यते हविभिर्युक्ताय, सुप्राव्ये शोभनहविर्प्रापयित्रे सुन्वते — सोमाभिषवं कुर्वते सर्वविद्यासिद्धान्तनिष्पादयते यजमानाय वा द्रविणं सत्कर्मफलरूपं धनमहमेव दधामि धारयामि ददामीत्यर्थः।

## तृतीया ऋचा

**अहं राष्ट्री संगमनी वसूनाम्। चिकितुषी प्रथमा यज्ञियानाम्।**
**तां मा देवा व्यदधुः पुरुत्रा। भूरिस्थात्रां भूर्यावेशयन्तीम्।।**

अहं राष्ट्री सर्वस्य जगतः ईश्वरी[2] वसूनां धनानां संगमनी संगमयित्री प्रापयित्री अस्मि। अहं यज्ञियानां यज्ञसिद्धिकर्तृणां सत्कर्मकर्तृणां प्रथमा आदिमा चिकितुषी ज्ञानवती शक्तिरस्मि। एवं गुणविशिष्टाहं तां भूरिस्थात्रां बहुभ्नावेन प्रपञ्चात्मनावतिष्ठमानां भूर्यावेशयन्तीं बहूनि भूतजातानि तत्तदात्मनात्मानमावेशयन्तीमीदृशीं मां देवाः विद्वांसः पुरुत्रा पुरून् बहून् त्राणाय वि—अदधुः विविधप्रकारेण विविधसामर्थ्यकथनेन नानाविधं व्याख्यानं कृतवन्तः कुर्वन्ति करिष्यन्ति च।

---

1. आदित्याः द्वादश प्रोक्ता विश्वेदेवा दश स्मृताः।
   वसवश्चाष्ट संख्याताः, षट्त्रिंशत्तुषिता मताः।
   आभास्वराचतुःषष्टिर्वाताः पञ्चादशदूनकाः।
   महाराजिकनामानो द्वे शते विंशतिस्तथा।
   साध्या द्वादश विख्याता रुद्रश्चैकादश स्मृताः।। अमरकोशे, रामाश्रमी- टीकायाम्, 1/6.
2. ''राष्ट्री'' ईश्वरनामसु निघण्टौ पठितम्, 2/22.
   ''वाग्वै राष्ट्री'' ऐतरेयब्राह्मणम्, 1/9.

## चतुर्थी ऋचा

**मया सो अन्नमत्ति यो विपश्यति। यः प्राणिति य ईं शृणोत्युक्तम्।**
**अमन्तवो मां त उपक्षियन्ति। श्रुधि श्रुत श्रद्धिवं ते वदामि॥**

यः अत्तुं योग्यमन्नमत्ति भोग्यं वस्तु भुङ्क्ते सः भोक्तृशक्तिरूपया मयैव भुङ्क्ते। यः विपश्यति आलोकते सः द्रष्टृशक्तिरूपया मयैव पश्यति। यः प्राणिति श्वासोच्छ्वासं करोति सः प्राण-शक्तिरूपया मयैव प्राणनं करोति। यः ईं पदं[1] शब्दं शृणोति स श्रवणशक्तिरूपया मयैव शृणोति। ये ईदृशीमन्तर्यामिनीं मां न जानन्ति ते अमन्तवः अमन्यमानाः मामुपक्षियन्ति उपक्षीणाः सामर्थ्यहीनाः भवन्ति। हे श्रुत—विश्रुत सखे! श्रुधि—शृणु श्रद्धिवं श्रद्धिः श्रद्धा तया युक्तं श्रद्धायत्नेन लभ्यं स्वीयं चितिस्वरूपं ते तुभ्यं तवार्थं वदामि उपदिशामि। एवमनुग्रहशक्त्यात्मिकाहमित्यपि उक्तवती।

## पञ्चमी ऋचा

**अहमेव स्वयमिदं वदामि। जुष्टं देवेभिरुत मानुषेभिः।**
**यं कामये तं तमुग्रं कृणोमि। तं ब्रह्माणं तं ऋषिं तं सुमेधाम्॥**

देवेभिः[2] देवैरिन्द्रादिभिरपि जुष्टं प्रीत्या सेवनीयमुतापि च मानुषेभिः मनुष्यैरपि जुष्टं प्रीत्या सेवनीयमिदं स्वीयं चितिस्वरूपं स्वयमेवाहमनुग्रहात्मिका लोकानुग्रहाय वदामि उपदिशामीत्यर्थः। ईदृक् सच्चिदानन्दमयी अहं यं यं जीवं कामये रक्षितुं वाञ्छामि तं तं प्राणिनमुग्रं कृणोमि सामर्थ्यसम्पन्नमुन्नतं करोमि। तमेव ब्रह्माणं स्रष्टारं करोमि। तमेव ऋषिमतीन्द्रियार्थदर्शिनं करोमि। तमेव सुमेधां शोभनप्रज्ञं करोमि।

## षष्ठी ऋचा

**अहं रुद्राय धनुरातनोमि। ब्रह्मद्विषे शरवे हन्त वा उ।**
**अहं जनाय समदं कृणोमि। अहं द्यावापृथिवी आविवेश॥**

अहं ब्रह्मद्विषे यो ब्रह्म वेदं ज्ञानिनं परमात्मानं वा द्वेष्टि, तस्मै वेदविद्या द्वेष्ट्रे वेदविद् द्वेष्ट्रे वा शरवे हिंसनाय हन्तवै हन्तुं हिंसितुं उ आकाङ्क्षया रुद्राय दुष्टेषूग्राय शत्रुरोदकाय रुद्रदेवाय धनुः चापमातनोमि ज्ययाततं करोमि। अहमेव जनाय लोककल्याणाय समदं दुर्जनैः सह संग्रामं कृणोमि करोमि। द्यावापृथिवी दिवञ्च पृथिवीञ्च अन्तर्यामितया अहमेवाविवेश प्रविष्टवती। अर्थात् अहमेव सर्वं नियमयन्ती निग्रहशक्तिरस्मि।

## सप्तमी ऋचा

**अहं सुवे पितरमस्य मूर्धन्। मम योनिरप्स्वन्तः समुद्रे।**
**ततो वितिष्ठे भुवनानु विश्वा। उतामूं द्यां वर्ष्मणोपस्पृशामि॥**

---

1. "ईम्" पदनाम निघण्टुः, 4/2.
2. अत्र देवमानुष च प्रातिपदिकात् भिस्, ऐस् न "बहुलं छन्दसि" इति सूत्रेण।

अहं अस्य जगतः मूर्धन् सर्वोपरि विराजमानं पितरं सृष्ट्यादि कर्तारं ब्रह्माविष्णुमहेशादिदेवं सुवे प्रसुवे जनयामि। अथवा सर्वोपरि विराजमानं पितरं दिवमाकाशं[1] जनयामि। यथाथर्वणे—

**इयमेव सा या प्रथमा व्यौच्छत्। आस्वितरासु चरति प्रविष्टा।**
**महान्तो अस्यां महिमानः। अन्तर्वधूर्जिगाय नवगज्जनित्री।।[2]**

पुनश्च तत्रैव—

**सोदक्रामत्सा पितृनागच्छत्तां पितर उपाह्वयन्त स्वध एहीति।**
**तस्या यमो राजा वत्स आसीद्रजतपात्रं पात्रम्।**
**तामन्तको मार्त्यवोऽधोक्तां स्वधामेवाधोक्।।**
**तां स्वधां पितर उपजीवन्ति- उपजीवनीयो भवति य एवं वेद।।[3]**

मम योनिः उत्पत्तिस्थानं समुद्रे परमात्मनि अप्सु व्यापनशीलासु धीवृत्तिष्वन्तर्मध्ये यच्चैतन्यं तदेव। अर्थात् प्रकाशात्मपरमात्मनि अन्तर्लीनविमर्शात्मिकाहमस्मि। सदात्मनि चित्स्वभावाऽहमस्मि। यतः परमात्मनि विमर्शरूपाहमस्मि ततो हेतोः विश्वा—विश्वानि सर्वाणि, भुवनानि— भूतजातानि अनुप्रविष्य वितिष्ठे - विविधं व्याप्य तिष्ठामि। उतापि चामू द्यामन्तरिक्षं सत्तत्त्वं वर्ष्मणा— चित्यात्मकेन स्वीयेन देहेन उपस्पृशामि व्याप्नोमि प्रकाशं विमर्शेन व्याप्नोमि। एवमेव लक्ष्मीतन्त्रागमे उपदिशन्ती लक्ष्मी—

**निस्तरङ्गामृताम्भोधिकल्पं षाड्गुण्यमुज्ज्वलम् ।**
**एकं तच्चिद्घनं शान्तमुदयास्तमयोज्झितम् ।।**
**अपृथग्भूतशक्तित्वाद् ब्रह्माद्वैतं तदुच्यते ।**
**तस्य या परमाशक्तिर्ज्योत्स्नेव हिमदीधितेः।।**
**सर्वावस्थागता देवी स्वात्मभूतानपायनी ।**
**अहंता ब्रह्मणस्तस्य साहमस्मि सनातनी ।।**
**आत्मा स सर्वभूतानामहंभूतो हरिः स्मृतः।**
**अहंता सर्वभूतानामहस्मि सनातनी।।**
**येन भावेन भवति वासुदेवः सनातनः।**
**भवतस्तस्य देवस्य स भावो ऽहमितीरिता ।।**

---

1. "असौ द्यौः पिता"। शतपथब्राह्मणम्, 13/1/6/1.
2. अथर्ववेदः, 8/9/11.
3. अथर्ववेदः, 8/10/4-5 तः 8.

भवद्भावात्मकं ब्रह्म ततस्तच्छाश्वतं पदम्।
भवन्नारायणो देवो भावोलक्ष्मीरहं परा।।
अहमर्थसमुत्था च साहंता परिकीर्तिता।
अन्योन्येनाविनाभावादन्योन्येन समन्वयात्।।
अव्याहतमसंकोचमैश्वर्यं प्रविजृम्भते।
ज्ञानं तत्परम ब्रह्म सर्वदर्शिनिरामयम्।।
ज्ञानात्मिका तथाहंता सर्वज्ञा सर्वदर्शिनी।
ज्ञानात्मकं परं रूपं ब्रह्मणो मम चोभयोः।।[1]

पुनः तत्रैवोपदिशन्ती लक्ष्मी[2]—

अतरङ्गमनिर्देश्यं निःसत्तं सत्वमव्ययम्।
सच्चिन्मात्राख्य उन्मेषः साद्या मे शान्तताच्युतिः।।

## अष्टमी ऋचा

**अहमेव वात इव प्रवामि। आरभमाणा भुवनानि विश्वा।**
**परो दिवा पर एना पृथिव्यै। एतावती महिना संबभूव।।**

विश्वा सर्वाणि, भुवनानि भवन्ति भूतानि येषु तानि भूतजातानि कार्याणि, आरभमाणा— उत्पादयन्ती, अहं चितिः वात इव प्रवामि — यथा वातः परेणाप्रेरितः स्वेच्छयैव प्रवाति तद्वत् स्वेच्छयैव स्वातन्त्र्येण इदं सर्वं करोमि। तथैव वदन्ति आगमिकाः—

चितिः स्वतन्त्रा विश्वसिद्धिहेतुः।
स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति।।[3]

दिवः परः आकाशस्य परस्तात्, एना— अस्याः पृथिव्याः परस्तात्, एतावती— सर्वं सूर्यचन्द्रादिलोकलोकान्तरचराचरं यावद् जगदस्ति एतत् परिमाणा, महिना- स्व. महिम्ना सर्वजगदात्मनाहं संबभूव — संभूतास्मि। तथैवागमेषु—

विश्वात्मिकां तदुत्तीर्णां हृदयं परमेशितुः ।
परादिशक्तिरूपेण स्फुरन्तीं संविदं नुमः ।।[4]

---

1. लक्ष्मीतन्त्रम्, 2/10 तः 15, 17-18, 25.
2. लक्ष्मीतन्त्रम्, 2/44.
3. प्रत्यभिज्ञाहृदयम्, 1,2.
4. पराप्रावेशिका, 1.

जगच्चित्रं समालिख्य स्वयमेवात्मविग्रहाम् ।
स्वयमेव समालोक्य सन्तुष्टां परमाद्भुताम् ।
प्रकाशजीवसंलीनविमर्शात्मस्वरूपिणीम्।।[1]
विश्वात्मिकां तदुत्तीर्णां प्रकाशामर्शरूपिणीम् ।
परापरमयीं देवीमात्मत्वेन विशाम्यहम् ।।[2]

## स्त्रीपुंधाराया आत्मस्वरूपाभिव्यक्तिः

अत्र ऋषिका वागाम्भृणी माध्यमेनागतानाम् **"अहं रुद्रेभिर्वसुभिश्चरामि ......"**[3] इत्यादिमन्त्राणां मननात् सच्चिदानन्दस्वरूपस्य प्रकाशविमर्शात्मकस्य परमात्मनः चितेः विमर्शस्य वा प्राधान्यं दृश्यते। तथैव ऋषिवामदेवमाध्यमेनागतानाम् **"अहं मनुरभवं सूर्यश्च ......"**[4] इत्यादि मन्त्राणां मननात् परमात्मनः सत्तात्मकस्य प्रकाशस्य प्राधान्यं दृश्यते। तद्यथा ऋषिका रुद्रेषु संहारकर्तृशक्तिरूपेण, वसुषु पालयितृशक्तिरूपेण, सूर्ये द्वादशादित्याख्यकालावयवेषु प्रकाशात्मिकाशक्तिरूपेणात्मानं पश्यन्ती व्यनक्ति। न च तथैव ऋषिर्वामदेवोऽपि- अपितु ऋषिः वदति अहमेव सूर्यः अभवम्, अहमेव रुद्रः अभवम् तद्यथा —

**अहं पुरो मन्दसानो व्यैरं नव साकं नवतीः शम्बरस्य।**
**शततमं वेश्यं सर्वताता दिवोदासमतिथिग्वं यदावम्।।**[5]

अर्थात् अहं रुद्रः मन्दसानः प्रशस्यमानः शम्बरस्य नवनवतीः पुरः नगराणि साकं सहैव वि ऐरं विनष्टम्। यदा सर्वताता (सर्व शब्दात् स्वार्थे तातिल्, अष्टाध्यायी, 4/4/142) सर्वानेव "अतिथिग्वम्" अतिथीन् गच्छति तं दिवोदासं आवम् — रक्षितम्। शततमं वेश्यम् — विशेषु प्रवेशेषु भवम्, सर्वहितं नगरं कृतवान् दिवोदासाय।

पुनश्चायमेव विषयः ऋषिकायामेवमुल्लसति-

**अहं रुद्राय धनुरातनोमि। ब्रह्मद्विषे शरवे हन्त वा उ।**
**अहं जनाय समदं कृणोमि। अहं द्यावापृथिवी आविवेश।।**[6]

---

1. परावासनायाम्
2. सच्चिदानन्दवासना
3. ऋग्वेद., 10/125/1 तः 8 पर्यन्तम्
4. ऋग्वेद, 4/26, 27 समग्रम्
5. ऋग्वेद., 4/26/3.
6. ऋग्वेद., 10/125/6.

अत्रेदमवधेयं यत् यत्र ऋषिः स्वात्मानं वेदविद्द्वेष्ट्रे ब्रह्मद्वेष्ट्रे वा विनाशाय हिंसनाय विनाशकं रुद्रं पश्यति तत्रैव ऋषिका दुष्टानां विनाशके रुद्रे दुष्टविनाशकर्तृशक्तिमयीं स्वात्मानं पश्यति। यत्र ऋषिः सज्जनानां रक्षणकर्ता रुद्रः शिवः पश्यति स्वात्मानं तत्र ऋषिका रक्षणकर्तृरुद्रे शिवे रक्षणसामर्थ्यात्मिकां शक्तिं पश्यत्यात्मानम्। यद्यपि शक्तिशक्तिमतोरभेदः एव भवति। विमर्शयुक्त एव प्रकाशः परमात्मनि। यथोक्तं कामकलाविलासे—

**सकलभुवनोदयास्थितिलयमयलीलाविनोदनोद्युक्तः।**
**अन्तर्लीनविमर्शः पातु महेशः प्रकाशमात्रतनुः॥**[1]

तथापि स्त्रीषु पारमार्थिकी स्वात्माभिव्यक्तिः चितिप्राधान्या शक्त्यात्मिका पुरुषेषु च सत्प्रकाशप्रधाना सत्तात्मिका। अत एव साधनाकाले स्त्रीपुरुषैश्च स्व स्व प्रकृत्यानुसारी एव भावना सुखेन साफल्याय भवति।



1. कामकलाविलासः 1.

## तृतीयोऽध्यायः

# अथ निगमेषु वर्णतत्त्वविमर्शः

वयं पश्यामः यदस्माकं समाजरचना नानाकर्मपरिकल्पितवर्णभेदेन तदनुप्राप्तजातिभेदेन वा विभक्ता दृश्यते। बहवः जनाः मनुष्यत्वसामान्येऽपि जन्मना एव अन्येभ्य मनुष्येभ्यः स्वश्रेष्ठताविषयकेण हेयताविषयकेण वा स्थूलाहङ्कारेण ग्रसिताः सन्ति। न तु इत्येव, अपितु केचन जनाः एतादृशा अपि दृश्यन्ते ये जन्मना एव स्वश्रेष्ठवर्णाहङ्कारेण ग्रसिता अन्येषां जन्माधारितबाह्यपरिकल्पितवर्णव्यवस्थाद्वारेणैव हेयता प्रतिपादने संलग्नाः सन्ति तथैव च दुस्साहसेन बलात् स्थापयितुमपीच्छन्ति। प्राणिमात्रेषु परमात्मनः द्रष्टा भारतः अस्यां भूमौ स्पष्टतया विभक्तः संघर्षरतश्च दृश्यते। एवं प्रकारेण कस्मिंश्चित्काले **"सर्वभूतहितेरतः भारतः"** वर्तमानसमये मिथ्यारोपितविकृतजातिवादपङ्केन ग्रस्तः दृश्यते।

अस्तु अत्र विचारणीयमस्ति यदस्माकं पूर्वजाः वेदमन्त्राणां द्रष्टारः ऋषयः केनोद्देश्येन, किमर्जनाय कीदृशीं वर्णव्यवस्थां कृतवन्त आसन्। निगमेषु वर्णव्यवस्थायाः किं स्वरूपं वर्तते? कुतः विकृता एषा व्यवस्था हृदयहीनतायाः पराकाष्ठापर्यन्ता वैदिकी एकात्मसमरसतायाः भञ्जिका जाता। यत्किञ्चिदपि हेयं षड्यन्त्रितमारोपितं वा यथा तत् स्पष्टं भवेत् तथा प्रयासोऽपेक्षितः। नैगमिकविज्ञानप्रकाशनेन लोककल्याणाय परमात्मनः अनुग्रहशक्तिविवशोऽहं तस्यैव कृपया प्राप्तसामर्थ्यानुसारेण प्रयासं करोमि।

### प्राथम्येन कृषिविज्ञानोत्पत्तिः जनाश्च कृषकाः

मूलतः मानवोऽपि अस्या प्रकृतेः एकः प्राणी। परमात्मनः उल्लसितः सृष्ट्यात्मकप्रकृतिरूपशास्त्रात् मानवैः शनैः शनैः ज्ञानार्जनं कृतम्। अस्मिन् विषये ऋग्वेदीयः एष मन्त्रः निगमयति—

**अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठोऽध्वरेष्वीड्यः।**
**यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशे विशे।।**[1]

मन्त्रोऽयं परमार्थतत्त्वविमर्शप्रकरणे किञ्चिद् विचारितः। नानाविज्ञानोत्पत्तिप्रकाशकत्वादत्रास्मिन्प्रसङ्गेऽपि विचारणीयोऽस्त्येष मन्त्रः।

---

1. ऋग्वेद, 4/7/1.

इहेति प्रकृतावस्यां धातृभिः ज्ञानधारणसामर्थ्यसम्पन्नैः जनैः वनेषु वननीयेषु-नानाकारेषु प्रसृतेषु दृश्यमानेषु लोकेषु विभ्वं चैतन्यविद्याव्याप्तं चित्रम् आश्चर्यगुणयुक्तं नानाविधमद्भुतं विज्ञानं प्रथमः ज्ञानधारणात्मकोऽयं धर्मः धायि अधीयत। तदेवं निश्चिते काले ऋतुमासवर्षात्मकं प्रकृतौ स्वाभाविकं परिवर्तनम्। तत्र वनेषु वृक्षेषु वनस्पतिषु औषधीषु चराचरेषु जीवेषु ऋतूनां प्रभावः, प्राकृतिकः क्रियाकलापः, जीवेषु पारस्परिकी आत्मीयता, स्त्रीपुं-भेदः, तयोः विपरीतलिङ्गीयमाकर्षणम्, तेनाकर्षणेन तयोः पारस्परिकः मेलनात्मकः सचेतनः शरीरसम्बन्धः ततः नवजीवनोत्पत्तिः प्रजननं वा। सर्वैः चरजीवैः आत्मरक्षार्थं क्रियमाणाः आहारप्राप्तिनीडनिर्माणाद्युपायाः। जीवानां वैविध्यम्। भिन्नतया सर्वेषामाहारविहाराद्यावश्यकतापेक्षा च। यथा चरजीवानां प्रजननं तथैवाचरजीवानां प्रजननाय भूमौ वनस्पतीनामौषधीनां वृक्षाणां च बीजवपनं यथावश्यकं जलेन भूमेः स्नेहनम्। ततः क्रमशः तेषामुत्पत्तिः बीजादङ्कुरम् अङ्कुरात् किसलयम्, किसलयाद्वनस्पतिः, औषधिः, वृक्षाः, ततः पुष्पाणि, पुष्पे परागप्रकृतिमेलनात् फलानि। एवं प्रकारेण विभिन्न-ऋतौ विविधानां वनस्पतीनामौषधीनामुत्पत्तिद्वारेण कृषिविज्ञानादिज्ञानधारणात्मकोऽयं प्रथमः धर्मः अधीयत।

एवमध्वरेषु अहिंसनीयेषु सत्कर्मसम्पादककृषिकर्मादिक्रियामयव्यवहारेषु यजिष्ठः अतिशयेन सङ्गमयिता यष्टा सत्कर्मकर्ता वा होता सत्यस्य ग्रहीता ग्राहयिता वा सत्कर्मसाधकः ईड्यनित्योः स्तोतव्योऽन्वेष्टव्यश्च पूजार्हः।

यं वननीयेष्वरण्येषु नानाकारेषु प्रसृतेषु दृश्यमानेषु लोकेषु चैतन्यविद्याव्याप्त-माश्चर्यगुणयुक्तं नानाविधमद्भुतं विज्ञानमुपर्युक्तप्रकारकं ज्ञानधारणसामर्थ्यसम्पन्नैः जनैः धृतम् तं विज्ञानमप्नवानः कर्मणि क्रियमाणः अहिंसनीयकृषिप्रभृतिकर्मणां सम्पादनं कुर्वन्तः अप्नान् विद्यासन्तानान् कुर्वन्तश्च भृगवः विद्ययाविद्यायाः भर्जकाः परिपक्वविज्ञानाः ऋषयः विशे विशे प्रजायै प्रजायै जनाय जनाय विरुरुचुः विशेषेण कृषिप्रभृतीनामहिंसनीयसत्कर्मणां रचनां कृतवन्तः प्रजायै प्रजायै गुरुशिष्यपरम्परया प्रकाशितवन्तश्च।

अस्य मन्त्रस्य व्याख्याने ऐतरेये लिखितमस्ति —

**''जगतीं वैश्यस्यानुब्रूयात्''।**[1]

अर्थादत्र श्रुतौ कृषकस्यानुवर्तनेन जगतीछन्दम् —

**''जागतो वै वैश्यः''।**[2]

निश्चयेन कृषकः एव जागतिकः मूलतः कृषकस्यैव वैश्यनाम। कृषिकर्मतः उत्पादितवस्तूनां यथावश्यकसंचारव्यवस्थासम्पादनाय महापुरुषैः कृषिकरणात्मिका,

---

1. ऐतरेयब्राह्मणम्, 5/2.
2. ऐतरेयब्राह्मणम्, 5/2.

पशुपालनात्मिका तत्रोत्पादितान्नफलवस्त्रपश्वादीनां क्रयविक्रयात्मिका वाणिज्यकर्मव्यवस्था कृता। अत एव प्रारम्भकाले कृषिकर्मात्मकः एकैव वर्णः मानवानां विश् नामधेयः स एव वैश्यः। तदेवोक्तं शतपथे—

**"आद्या हीमाः प्रजाः विशः।"[1]**

अर्थात् सृष्ट्यादौ प्रारम्भिकविज्ञानदशायां सर्वे मानवाः कृषकाः एव आसन्। अत एव विशः मनुष्यनामसु पठितं निघण्टौ।[2] विशालमानवसमुदायः एव वैश्यः तदेव शतपथे—

**"भूमो वै विट्"[3]**

पुनश्च—

**"विशो वै विश्वेदेवाः।"[4]**

अर्थादस्मिन् विश्वे निश्चयेन कृषकाः एव देवाः। अथवा सर्वे विद्वांसः सामान्यमानवसमुदायादेवागताः। अतएव सर्वेषां मानवानां आकाङ्क्षायाः व्यक्तिः अथर्ववेदे एवमस्ति —

**यथा बीजमुर्वरायां कृष्टे फालेन रोहति।**
**एवा मयि प्रजा पशवोऽन्नमन्नं विरोहतु।।[5]**

यथा फालेन कृष्टे उर्वरायां भूमौ बीजं रोहति। बीजादङ्कुरमङ्कुराद् किसलयं किसलयाद् वनस्पतिः वृक्षाः। ततः पुष्पाणि, पुष्पादन्नानि फलानि पर्यन्तं क्रमेण रोहति वृद्धिं प्राप्नोति भूयान् भवति तथैव मयि प्रजाः जनकजननी शरीरात् बालकबालिकात्मिका सन्ततिः तथैव मयि गृहे पशुसन्ततिः, अन्नमन्नमन्नादन्नं विरोहतु वृद्धिं प्राप्नोतु भूयांसः भवत्वित्यर्थः।

एवमपि दृश्यते यदस्य कृषिविज्ञानस्य नियमानां व्यवस्थितं रूपं वैवस्वतमनुना प्रदत्तम्। यथा आथर्वणे—

**यद् यामं चक्रुर्निखनन्तो अग्रे कार्षीवणा अन्नविदो न विद्यया।**
**वैवस्वते राजनि तज्जुहोम्यथ यज्ञियं मधुमदस्तु नोऽन्नम्।।[6]**

1. शतपथब्राह्मणम्, 4/2/1/17.
2. निघण्टुः, 2/3/5.
3. शतपथब्राह्मणम्, 3/9/1/17.
4. शतपथब्राह्मणम्, 5/5/1/10.
5. अथर्ववेदः, 10/6/33.
6. अथर्ववेदः, 6/116/1.

अग्रे सृष्ट्यादौ, निखनन्तः भूमिं कर्षयन्तः कार्षीवणाः कृषकाः विद्यया ज्ञानेन, अन्नविदः न इवार्थे न अन्नोत्पादनविज्ञानस्य विज्ञातुः ज्ञानतुल्यतयैव यथाज्ञानं तथैव तत्प्रकाशनाय यत् यामं नियमसमूहं चक्रुः कृतवन्तः तन्नियमसमूहं वैवस्वते राजनि जुहोमि पृथिव्याः प्रथमसम्राट् वैवस्वतमनुराजानं प्रति राष्ट्रं समर्पयामीत्यर्थः।[1] अथ नः अस्माकं यज्ञियमन्नम् सत्कर्मोत्पादितमन्नं मधुमदस्तु माधुर्यगुणसम्पन्नं स्वास्थ्यकरं भवतु।

प्रजायै कृषकेभ्यः हिताय ऋषिणा विश्वामित्रेण दृष्टः परमात्मनः प्रार्थनामयं मन्त्रोऽपि द्रष्टव्योऽत्र[2]—

**इन्द्रः सीतां निगृह्णातु तां पूषाभिरक्षतु।**
**सा नः पयस्वती दुहामुत्तरामुत्तरां समाम्।।**[3]

इन्द्रः वर्षायाः अधिष्ठाता देवः सीतां निगृह्णातु कर्षितां भूमिं यावद् कर्षकफालस्य गतिः तावत्पर्यन्तं सिक्तं करोतु। तां कर्षितां बीजयुक्तां सिक्तां भूमिं तत्रोद्भूतां वनस्पतिञ्च पूषा वनस्पतीनामुत्पादनपोषणकर्माधिष्ठाता देवः पूषा सूर्यः अभिरक्षतु सर्वप्रकारेण पोषयतु इत्यर्थः। पयस्वती वनस्पतिषु रसप्रवाहिका सा कर्षिता सिक्ता भूमिः नः अस्माकमुत्तरामुत्तरामुत्तमामुत्तमां समामार्तवं धान्यं दुहां प्रपूरिकां भवतु। अर्थादेषा भूमिः अस्माकं सर्वदैव रसयुक्तमार्तवं धान्यं ददती भवतु।

## क्षत्रोत्पत्तिः

एवमिदं स्पष्टं यत् संस्कृतेः प्रारम्भकाले एष समग्रः एव मानवसमुदायः सामान्यः कृषकः एव आसीत्। कृषकः एव वैश्यविड्वाऽपरनामधेयः। तत्र कार्याणां सम्पादनाय वर्णविभागात्मिका कापि व्यवस्था नासीत्। समग्रः एव जनसमुदायः स्व स्व आजीविकावृत्तौ लग्नः आसीत्।

लोके हि मनुष्याः स्व स्व व्यवहारे स्वकुटुम्बव्यवहारे च व्यापृताः आसन्। स्व रक्षणे स्वकुटुम्बरक्षणे एव जनाः संलग्नाः आसन्। समुदायरक्षणार्थं किमपि नासीत्। तथैव समुदायस्य उत्कर्षाय अपि किमपि नासीत्। परं तु तत्तत्कुटुम्बव्यवहारविलक्षणः समुदायव्यवहारोऽपि लोके वर्तते। तादृशव्यवहारार्थं किमपि तत्त्वं कल्पयितव्यमभूत्। तदर्थं

---

1. मनुर्वैवस्वतो राजेत्याह। तस्य मनुष्या विशः। शतपथब्राह्मणम्, 13/4/3/3.
2. अथर्ववेदस्य तृतीयकाण्डस्य सप्तदशं सूक्तं कृषिविषये एवास्ति। अस्मिन् सूक्ते नवमन्त्राः सन्ति। एतेषां मन्त्राणां द्रष्टा ऋषिः विश्वामित्रः देवता सीता च। ततः स्थालीपुलाकन्यायेन एक एव मन्त्रः अत्रोद्धृतः मया।
3. अथर्ववेदः, 3/17/4.

ते क्षत्रतत्त्वं सृष्टवन्तः। एतदेव वर्णतत्त्वस्य मूलमस्ति तदेवमस्ति आथर्वणे—

**भद्रमिच्छन्त ऋषयः स्वर्विदः**
**तपो दीक्षामुपनिषेदुरग्रे।**
**ततो राष्ट्रं बलमोजश्च जातं**
**तदस्मै देवा उपसन्नमन्तु॥[1]**

भद्रमिच्छन्तः समष्टेः कल्याणमिच्छन्तः ऋषयः स्वर्विदः तत्त्वद्रष्टारः मनीषिणः तपोदीक्षामुपनिषेदुः ज्ञानात्मकं श्रमं कृतवन्तः इत्यर्थः। अग्रे संस्कृतेः प्रारम्भकाले ततः तेषां ज्ञानकर्मणोः विमर्शेन राष्ट्रं समष्टेः हितनियामकं शासनं बलं तच्छासनसंचालनसामर्थ्यं ओजश्च समष्टेः शासनसामर्थ्यस्य तेजस्विता च एतेषां त्रयाणामेकात्मकं क्षत्रतत्त्वं जातम् समुद्भूतम्। तदस्मै क्षत्रतत्त्वाय देवाः विद्वान्सः उपसन्नमन्तु सामीप्यं प्राप्य नम्रं भवन्तु।

## वर्णनियोजनप्रक्रिया तदर्थप्रार्थना च[2]

अत्र प्रश्नः उदेति यत् ज्ञानसम्पन्नः ऋषिकल्पः राष्ट्राध्यक्षः राजा, राज्यकर्मणि नियुक्ताः राजन्यः, तत्त्वद्रष्टारः ऋषयश्च, सर्वे मिलित्वा लोकस्य समष्टेः समग्रवैभवसाधनायाः सत्कर्मणि कथं संयुक्ताः। एतद्विषयं कर्मविभागेन राष्ट्रियसमग्रवैभवस्य संस्थापके यजुर्वेदे नरमेधनामके प्रसिद्धे अध्यायेऽस्ति।[3] ततः किञ्चित्प्रस्तौमि—

### प्रथमा ऋचा

**देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय।**
**दिव्यो गन्धर्वः केतपूः केतं नः पुनातु वाचस्पतिर्वाचं नः स्वदतु।**

हे देव सवितः दिव्यगुणकर्मस्वभावः सर्वेषु जीवेषु अन्तर्यामितया सत्कर्मसु प्रेरकपरमात्मन् यज्ञं सत्कर्मं प्रसुव प्रेरय यज्ञपतिं सत्कर्मस्वामिनं प्रसुव प्रेरय भगाय ऐश्वर्ययुक्ताय धनाय। दिव्यो गन्धर्वः दिव्यस्वभावः वाक्पतिः सविता केतपूः अन्तःस्थितज्ञानशोधकः नः अस्माकं केतं चित्तवर्तिज्ञानं पुनातु शोधयतु। तदेव वाक्पतिः सविता नः अस्मदीया वाचं स्वदतु स्वादयतु।

### द्वितीया ऋचा

**तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि।**
**धियो यो नः प्र चोदयात्॥**

---

1. अथर्ववेदः, 19/4.
2. यजुर्वेदस्य माध्यंदिनसंहिताया त्रिंशोऽध्यायः।
3. यजुर्वेदः माध्यन्दिनीयशाखा, 30-1 तः 4 ऋचा

अस्या ऋचायाः द्रष्टा ऋषिः विश्वामित्रः। ऋषेः समग्रस्य लोकस्य मानवसमूहस्य मित्रात्मना हितचिन्तकमन्त्रस्यास्य द्रष्टृत्वात् विश्वामित्रेति नाम। अस्मिन् मन्त्रे परमात्मानं प्रार्थयन् ऋषिः उत्तमपुरुषस्य बहुवचनस्यैव प्रयोगः करोति मानवानां समष्टेः मित्रात्मना। प्रायशः मन्त्रानुसारि एव मन्त्रद्रष्टुः ऋषेः नाम दृश्यते वेदे। अथवा मन्त्रानुसारिणी एव ऋषीणां संज्ञा जाता। मन्त्रः एव द्रष्टुः ऋषेः परिचायकः एवमपि वक्तुं शक्यते।

तस्य सवितुः सर्वान्तर्यामिप्रेरकस्य सच्चिदानन्दस्वभावस्य देवस्य द्योतनात्मकस्य परमात्मनः वरेण्यं सर्वैः वरणीयं ध्यातव्यं, भर्गः सर्वपापानां भर्जनसमर्थं तेजः वयं धीमहि ध्यायामः। तस्य कस्य? यः सविता नः अस्माकं धियः मतीः बुद्धीः कर्माणि प्रचोदयात्प्रकर्षेण प्रेरयति सत्कर्मानुष्ठानाय।

## तृतीया ऋचा

**विश्वानि देव सवितर्दुरितानि परासुव।**
**यद् भद्रं तन्न आसुव॥**

हे देव सवितः। विश्वानि सर्वाणि दुरितानि पापानि परासुव पराञ्चि गमय। यद्भद्रं कल्याणं तत् नः अस्मान् प्रति आसुव आगमय।

## चतुर्थी ऋचा

**विभक्तारं हवामहे वसोश्चित्रस्य राधसः।**
**सवितारं नृचक्षसम्॥**

वयं सवितारं सर्वेषां पालकं प्रेरकञ्च नृचक्षसं नृणां रुचेः द्रष्टारं वसोः वासयितुः चित्रस्य नानाविधकर्मोत्पादितस्य राधसः धनस्य विभक्तारं कर्मानुसारिविभागकर्तारं हवामहे आह्वयामः। किमर्थम् ? सर्वेषां नृणां रुच्यनुसारि कर्मणि योजनाय वर्णविभागायेत्यर्थः। कोऽयं वर्ण पदार्थः? वच्मि।

## वर्णपदनिरुक्तिः

**वर्णो वृणोतेः।**[1]

वृञ् वरणे धातोः[2] "**कृवृजृसिद्रूपन्यनिस्वपिभ्यो नित्**[3]" सूत्रेण नः प्रत्ययः वृणोति व्रियते वा स वर्णः। स्तुतिर्यशो रूपमक्षरं स्वीकारश्चास्य शब्दार्थः।

---

16. निरुक्तम्, अ. 2, खं. 3.
17. पा. धातुपाठः 5/8.
18. उणादिसूत्रम्, 3/10.

पुनश्च **वर्ण क्रियाविस्तारगुणवचनेषु**[1] एवं वर्ण प्रेरणे[2] वर्णने च धातुभ्यः स्वार्थे 'अ' प्रत्ययेनापि वर्णशब्दसिद्धिः वर्णयति वर्णयते वा स वर्णः।

अत्र मानवानां कर्मविभागप्रकरणे मानवैः स्वयोग्यतानुसारं स्वरुच्यनुकूलञ्च यत्कर्माणि यथायोग्यं क्रियन्ते ते एव तेषां मानवानां वर्णाः।

## निगमेषु वर्णविभागः

निगमे वर्णविभागात्मकगुणकर्मक्रियाविस्तारप्रकरणे वर्णविभागात् प्राक् उपर्युक्तैः चतुर्भिर्मन्त्रैः सर्वजनहिताय सर्वजनसुखाय प्रार्थना कृतास्ति। ततः एव प्रसृता अस्ति वृणीतकर्मणां वर्णनियोजनप्रक्रिया। तदेवम् —

**ब्रह्मणे ब्राह्मणं क्षत्राय राजन्यं मरुद्भ्यो वैश्यं तपसे शूदम् ...... आलभते।**[3]

एषु मन्त्रेषु मुख्यचतुर्वर्णातिरिक्तमपि कर्मणां वैविध्यतया कर्मानुसारं वर्णानामुपविभागाः अपि वर्णिताः सन्ति। तथापि प्रामुख्येन चतुर्षु वर्णष्वेव तेषां सर्वेषामन्तर्भावः। अस्य मन्त्रस्य चतुर्वर्णानां व्याख्यानं शतपथे एवमस्ति।

## 1 - ब्राह्मणवर्णयोजना

**"ब्रह्मणे ब्राह्मणमालभते"। ब्रह्म वै ब्राह्मणः।**

**ब्रह्मैव तद्ब्रह्मणा समर्द्धयति।**[4]

मन्त्रार्थस्य प्राक् ब्रह्मशब्दार्थः ज्ञातव्यः बृह् वृद्धौ,[5] बृहि बृंह बृद्धौ शब्दे च,[6] बृहिर् (बृह्) बृद्धौ शब्दे च,[7] एभ्यः धातुभ्यः **"सर्वधातुभ्यो मनिन्"**[8] इत्यनेन उणादिसूत्रेण मनिन् प्रत्ययः, **"बृंहेर्नोऽच्च"**[9] अनेन सूत्रेण नकारस्य अकारे ऋतो रत्वे ब्रह्मन् ततः सु विभक्तौ 'ब्रह्म' पदसिद्धिः बृंहति वर्धते यत् तद् ब्रह्म। किं तद् यत् सदैव वर्धते एव अविरामेन। यदविरामेन वर्द्धनं तद् ब्रह्म। न तथा दृश्यते कुत्रापि

1. पा. धातुपाठः 10/335.
2. पा. धातुपाठः 10/19,20.
3. यजुर्वेदमा. 30-5 तः 30/22 पर्यन्तम्
4. यजुर्वेदमा.सं. 30/4; शतपथब्राह्मणम्, 3/6/2/10.
5. पा. धातुपाठः क्रमशः 1/488, 489, 490.
6. पा. धातुपाठः क्रमशः 1/488, 489, 490.
7. पा. धातुपाठः क्रमशः 1/488, 489, 490.
8. उणादिसूत्रम् क्रमशः 4/146-147.
9. उणादिसूत्रम् क्रमशः 4/146-147.

मैवं, ज्ञानं वर्धते सदैव अतो ज्ञानं ब्रह्म। ब्रह्मपदस्य निरुक्तत्यर्थः ज्ञाने एव गच्छति अतो ब्रह्म-शब्दः ज्ञानवाची। पुनश्च यत्र कुत्रापि ज्ञानसम्बन्धः तदपि ब्रह्म तद्यथा— बृहद्विद् यं तं वेदचतुष्टयं ब्रह्म, "**वेदो ब्रह्म**"[1] मनसा विजानाति अतो "**मनो ब्रह्म**",[2] तथैव "**श्रोत्रं ब्रह्म**"[3] "**चक्षुर्वै ब्रह्म।**"[4] "**हृदयं वै सम्राट् परमं ब्रह्म**"।[5] सर्वान्तर्यामिरूपेण सर्वं जानाति परमात्मा अतः तत् परमं ब्रह्म। "**प्रज्ञानं ब्रह्म**"[6] एवं स्पष्टं यत् ज्ञानमेव ब्रह्म। यथा ज्ञानवान् ज्ञानी तथैव ब्रह्मवान् ब्राह्मणः। वेदं ब्रह्म वेदज्ञानवान् ब्राह्मणः। अथ मन्त्रार्थं पश्यन्तु —

राष्ट्राध्यक्षः राजा तदर्थं संगठिता विद्वत्सभा वा 'ब्रह्मणे' ज्ञानाय राष्ट्रियबालकबालिकानां शिक्षायै वेदज्ञानाय 'ब्राह्मणं' ज्ञानिनं वेदज्ञानिनं शिक्षकं वा 'आलभते' सर्वतः प्राप्नोति नियुक्तिं करोतीत्यर्थः। ब्रह्म वै ब्राह्मणः। निश्चयेन ब्रह्मचर्यया शिक्षाचर्यया ब्राह्मणात् ब्रह्मचारिणो यावत्, गुरोः शिष्यान् यावत्, बर्द्धद् ज्ञानमेव ब्राह्मणस्य ब्राह्मणत्वं गुरोः गुरुत्वं वा। तद् ब्रह्मणा ज्ञानदानरूपकर्मणा ब्रह्मैव वर्धद्ज्ञानमेव समर्द्धयति सम्यक् ऋद्धिं प्राप्नोति। ज्ञानग्रहीतृभिः ब्रह्मचारिभिः शिष्यैः सहैव शिक्षकाणां गुरूणां ब्राह्मणानां वर्द्धद्ज्ञानं स्वयं राष्ट्रियज्ञानात्मना समृद्धिं प्राप्नोति। एवं समृद्धिं प्राप्नुवदेतद्ज्ञानं राष्ट्रे प्रसरत् गुरोः शिष्यस्य राष्ट्रस्य चोन्नतिं करोति।

शिशूनां जन्मानन्तरं तेषां शारीरिकविकासेन सहैव सम्पूर्णविकासाय प्रथमावश्यकता विविधज्ञानस्य तदनूकूलविशिष्टज्ञानस्य च भवति। अत एव मनुष्याणामुन्नत्यै सर्वप्रथमं शिक्षाविभागस्य ब्राह्मणवर्णस्य वोपदेशः कृतः। सा शिक्षा शिक्षणविषयिकी, प्रशासनविषयिकी, कृषिवाणिज्यविषयिकी, श्रमशिल्पविषयिकी वा भवितुमर्हति। शिशोः जन्म कस्मिन्नपि गृहे भवतु, तस्य मातापितरौ कस्मिन्नपि वर्णकर्मणि लग्नौ भवेताम्। ज्ञानप्राप्तिः तस्याधिकारः। प्राचीने वैदिके काले ब्रह्म-ब्राह्मण-ब्रह्मचारी-ब्रह्मकुल- ब्रह्मचर्या नाम्ना प्रसिद्धशब्दानां स्थाने वर्तमानसमये, शिक्षा-शिक्षक-शिक्षार्थी-शिक्षालय-शिक्षाचर्या नामकाः शब्दाः प्रयुक्ताः भवन्ति।

वर्तमानकाले प्राचीनवैदिकशब्दानां मूलमर्थं विहाय गौणार्थे भिन्नार्थे वा प्रयोगः दृश्यते। तद्यथा "**ब्रह्म**" शब्दस्य प्रयोगः ज्ञानार्थे न कुर्वन्ति। अपितु ब्रह्मशब्दस्य प्रयोग

1. जै.उ., 4/25/3.
2. गो.पू., 2/10.
3. शतपथब्राह्मणम्, 14/6/1/42.
4. शतपथब्राह्मणम्, 14/6/10/8.
5. शतपथब्राह्मणम्, 14/6/10/18.
6. ऐत.उ., 5/3.

परमेश्वरार्थे एव कुर्वन्ति। शिक्षार्थिनं शिक्षार्थिनीं च ब्रह्मचारी ब्रह्मचारिणी न कथयन्ति। अपितु यः या वा विवाहं न करोति। विपरीतलिङ्गीयं शरीरसम्बन्धं न स्थापयति। शुक्रमण्डात्मकं रजं च रक्षति। तं युवकं तां युवतीं वा क्रमशः ब्रह्मचारी, ब्रह्मचारिणी, कथयन्ति। मूलतः प्राचीनकाले वैदिके युगे पञ्चविंशतिवर्षात्मकः शिक्षाकालः भवति स्म। शिक्षां प्रपूर्यैव प्राप्ते यौवने अधीतविद्याः युवकाः युवतयश्च विवाहं कुर्वन्ति स्म। शिक्षाकालं ब्रह्मचर्याश्रमेन कथयन्ति स्म। बालविवाहस्य कल्पनापि नासीत्। बाल्यकाले शिक्षाचर्यायाम् अविवाहितेषु यौवनचाञ्चल्यस्य वर्जना चरित्रशुद्ध्यर्थं स्वाभाविकी। शनैः शनैः शिक्षाचर्यात्मकः ब्रह्मचर्यशब्दः स्त्रीपुरुषसम्बन्धवर्जनायामेव रूढ़ः। न तथासीत् प्राचीनकाले तद्यथा ज्ञानाचरणं धर्माचरणं कुर्वतः पत्न्या सीतया सहैव ब्रह्मचारी पदाभिधेयः वनवासी रामः रामायणे—

**फलमूलाशिनौ दान्तौ तापसौ ब्रह्मचारिणौ।**
**पुत्रौ दशरथस्यास्तां भ्रातरौ रामलक्ष्मणौ।।**
**तरुणी रूपसम्पना सर्वाभरणभूषिता।**
**दृष्टा तत्र मया नारी तयोर्मध्ये सुमध्यमा।।**[1]

शूर्पणखा उक्तवतीएतद्वाक्यम्। न च सा सत्यवादिनी इति चेन्न, रामः स्वयमपि स्वपरिचयं ददाति तथैव तत्रैव —

**पुत्रौ दशरथस्यावां भ्रातरौ रामलक्ष्मणौ।**
**प्रविष्टौ सीतया सार्धं दुश्चरं दण्डकावनम्।।**
**फलमूलाशिनौ दान्तौ तापसौ ब्रह्मचारिणौ।**
**वसन्तौ दण्डकारण्ये किमर्थमुपर्हिंस्यथ।।**[2]

एवमत्र स्पष्टं यत् ब्रह्मचर्यपदेन ज्ञानाचरणं शिक्षाचरणमेव ग्राह्यं न तु अविवाहितत्वम् —

एवमेव ज्ञानिने आचार्याय शिक्षकाय प्रयुक्तः ब्राह्मणशब्दः स्वमूलमर्थं विहाय वर्णविभागस्य विकृतिरूपेण जन्मना प्रचारितबाह्यपरिकल्पित-शरीराहम्मन्यतापोषक-मानवजातिविभाजने प्रचलितः वर्तते। न तथा स्वीकर्तुं शक्यः पदार्थविरुद्धत्वात्

---

1. वा.रामायणमरण्यकाण्डम्, 19/15,17.
2. वा.रामायणमरण्यकाण्डम्, 20/7-8.

श्रुतिविरुद्धत्वाच्च। तद्यथा—

**''प्रज्ञानं ब्रह्म''।**[1] **''वेदो ब्रह्म''।**[2] **''ब्रह्म वै ब्राह्मणः।''**[3] इत्यादि श्रुतिभ्यः विरोधात्। अपितु ज्ञानसम्पन्नः शिक्षणे समर्थ आचार्यः गुरुरेव ब्राह्मणः।

## 2- क्षत्रियवर्ण योजना

**''क्षत्राय राजन्यम्''। क्षत्रं वै राजन्यः। क्षत्रमेव तत्क्षत्रेण समर्द्धयति।**[4]

मन्त्रार्थस्य प्राक् क्षत्रक्षत्रियराजन्यपदानां पदार्थः ज्ञातव्यः। क्षण्यते हिंस्यते नश्यते पदार्थो येन स क्षतो घातादिः। क्षतात् त्रायते रक्षतीति क्षत्रः तादृशरक्षणसामर्थ्यसम्पन्नपुरुषः क्षत्रियः। क्षणुहिंसायां तनादिधातोः ''क्त'' प्रत्ययेन क्षतः शब्दः। अनया व्युत्पत्या प्रजानां रक्षणे संप्रभुतासंपन्नं राज्यं राष्ट्रं वा क्षत्रम् **''क्षत्रं हि राष्ट्रम्''**[5] इति श्रुतिः। अथवा यत्र कुत्रापि संप्रभुतासम्पन्नं रक्षणसामर्थ्यमस्ति तत् क्षत्रम्। तद्यथा —

**''प्राणो हि वै क्षत्रम्। हैनं प्राणः क्षणितोः प्रक्षत्रमात्रमाप्नोति क्षत्रस्य सायुज्यं सलोकतां जयति य एवं वेद''।**[6] एवमेव क्षताद्रक्षकं हृदयं क्षत्रम्। प्रायशः लोकानां पालनात् रक्षणात् पालके रक्षके क्षत्रशब्दः प्रयुक्तः दृश्यते। तदेव श्रुतिः वदति **''प्रजापतिर्वै क्षत्रम्''।**[7] **''भुवः इति क्षत्रम्''**[8] इत्यादि।

यः राष्ट्ररक्षणाधिकारात् राजते सः राजन्यः। इति व्युत्पत्त्या राजृ दीप्तौ[9] धातोः **''राजेरन्यः''**[10] इत्यनेनोणादिसूत्रेणान्यः प्रत्ययः राजन्यः अथवा राजृ दीप्तौ धातोः **''कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः''**[11] इत्यनेन सूत्रेण ''कनिन्'' प्रत्ययेन ''राजन्' शब्दसिद्धिः। यो राजते प्रकाशते स्वदिव्यगुणकर्मणा स राजा। राजन् प्रातिपदिकात्

1. ऐतरेयं, 5/3.
2. जै.उ., 4/25/3.
3. शतपथब्राह्मणम्, 3/6/2/10.
4. यजुर्वेद, 30/5; शतपथब्राह्मणम्, 3/6/2/10.
5. ऐतरेयं, 7/22.
6. शतपथब्राह्मणम्, 14/8/14/4.
7. शतपथब्राह्मणम्, 8/2/3/11.
8. शतपथब्राह्मणम्, 2/1/4/12.
9. पा. धातुपाठः, 1/569.
10. पा. उणादिसूत्रम्, 3/100.
11. पा. उणादिसूत्रम्, 1/156.

**"राजश्वसुराद्यत्"**[1] सूत्रेण यत् प्राप्ते **"राज्ञोऽपत्ये जातिग्रहणम्"**[2] इत्यनेन वार्तिकेन जातौ "यत्" ततो विभक्तिः। एवं राज्ञः पुरुषः एव राजन्यः राजपुरुषो वा। अतो राजन्यो नाम राज्यकार्यसंचालने समर्पितः जनः। एवं क्षत्रतत्त्वमूलकमेव राजतत्त्वम्। तथा च श्रुतिः— **"क्षत्रस्य वा एतद्रूपं यद्राजन्यः"**[3] **"ओजः क्षत्रं वीर्यं राजन्यः"**।[4]

अथ मन्त्रार्थं पश्यन्तु - **"क्षत्राय राजन्यमिति"**

प्राणिनां प्रत्यात्मीयभावनया, सत्यनिष्ठया, न्यायनीत्या चारित्र्येण, सामर्थ्येन धर्मेण जनानां राष्ट्रस्य च क्षत्राय त्राणाय रक्षणाय तथैव मिथ्याचरणादन्यायात् दुश्चारित्र्यात्, नैष्ठुर्यात् पापान्निवारयति लोकानां त्राणाय, क्षत्राय, एवमेव मिथ्याचारिणामन्यायिनां दुश्चरित्राणां निष्ठुराणां पापिनां प्रति दण्डविधानात् लोकानां क्षत्राय रक्षणाय तादृशकार्यसम्पादने कुशलं राजन्यं राजपुरुषं क्षत्रियं वा राष्ट्राध्यक्षः राजा तदर्थसंगठिता प्रशासनिकसभा वा "आलभते" सर्वतः प्राप्नोति। राष्ट्राय राष्ट्रभक्तस्य नियुक्तिं करोतीत्यर्थः। अत्र लट्लकारे विधिरप्यस्ति। क्षत्राय राष्ट्रभक्तानां राजन्यानां नियुक्तिं कुर्यादित्यर्थः।

**"क्षत्रं वै राजन्यः"**। निश्चयेन यदेतत् क्षत्रं रक्षणधर्मात्मकं रक्षण-सामर्थ्यमस्ति। तदेव प्रशासकस्य राजपुरुषस्य क्षत्रियस्य वा प्रशासकत्वं राजत्वं वा अस्ति।

**"क्षत्रमेव तत्क्षत्रेण समर्द्धयति"**। अनेन पालनरक्षणनियामकक्षत्रकर्मणा विशे विशे पालनरक्षणसामर्थ्यमेव समृद्धिं प्राप्नोति। तदेवं यदा रक्षकेण रक्षणीयस्य रक्षा भवति, तदा तस्मिन् रक्षणीये रक्षकं प्रति श्रद्धा जागर्ति सहैव रक्षणभावनापि जागर्ति। राष्ट्रे च रक्षणन्यायस्य स्थापना दुराचारस्य क्षयश्च भवति। दण्डविधानात् मिथ्याचरणे, दुराचरणे, पापाचरणे भीतिः भवति। एवं राष्ट्रं सत्येन धर्मणा च सम्पन्नं भवति। एवमनेन कर्मणा समग्रे राष्ट्रे क्षत्र एव राष्ट्रियधर्म एव समृद्धिं प्राप्नोति। संवेदनामूलकमेवास्त्येतद्कर्म तदेव निगमयति निगमः —

**"आत्मा क्षत्रमुरो मम"**[5]

यथोक्तं प्रारम्भिकविमर्शे संस्कृतेः प्रारम्भकाले सृष्ट्यादौ वा वर्णविभागः नासीत्। पारस्परिक- व्यवहारस्य ज्ञानमेवाधार आसीत्। अनेन ब्रह्मणा पारस्परिकः व्यवहारः प्रचलति स्म। अस्य विज्ञानस्य ब्रह्मणः सामूहिकः उपयोगः नासीत्। एषः पारस्परिकः कुटुम्बव्यवहारः

---

1. पा. अष्टाध्यायी, 4/1/137.
2. अष्टाध्यायी, सू.वा., 4/1/137.
3. शतपथ., 13/1/5/3.
4. ऐतरेय., 8/2.
5. यजुर्वेद., मा.सं. 20/7.

अतीव सीमितः आसीत्। अतः विज्ञानस्य सामूहिकलाभार्थं लोकानामभ्युदयार्थञ्च विज्ञानेन ब्रह्मणा वा ऋषिभिः क्षत्रतत्त्वं सृष्टम्। एषो विषयः शतपथे व्याख्यातोऽस्ति। तदेवम्—

**"ब्रह्म वा इदमग्र आसीदेकमेव तदेकं सन्न व्यभवत्। तच्छ्रेयोरूपमत्यसृजत क्षत्रम्। यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमः रुद्रः पर्जन्यो यमो मृत्युरीशान इति। तस्माद्ब्राह्मणः क्षत्रियमधस्तादुपासते, राजसूयो क्षत्र एव तद्यशो दधाति, सैषा क्षत्रस्य योनिर्यद्ब्रह्म। तस्माद्यद्यपि राजा परमतां गच्छति, ब्रह्मैवान्ततः उपनिश्रयति स्वां योनिम्। य उ एनं हिनस्ति स्वां स योनिमृच्छति। स पापीयान्भवति यथा श्रेयासं हिंसित्वा।"**[1]

इदं समग्रव्यवहारसाधनात्मकज्ञानं ब्रह्म अग्रे प्रारम्भिकदशायां संस्कृतेरादिमावस्थायामेकमेवासीत्। ज्ञानेनैव पारस्परिकः व्यवहारः प्रचलति स्म तज्ज्ञानमेकं सत् व्यक्त्याश्रितत्वात् प्रतिव्यक्त्येकं सत् एकाकिप्रयासेन कर्मणा न व्यभवत् वैभवं न प्राप्तवान्। तदा तद्व्यक्तिज्ञानं पारस्परिकविमर्शात्मकसमूहविज्ञानेन सम्भूय समुदायस्य समष्टेरतिशयेन हितनियामकं संवेदनामूलकं हृदयप्रधानं ज्ञानस्य यच्छ्रेयोरूपं समष्टेः क्षतात् त्रातुं योग्यमतो समष्टेः राष्ट्रस्य हृदयात्मकं क्षत्रमसृजत्। तत् क्षत्रं प्रसिद्धप्राकृतिकरूपकैः ज्ञापयति श्रुतिः। यान्येतानि प्रसिद्धानि लोके देवत्रा देवत्रातारः क्षत्राणि। यथा— इन्द्रः जीवात्मा इन्द्रियाणामधिपतिः। यथा वरुणः जलचराणामधिपतिः। यथा सोमः चन्द्रः निशाया अधिपतिः। यथा रुद्रः[2] मुख्यप्राणः इन्द्रियप्राणानामधिपतिः। यथा पर्जन्यः वनस्पतीनामधिपतिः। यथा यमः संयमः स्वास्थ्यानामधिपतिः। यथा मृत्युः रोगाणामधिपतिः। यथा ईशानः अन्तर्यामी परमात्मा सर्वेषामधिपतिः। यथा एते क्षत्रियाः स्वपाल्यान् पालयन्ति रक्षन्ति। तथैव राष्ट्राध्यक्षः राजा राष्ट्रव्यवस्थायां नियुक्तैः पुरुषैः राजन्यैः क्षत्रियैः राष्ट्रियनियमानां माध्यमेन स्वशरीरवत् प्रजानां पालनं कुर्यात्। यस्मात् क्षत्रियः राजा सर्वाः प्रजाः आत्मवत् पश्यति। प्रजानां रक्षायै स्वजीवनसमर्पणायापि सन्नद्धः तिष्ठति। **"तस्मात्क्षत्रात्परं नास्ति"**। तस्माद्ब्राह्मणः क्षत्रियमधस्तादुपास्ते। प्रजानामात्मभूतत्वात् क्षत्रियस्य। राजसूये राज्यव्यवस्थानियामके सत्कर्मणि तद् ज्ञानात्मकं यशः क्षत्रे राष्ट्रहिते स्थापयति विद्वान्। सैषा क्षत्रस्य योनिर्यद्ब्रह्म। पारस्परिकविमर्शात्मकसमूहविज्ञानेन ब्रह्मणैव क्षत्रस्योत्पत्तिः। अतः एष ब्रह्म संवेदनात्मकं ज्ञानमेव क्षत्रस्य योनिः। तस्मात् यद्यपि राजा ज्ञानस्य हृदयरूपत्वात् विद्वत्स्वपि श्रेष्ठतमत्वं भजते। अन्ततोऽन्ते राज्यकर्मनिष्पादनानन्तरं ब्रह्मैव परमात्मविज्ञानमेव उपनिश्रयति- आश्रयति स्वां परमात्मविज्ञानात्मिकां योनिं क्षत्रोत्पत्तिम्।

---

1. शतपथब्राह्मणम्, 14/4/2/23; बृहदारण्यक., 1/4/11.
2. कतमे रुद्रा इति। दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदस्मान्मर्त्याच्छरीरादुत्क्रामन्त्यथ रोदयन्ति तद्यद्रोदयन्ति तस्माद्रुद्रा इति। शतपथ., 11/6/3/7.

य उ एनं हिनस्ति। यः क्षत्रियः एनं जनसमुदायमात्मरूपं न मत्वात्मानं शासकं प्रजां शास्यं विजानाति सः सर्वेषु प्राणिषु सर्वात्मरूपेण व्याप्तमेनं परमात्मानं हिंसति प्रजानां न्यग्भावेन पश्यन् एवं परमात्मानं प्रजास्वपश्यन् श्रेयांसं सर्वात्मभावं हिंसित्वा पापीयान्भवति शरीरात्माहंकारेण। एवं स्वीयां राष्ट्रप्रमुखयोग्यतां स्वयमेव विनाशयति। अतो विनाशं प्राप्नोति।

एवमेतत् स्पष्टं जनसमुदायादेव विमर्शात्मकज्ञानेन क्षत्रोत्पत्तिः विमर्शकाः जना एव प्राथम्येन ब्राह्मणाः। तेषु विमर्शकेष्वेव श्रेष्ठतमः संवेदनात्मिकामनुभूतिमपश्यन् क्षत्रत्वेन चितः। मूलतः सर्वे जनाः कृषकाः विशः तत एव ब्राह्मणस्य क्षत्रियस्य चोत्पत्तिः। तदेव श्रुतिः —

**"तस्माद् ब्रह्म च क्षत्रञ्च विशि प्रतिष्ठिते।"**[1]

**"विड्वै जनित्रम्"**।[2] **"विशामेवैकमेतत्पतिं करोति"**।[3] **"ओजसैव वीर्य विश आदाय क्षत्रायापि दधदि"**।[4] **विशो राजानमुपतस्थुर्ऋग्मियम्"**।[5]

## 3- वैश्यवर्णयोजना

**"मरुद्भ्यो वैश्यम्"। विशो वै मरुतः। विशमेव तद्विशा समर्द्धयति।**[6]

मन्त्रार्थस्य प्राक् विश्वैष्यमरुत्पदानां पदार्थः विमर्शनीयः। निघण्टौ विशः मनुष्यनामसु पठितम्।[7] विश प्रवेशने[8] धातोः **"अन्येभ्योऽपि दृश्यते"**[9] इत्यनेन सूत्रेण क्विप् प्रत्ययेन विश् शब्दसिद्धिः। विशन्ति अनुप्रविशन्ति सर्वकर्मस्वधिकारित्वेन ये ते विशः मनुष्याः कृषकाः वा। पुनश्च विश् प्रवेशने धातोरेव **"गुणवचनब्राह्मणादिभ्यः कर्मणि च"**[10] इत्यनेन सूत्रेण **"ब्राह्मणादिषु चातुर्वर्ण्यादीनामुपसंख्यानम्"**[11] इति वार्तिकबलात् स्वार्थे "यञ्" वैश्यपदस्य निष्पत्तिः।

---

1. शतपथ., 12/2/7/16.
2. तैत्तिरीयसं. 5/3/3/4.
3. शतपथ., 5/3/4/10.
4. काठकसं., 21/10.
5. ऋग्वेदसंहिता, 6/8/4.
6. यजुर्वेद., 30/5; शतपथ., 3/6/2/10.
7. निघण्टुः, 2/3.
8. तुदादिः परस्मैपदी पा. धातुपाठः
9. पा. अष्टाध्यायी, 3/2/178.
10. पा. अष्टाध्यायी, 5/1/124.
11. पा. अष्टाध्यायी, 5/1/124.

मृङ् प्राणत्यागे[1] धातोः "**मृग्रोरुतिः**"[2] इति सूत्रेण "उति" प्रत्ययेन "मरुत्" शब्दसिद्धिः। म्रियन्तेऽनेन वृद्धेन विना मारयति वा एषः। अनेन गमनागमनक्रियाप्रापकाः प्राणापानात्मिकाः नव चत्वारिंशत् वायवः गृह्यन्ते। मरुत् प्रातिपदिकात् "**प्रज्ञादिभ्यश्च**"[3] इत्यनेन सूत्रेण प्रज्ञादित्वादण् "**अचो ञ्णिति**"[4] इत्यनेनादिवृद्धिः मारुत्शब्दसिद्धिः मरुत्मारुतशब्दार्थः कोशेषु एवं दृश्यते—

**मरुतः स्पर्शनः प्राणः समीरो मारुतो मरुत्।**[5]

पुनश्च—

**मारुतः श्वसनः प्राणः समीरो मारुतो मरुत्।**[6]

तथा च श्रुतिः —

**"प्राणा वै मारुताः"।**[7]

**"सप्त सप्त हि मारुता गणाः"।**[8]

एवमिदं स्पष्टं यत् प्राणिषु संचरमाणाः जीवनदायिनीप्राणवायुरेव मरुत्मारुत्पदवाच्यः न तु सामान्यः वायुः। अत्र मन्त्रार्थं पश्यन्तु—

भोग्यपदार्थानामुत्पादनाय तेषां पदार्थानां समग्रे राष्ट्रे सर्वत्रोपलब्धिं सुनिश्चिताय भोग्यपदार्थानां संचारव्यवस्थासंचालनाय। कृषिभिरुत्पादितखाद्यपदार्थैरेव जीवानां जीवनं प्रचलति एवं खाद्यपदार्थाः एव प्राणिनां प्राणाः। अतो निगमः निगमयति "**मरुद्भ्यो वैश्यम्**" मरुद्भ्यः प्राणिनां प्राणेभ्यः आवश्यकवस्तूनां सर्वत्र समुपलब्ध्यै मरुद्गणवत् गणशः समग्रे राष्ट्रे संचारकर्मसम्पादने कुशलमानवसमुदायं वैश्यं राष्ट्राध्यक्षः राजा तदर्थसंगठिता प्रशासनिकसभा वा "आलभते" सर्वतः प्राप्नोति। सम्यक् कृषिवाणिज्यव्यवस्थया आवश्यकवस्तूनां सर्वत्रोपलब्धिं कारयेदित्यर्थः।

इदमत्रावधेयं "**सप्त सप्त हि मारुता गणाः**" ($7 \times 7 = 49$) नव चत्वारिंशत् प्राणवायवः भवन्ति। एषः मरुद्गणः वृक्षेभ्यः वनस्पतिभ्यः त्यक्ताऽपानवायुः

---

1. तुदादिः आ.अ.पा.धा.
2. उणादिः, 1/94.
3. पा.अ. 5/4/38.
4. पा.अ. 7/2/115.
5. विक्रमादित्यकोशः
6. संसारावर्तकोशः
7. शतपथ., 9/3/1/7.
8. शतपथ., 9/3/1/25.

यः मानवानां पशूनामन्यजङ्गमानां च प्राणवायुरस्ति तं वायुं मानवादिजङ्गमान् प्रत्यानयति। तथैव मनुष्यादिजङ्गमेभ्यः परित्यक्ताऽपानवायुः यः वृक्षादिवनस्पतीनां प्राणवायुरस्ति तं वायुं वृक्षादिवनस्पतीन् प्रति गमयति। एवमेषः मरुद्गणः मानवादिजङ्गमानां प्राणवायुं प्रददत् वृक्षादिवनस्पतिभ्यः प्राणवायोरुत्पादनमपि कुर्वन् भवति।

तथा च एषः मरुद्गणः प्राणिनां खाद्यं भवन्नपि न क्षीयते। नैरन्तर्येण चैतन्यं ददत् चेतनः प्रचलति। यतः एकप्रकारकप्राणिनां भोगे एव अन्यप्रकारकप्राणिनां भोगोत्पादनं भवति। उपभोग एवोत्पादनरहस्यत्वात् भोज्योऽप्येषः भोगान्न क्षीयते।

यथात्र मरुद्गणः तथैव कृषिः पशुपालनं वाणिज्यकर्म च। भोग्यवस्तूनामुत्पादनं तेषां यथायोग्यप्राणिनां कृते वाणिज्यसंचारेण सर्वत्र सौलभ्यम्। तद्यथा मानवाः पशवश्च यं मलमूत्रादिकं त्यजन्ति तं मलमूत्रादिकमेव कृषिकार्यार्थमुर्वरकानामुत्पादनाय भवति। तथैव कृषिकर्मणा उत्पादितपदार्थाः अन्नशाकतृणादयः यथावश्यकमानवादिजङ्गमानां भोगाय भवन्ति। एवमेव सर्वेषां भोग्यपदार्थानामुत्पादनं राष्ट्रे तेषां सर्वेषु पदार्थानां संचरणकर्मणा सर्वत्रोपलब्धिरेव राष्ट्रे वैश्यवर्णनियोजनमस्ति।

"**विशो वै मरुतः**"। निश्चयेन सर्वेषु प्राणिषु प्राविशत् संचरमाणप्राणवायुवत् प्राणदायिभोग्यवस्तूनां सर्वत्र सौलभ्यमेव वैश्यत्वमस्ति।

"**विशमेव तद्विशा समर्द्धयति।**" अनेन भोग्यवस्तूनामुत्पादनसंचरणात्मक-कृषि-वाणिज्यकर्मणा उत्पादकः उपभोक्ता वणिक् च समृद्धिं प्राप्नोति। एतेषां समृद्धौ एतद् वाणिज्यकर्म एव समृद्धिं प्राप्नोति। एवमनेन कर्मणा राष्ट्रमेव सम्यक् ऋद्धिं प्राप्नोति।

वयं पश्यामः यत् कृषिवाणिज्योत्पादित भोगान् एव सर्वे प्राणिनः भुञ्जते। तथाप्युपभोगपदार्थानां क्षयः न भवति।. भोग एवोत्पादनरहस्यत्वात्। तदेव वदति श्रुतिः

"**तस्माद्वैश्योऽद्यमानो न क्षीयते प्रजननाद्धि सृष्टः।**"[1]

अत्र प्रश्नः उदेति। संस्कृतेरादिमावस्थायां सर्वे जनाः कृषकाः एव विश एव आसन्। ततः एव ब्रह्मोत्पत्तिः ज्ञानोत्पत्तिः ज्ञानिनः एव ऋषयः ब्राह्मणाः। ततः विड्भ्यः एव पारस्परिकविमर्शविज्ञानात् ब्राह्मणेभ्यः ऋषिभ्यः वा क्षत्रोत्पत्तिः। ततः पुनः राष्ट्राध्यक्षेण राज्ञा क्षत्रेण ब्राह्मणवर्णनियोजनं, क्षत्रियवर्णनियोजनं, वैश्यवर्णनियोजनमिति कथम् ? इदमत्रावधेयं यत् संस्कृतेः प्रारम्भकाले विशः जनाः आसन् तत्र व्यक्त्याश्रितं ज्ञानमासीत्। तज्ज्ञानं पारस्परिकविमर्शेन कृषिविज्ञानादिरूपेण बृंहन्नासीत्। तथापि तस्य सामुदायिकश्रेयोत्पादकं व्यवस्थितरूपं नासीत्। अतः पारस्परिकविमर्शेन सामुदायिकहितात्मिका क्षत्रोत्पत्तिः। ततः क्षत्रेण सामुदायिकश्रेयोत्पादनाय जनानां ज्ञानसम्पन्नतायै

1. ताण्ड्यम.ब्रा. 6/1/10.

ब्रह्म, ब्रह्मचर्यं, ब्राह्मणं ब्रह्मकुलं च व्यवस्थितम्। तथैव जनानां रक्षायै क्षत्रं, क्षत्रनियमाः, नियमानां नियामकाः क्षत्रियाः, क्षात्रधर्मश्च व्यवस्थितम्। तथैव कृषकाः आसन् तथापि कृषेः व्यवस्थितं रूपं नासीत्, संचारव्यवस्था नासीत्। अतो कृषेरुत्पादनस्य समुचितव्यवस्था तस्या वितरणव्यवस्था च राष्ट्रे वैश्यवर्णनियोजनमस्ति। अयमेव विषयः शतपथे स्पष्टोऽस्ति—

**''स नैव व्यभवत्स विशमसृजत। यान्येतानि देवजातानि गणशः आख्यायन्ते वसवो रुद्रा आदित्या विश्वेदेवा मरुदिति।''**[1]

लोकानां ब्रह्मविकासाय ज्ञानविकासाय उक्तप्रकारकब्राह्मणवर्णव्यवस्थाकृतेऽपि। लोकानां रक्षायै दुर्जनानां शासनाय क्षत्रियवर्णव्यवस्थाकृतेऽपि। जनसमुदायमपेक्षितवैभवं न प्राप्तवान्। भोगपदार्थानां संचरणव्यवस्थाया अभावात्। अतः जनानामावश्यकभोग्यवस्तूनां संचारव्यवस्थासंपादनाय विशमसृजत वैश्यवर्णरचनां कृतवान् श्रमज्ञानात्मकविमर्श-विज्ञानम्। तं विशं प्रसिद्धदैवीयैः प्राकृतिकैः रूपकैः ज्ञापयति श्रुतिः यान्येतानि देवजातानीति स्वार्थे निष्ठा, य एते देवजातिभेदाः इत्यर्थः। गणश आख्यायन्ते कथ्यन्ते। गणात्मको हि विशः संहता हि वित्तोपार्जने समर्थाः न एकैकशः। वसवः अष्टसंख्यात्मको गणः तदेवम्—

**''कतमे वसव इति। अग्निश्च पृथिवी च वायुश्चान्तरिक्षञ्चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसवः। एते हीदं सर्वं वासयन्ते। ते यदिदं सर्वं वासयन्ते तस्माद् वसव इति।''**[2]

यथा एते वसवः सम्भूय परस्पराश्रयेन पारस्परिकेण सहयोगेन परस्परादानेन सर्वस्येदं वासहेतुभूताः भवन्ति। तथैव गणशः परस्परादानप्रदानेन पारस्परिकेण सहयोगेन वाणिज्यकर्मणा वित्तोपार्जनेन जनानां जीवनदायिनी राष्ट्रोन्नतिः।

रुद्राः एकादशात्मकः गणः तदेवम्—

**''कतमे रुद्रा इति। दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदस्मान्मर्त्याच्छशरीरादुत्क्रामन्यथ रोदयन्ति तद्यद्रोदयन्ति तस्माद्रुद्रा इति।''**[3]

यथैते इन्द्रियात्मकाः प्राणाः रुद्रा परस्परादानप्रदानेनान्यप्राणान् भोगान् ददति स्वयमपि भुञ्जते। तथैव गणात्मकः विशः स्वकर्मणा भोगानामुत्पादनेन वाणिज्यात्मकवितरणेन च सर्वेषां प्राणिनां भोगान् ददत् स्वयमपि भुञ्जते। तथैव द्वादशादित्याः

---

1. **शतपथ., 14/4/2/24; बृहदारण्यक, 1/4/12.**
2. **शतपथ., 11/6/3/6.**
3. **शतपथ., 11/6/3/7.**

यथा च श्रुतिः वदति—

**"कतम आदित्या इति। द्वादश मासाः संवत्सरस्यैत आदित्या एते हीदं सर्वमाददाना यन्ति। ते यदिदं सर्वमाददाना यन्ति तस्मादादित्या इति।"**[1]

यथैते संवत्सरमासाः परस्परात् समन्ताद् गृह्णन् ऋतवः जनयन् ऋतुभिश्च सर्वं जनयन् सर्वं ददत् सर्वं गृह्णन् यन्ति चरन्ति। समग्रे लोके जीवनं संचारयन्ति। तथैव विशोऽपि आर्तवं सर्वं जनयन्। सर्वोत्पादं सर्वस्मै संचारयन् लोके जीवनमेव संचारयन्ति।

अथवा विश्वेदेवाः सूर्यस्य रश्मय एव समन्ताद् प्रसरन् सर्वं जनयन् सर्वमाददानाः चरन्ति। अनन्ताः रश्मयः एव सर्वं जनयन्ति जीवनं संचारयन्ति। तथा च श्रुतिः—

**"रश्मयो ह्यस्य (सूर्यस्य) विश्वे देवाः"**[2] **अतो "अनन्ताः विश्वेदेवाः"**।[3]

यथा एते रश्मयः सर्वत्र संचरन् सर्वं जनयन्ति, सर्वं कुर्वन्ति। सर्वस्मिन् जीवनं संचारयन्ति। तथैव वैश्यगणस्य कर्म सर्वत्र संचरणात्मकम् उत्पादनात्मकञ्च। तदेव श्रुतिः वक्ति —

**"विशो वै विश्वेदेवाः"**।[4] **"सर्वमिदं विश्वेदेवाः।"**[5]

वैश्यवर्णस्य श्रेष्ठतमं कर्मस्वरूपं श्रुतिः प्रकाशयति मरुदिति तच्च **"सप्तसप्त हि मारुता गणाः"**[6] ( 7 × 7 = 49) पूर्वमेव व्याख्यातम्।

## 4- शूद्रवर्णयोजना

**"तपसे शूद्रम्"**।[7] **तपो वै शूद्रः। तप एव तत्तपसा समर्द्धयति।**[8]

मन्त्रार्थस्य प्राक् शूद्रपदार्थः तपपदार्थश्च विमर्शनीयः। **"शोचते-ज्वलतिकर्मणः"**[9] इति निघण्टूक्तज्वलतिकर्मा शुच् धातोः **"शुचेर्दश्च"**[10] सूत्रेण

1. शतपथ., 11/6/3/8.
2. शतपथ., 3/9/2/6,12.
3. शतपथ., 14/6/1/11.
4. शतपथ., 5/5/1/10.
5. शतपथ., 3/9/1/14; 4/4/1/9,18.
6. शतपथ., 9/3/1/25.
7. यजुर्वेद., 30/5.
8. शतपथ., 3/6/2/10.
9. निघण्टुः, 1/16.
10. उणादिः, 2/19.

'शु' इत्यस्य उकारे दीर्घे रक् प्रत्यये दश्चकृते '**शूद्र**' पद निष्पत्तिः। शोचिः तपशब्दश्च ज्वलतो नामधेयेषु पठितम्।[1] एवं यः शोचति ज्वलति प्रकाशते स्वश्रमेण स शूद्रः। तथैव निघण्टूक्त्या तप ज्वलने[2] तप ऐश्वर्ये[3] वा धातोः "**सर्वधातुभ्योऽसुन्**"[4] सूत्रेण असुन् प्रत्यये तपशब्दसिद्धिः। तापयति ज्वालयति अकर्मण्यतां शत्रून्[5] वा येन तत्तपः। तप्यते समर्थो भवति येन वा तत्तपः। श्रमेणैव सामर्थ्यमायाति। अतः श्रम एव तपः। तथा च श्रुतिः—

"**तपसा वै लोकं जयन्ति।**"।[6]

"**तद्धि जातं यत् तपसोऽधिजायते।**"[7]

हिन्दी भाषायामपि लोकोक्तिः "**श्रम का खाता हूँ दान का नहीं।**"

अथ मन्त्रार्थं विचारयामः—

राष्ट्रस्य समृद्ध्यै कर्मणामुत्कर्षाय जनानामात्मनिर्भराय अन्नोत्पादनवितरणादिकर्मातिरिक्तशिल्पादिकर्मणां स्वातन्त्र्येण विकासाय सर्वेषां कर्मणामाधारभूतस्य यादृक् महच्छ्रमस्य तपस्य वावश्यकता भवति तादृशं "**तपसे**" तादृक्श्रमकरणसामर्थ्यसंपन्नं जनं तापसं "**शूद्रं**" वा राष्ट्राध्यक्षः राजा तदर्थसंगठिता प्रशासनिकसभा वा "**आलभते**" सर्वतः प्राप्नोति। तादृशकर्मणि नियोजयतीत्यर्थः।

"**तपो वै शूद्रः**" निश्चयेन लक्ष्यप्राप्त्यर्थक्रियमाणश्रम एव तप एव शूद्रपदाभिधेयः।

"**तप एव तत्तपसा समर्द्धयति।**" यत्कार्यं लक्ष्यीकृत्य तापसेन जनेन शूद्रेणेत्यर्थः श्रमः क्रियते तपः क्रियते तेन श्रमेण तत्तपसा तल्लक्ष्यमाप्नोति, तत्कार्यं सिध्यतीत्यर्थः। अनेन तापसेन शूद्रेण कृततपसा लक्ष्यसिद्धिपूर्वकं कार्यस्य समृद्धौ, तापसस्य शूद्रस्य समृद्धौ, राष्ट्रस्य समृद्धौ, तप एव सम्यक् ऋद्धिं प्राप्नोति।

ननु किं शूद्रवर्णस्य प्रयोजनम्। ब्राह्मणवर्णव्यवस्थया सर्वजनानां शिक्षायाः व्यवस्था कृता। क्षत्रियवर्णेन च सर्वेषां प्रजानां पालनरक्षणव्यवस्था दुष्टानां दण्डव्यवस्था

---

1. निघण्टुः, 1/17.
2. निघण्टुः, 1/17.
3. पा. धातुपाठः, 4/39.
4. उणादिः, 4/190.
5. परा ऋणी हि तपसा यातुधानान्। ऋग्वेदः, 10/87/14.
6. शतपथ., 3/4/4/27.
7. काठकसं., 34/12.

च कृता। तथैव वैश्यवर्णेन भोग्यवस्तूनामुत्पादनव्यवस्था विपणनव्यवस्था जाता। सामान्यः जनोऽपि विश एव। एवं सर्वेषां कर्मणां व्यवस्थाजाते सति निष्प्रयोजनमस्ति शूद्रवर्णम्। अस्याः शङ्कायाः समाधानं स्वयं करोति श्रुतिः—

**''स नैव व्यभवत्स शौद्रं वर्णमसृजत पूषणम्। इयं ( पृथिवी ) वै पूषेयं हीदं सर्वं पुष्यति यदिदं किञ्च।''**[1]

उपर्युक्तप्रकारेण ब्राह्मणक्षत्रियवैश्यवर्णव्यवस्थाकृतेऽपि एषः जनसमुदायः राष्ट्रं वापेक्षितं वैभवं न प्राप्तवान्। कृषिकर्मणि हलस्य फालस्य चावश्यकता भवति। दैनिकचर्यायां पात्राणामवश्यकता भवति। रक्षणाय धन्वादिशस्त्राणामावश्यकता भवति। वस्तूनां नयनानयनार्थं वाहनस्यावश्यकता भवति। सर्वस्मै भवनवस्त्राद्यावश्यकता भवति। स्वतन्त्रश्रमिकवर्गाभावे एतासामावश्यकतानां पूर्तिः न भवति स्म। तदेव श्रुतिः वदति **''स नैव व्यभवत्''** अतस्तस्या आवश्यकतायाः पूर्तये पारस्परिकविमर्शविज्ञानमेव ब्रह्मैव **शौद्रं वर्णमसृजत**। शूद्र एव शौद्रः स्वार्थेऽणि वृद्धिः। यः स्वीयेन कुशलश्रमेण उपर्युक्तावश्यकवस्तूनां पूर्तिद्वारेण सर्वेषां वर्णानां पोषणं करोति सः शौद्रो वर्णः पूषणमेव। तं शूद्रवर्णं प्राकृतिकेन दैवीयरूपकेण ज्ञापयति श्रुतिः। **इयं पृथिवी वै पूषेति**। पुष्यतीति पूषा विशेषतस्तन्निर्दिशति — इयं हीदं सर्वं पुष्यति यदिदं किञ्च। यथेयं पृथ्वी सर्वेषामाधारभूतत्वात् सर्वेषां लोकानां प्रतिष्ठास्ति। तथैव श्रमोऽपि सर्वेषां कर्मणामाधारभूतत्वात् सर्वेषां कर्मणां प्रतिष्ठास्ति। अतः वैदिकः राष्ट्रात्मा राजा घोषयति—

**''पद्भ्यां जङ्घाभ्यां धर्मोऽस्मि, विशि राजा प्रतिष्ठितः।**[2]**''** इति पद्भ्यां जङ्घाभ्यां धारणसामर्थ्यः धर्मोऽस्म्यहम्। अतः प्रजासु प्रतिष्ठितः राजास्मि। तदेव श्रुतिः वदति—

**''एषु लोकेषु प्रतितिष्ठति य एवं वेद''।**[3] यः शूद्रवर्णस्य रहस्यमेवं विजानाति सः अस्मिन् लोकेषु प्रतिष्ठितः भवति।

ननु सर्वेषा शिल्पानां स्वतन्त्रव्यवस्थापनायै शूद्रवर्णमसृजत्। इत्यत्र किं प्रमाणम्? वच्मि वेद एव निगमयति। तदेवम् — **''तपसे कौलालम्''।**[4] एवं प्रकारकैः मन्त्रैः मृत्तिकया श्रमेण कौशलेन च मृत्तिकापात्रादिनिर्मातारः कुलालादयः शिल्पिनाः उक्ताः सन्ति।

---

1. शतपथ., 14/4/2/25; बृहदारण्यक, 1/4/13.
2. यजुर्वेदः, 20/9.
3. ताण्ड्य., 6/2/11.
4. यजुर्वेदः, 30/7.

ऋषीणां गतिमानात् तपसः ज्ञानाच्चोद्भूतस्य राष्ट्रस्य वर्णानाञ्च एकात्मसामरस्यं दर्शयितुं ऋग्वेदीये पुरुषसूक्ते एकं रूपकमस्ति। तस्मिन् विषयेऽप्यत्र विचारयामः बहुचर्चितत्वात्तस्य।

## चातुर्वर्ण्यस्य ऋग्वेदीयं रूपकम्

**यत् पुरुषं व्यदधुः कतिधा व्यकल्पयन्।**
**मुखं किमस्य कौ बाहू का ऊरू पादा उच्येते॥**[1]

अत्रास्मिन्पुरुषसूक्ते प्राथम्येन "पुरुष एवेदं सर्वम्" इति सम्यक् निगमितम्। यतः इदं सर्वं पुरुष एव अतः एतद् राष्ट्रमपि पुरुष एव, मानवसमुदायोऽपि पुरुष एव मानवसमुदायस्योत्कर्षाय कृताः कर्मविभागात्मकाः वर्णा अपि पुरुष एव। यदिति यदा पुरुषं विराड्रूपं व्यदधुः विशिष्टेन मनसि धृतवन्तः तदानीं कतिधा कतिभिः प्रकारैर्व्यकल्पयन् विविधं कल्पितवन्तः? अस्य पुरुषस्य मुखं किमभवत् ? कौ बाहू अभूताम् ? का ऊरू? कौ च पादौ? उच्येते?

**ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः।**
**ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत॥**[2]

इदानीं पूर्वोक्तानां प्रश्नानामुत्तराणि दर्शयति। विराट्पुरुषस्य विविधधारणातः अत्र एकात्ममानवसमुदायरूपविराट्पुरुषात्मिका प्रथमा धारणा वक्ति। एकात्ममानवसमुदाय-रूपपुरुषस्यास्य ब्राह्मणः मुखमासीत्। योऽयं राजन्यः क्षत्रियः स बाहू कृतः। यद्वैश्यः तद् विराट्जनसमुदायात्मकपुरुषस्यास्य ऊरू भवतः। तथास्य पद्भ्यां पादाभ्यां शूद्रः श्रमिकवर्गः तापसवर्गो वा अजायत। अत्र एवं विमर्शोऽस्ति।

1- यतः ज्ञानं मुखादुत्पन्नैः शब्दैरेव भवति। ज्ञानमेव ब्रह्म। ब्रह्मणा युक्तः ज्ञानेन युक्तः ज्ञानदाने समर्थश्च पुरुषः ब्राह्मणः। लाघवेन ज्ञानमेव ब्रह्म, ब्रह्मैव ब्राह्मणः तच्च मुखाज्जातम्। तदेव रूपकमिदं ब्राह्मणः मुखम्। मुखाज्जातं वा ब्राह्मणः। तदेव वदति श्रुतिः —

**"करोति मुखेन वीर्यं य एवं वेद।"**[3]

ये एतद् रहस्यं जानन्ति ज्ञानदानाय ज्ञानविस्ताराय मुखेन श्रमं कुर्वन्ति।

2- यतः आततायिनः रक्षणीयस्य रक्षायाः भावना संवेदना वा हृदि एव जायते, ततः रक्षणीयस्य रक्षायाः पराक्रमः बाहुभ्यामेव प्राकट्यते। तदेवेदं रूपकं बाहू राजन्यः

---

1. ऋग्वेदः, 10/90/11.
2. ऋग्वेदः, 10/90/12.
3. ताण्ड्यम.ब्रा., 6/1/7.

कृत इति। उरस्त एव बाहुभ्यां राजन्यः जातः। तदेव स्फारयति श्रुतिः—

**"करोति बाहुभ्यां वीर्यं य एवं वेद"।**[1]

ये एतद् रहस्यं जानन्ति सहृदयं भूत्वा बाहुभ्यां पराक्रमं कुर्वन्ति।

3- यथा शरीरे संग्रहोपभोगोत्पादनकर्मणां सम्पादका अवयवा उदरोरूपस्थाः सन्ति। तथैव लोके वैश्यः कृषकः भोग्यानामुत्पादनकर्ता, भोक्ता, भोग्यानां व्यापारसंचारकः भोगप्रदाता चास्ति। यथा भुक्तं भुक्तान्नमुदरे गच्छति पचति च। अनेन भुक्तान्न-पाचनरूपव्यापारादेव शरीरे कर्मकरणसामर्थ्यमायाति। प्रजननाय शुक्रशोणितमेलनात्मक-सामर्थ्यं पुरुषाः स्त्रियश्च धारयन्ति। तत एव प्रजननं भवति। समेषां प्राणिनां प्रजननमुपस्थादेव भवति। तथैव कृषकः स्वोपभोगाय जनानामुपभोगाय च अन्नादिभोग्यपदार्थानामुत्पादनं करोति। संग्रहः करोत्युदरवत्। यथा भुक्तान्नं पाचनव्यापारेण समग्रे शरीरे रसरक्तादिना संचरति तथैव कृषेरुत्पादितमन्नादिकमपि वैश्यानां वाणिज्येन समग्रे राष्ट्रे संचरति। तस्यैवोपभोगं कुर्वन्ति सर्वे जनाः। भुक्त्वा च सामर्थ्यसम्पन्नाः भवन्ति। यस्योदरस्थं भुक्तान्नं पाचनव्यापारेण न हि संचरति तस्य जनस्य शरीरः रोगी भवति। प्रजननादिकं समग्रं सामर्थ्यं नश्यति मृत्युञ्च भवति। तथैव यस्मिन् राष्ट्रे वैश्यानामुत्पादकानां कृषकानां वाणिज्यं न हि संचरति तद्राष्टं रोगी भवति तस्य सामर्थ्यं क्षीयते। तदेवेदं रूपकम्, **"ऊरू तदस्य यद्वैश्यः" "मध्यतः एव प्रजननात् विशमसृजत्"** इति वा। यथा समेषां प्राणिनां मध्यतः उपस्थादेव प्रजननं भवति तथैव कृषेः समेषामन्नानामुत्पादकत्वात् समग्रे राष्ट्रे संचारकत्वाच्च जनानां वैश्यसंज्ञा जाता। अत एव वेदे जनसामान्यस्यापि विट्संज्ञा। आदौ कृषकत्वात् समेषाम्। तथा च श्रुतिः —

**"आद्या हीमाः प्रजाः विशः"**[2]

यतः समग्रः मानवसमुदायः अनया सामान्यप्रजननप्रक्रियया एव जायते अतः स विड्। तत एव ब्राह्मणक्षत्रियवैश्यशूद्रवर्णं रुच्यनुसारं वृणुते अतः श्रुतिः वक्ति—

**"तस्माद्वैश्योऽद्यमानो न क्षीयते प्रजननाद्धि सृष्टः"।**[3]

लोकेऽपि दृश्यते यस्योत्पादकस्य वैश्यस्य उत्पादः यावदधिकाधिकमुपभुज्यते तावदेव तस्योत्पादस्य उत्पादनमधिकाधिकं वर्द्धते। उत्पादकश्च तावदेव अधिकाधिकां समृद्धिमाप्नोति। ये एनं रहस्यं विजानन्ति ते स्वोत्पादस्य उपभोगवर्द्धने तत्पराः सन्ति। अद्यापि पश्यन्तु लोके।

---

1. ताण्ड्यम.ब्रा., 6/1/9.
2. शतपथ., 4/2/1/17.
3. ताण्ड्य., 6/1/10.

4- यतः कस्यापि कार्यस्य सम्पादनं श्रमेण विना न हि भवितुं शक्नोति। कोऽपि कार्यारम्भः श्रमादेव भवति। समग्रमेव कर्म श्रमाधीनं वर्तते। तदेवमपि वक्तुं शक्यते यत् कर्मणः शरीरं श्रमरूपपादयोरुपरि स्थितोऽस्ति। श्रमस्य श्रेष्ठतमं प्रतीकं पदमस्ति। ज्ञानग्रहणार्थं ज्ञानदानाय वा ब्रह्मकुले विद्यालये गन्तव्यमस्ति चेत् पदयोः सक्रियता भवति। प्राथम्येन पद्भ्यां वीर्यं कुर्यात्। अनन्तरं मुखेन वीर्यं कर्तव्यम्। कस्यापिआततायिनः रक्षणीयस्य हिंसात्मकपीडावसरे सति झटिति पादावेव धावतः, बाहूभ्यां पराक्रमस्तु अधिगते एव प्राकट्यते। तत्रापि पादयोः भागः न्यूनं न भवति। तथैव कृषिः वाणिज्यञ्च, उत्पादनमुत्पादितवस्तूनां संचारेण समग्रे राष्ट्रे उपलब्धिश्च किं पद्भ्यां संचरणाभावेऽपि कथमपि भवितुं शक्नोति? नैव। पादावेव संचारः। एवं प्रकारेण इदं स्पष्टं यद्यथा पादयोरुपरि शरीरस्य स्थितिः। तथैव श्रमरूपपादयोरुपरिकर्मणः शरीरं राष्ट्रं वा स्थितमस्ति। तदेवेदं रूपकम्—

**"पद्भ्यां शूद्रोऽजायत"**

अस्य वैदिकज्ञानात्मकरूपकस्य यदा कोऽपि एवमर्थं करोति यत् विराट्पुरुषस्य परमात्मनः वा मुखाद् बाहूभ्यां पद्भ्याञ्च मानवानां ब्राह्मणादिजातिविशिष्टमनुष्यानां जन्म अभवत्। तदा एषः विक्षिप्तः अस्ति। चिकित्सापेक्षतेऽस्येति ज्ञातव्यम्। प्रजननस्य मार्गं तूपस्थ एव तत एव जातं समेषां जन्म। प्रकृतौ मानवानामुत्पत्तयेऽन्यः कोऽपि मार्गः नास्ति। अत्र अजायतशब्देन तत्तद्वर्णविभागादुक्तं कर्म अजायत। वृणीतकर्म एवात्र वर्णपदेन उक्तमस्ति वेदे।

## वर्णानां वैदिकं स्वत्वजागरणम्

वेदे वर्णानां स्वे स्वे कर्मणि निष्ठायाः जागरणाय उत्कृष्टस्य प्रतीकस्य प्रयोगः कृतः अस्ति। येन स्वे स्वे कर्मणि दक्षतापूर्ण-संलग्नता भवतु। तन्मन्त्रं व्याख्यास्यामः अत्र। तत्र मन्त्रः[1]—

**अग्नेर्भागोऽसि दीक्षाया आधिपत्यं ब्रह्म स्पृतं त्रिवृत्स्तोम इन्द्रस्य भागोऽसि विष्णोराधिपत्यं क्षत्रं स्पृतं पञ्चदशस्तोमो नृचक्षसां भागोऽसि धातोराधिपत्यं जनित्रं स्पृतं सप्तदशस्तोमो मित्रस्य भागोऽसि वरुणस्याधिपत्यं दिवः वृष्टिर्वात स्पृतं एकविंशस्तोमः।**

## 1-ब्राह्मणवर्णस्य स्वत्वजागरणम्

1- अत्र मन्त्रे प्रथमपंक्तौ प्रथमवर्णस्योद्बोधनमस्ति। प्राथम्येन तस्यार्थविमर्शः-

भगवान् वेदः ब्राह्मणवर्णस्य स्वत्वं जागरन् वक्ति। हे ब्राह्मण! त्वमग्नेर्भागोऽसि

1. यजुर्वेदमा.सं., 14/24 एवं तै.सं., 4/3/9/1.

तवोपरि दीक्षायाः शिक्षायाः आधिपत्यं दायित्वमस्ति। यथा अग्निः स्वसम्पर्के आगतं सर्वमग्निमेव करोति, तथैव त्वमपि सर्वान् स्वब्रह्मचारीन् ब्रह्मणा ज्ञानेन युक्तं कृत्वा ब्राह्मणमेव करोषि ज्ञानसम्पन्नं करोषीत्यर्थः। एवं त्वया ब्रह्मज्ञानं स्पृतं रक्षितम्। त्वं त्रिवृत् स्तोमोऽसि ब्रह्मचारिणं विद्यार्थिनं त्रिवृत् त्रिवारं पाठिता विद्या अवश्यमेवायाति। त्वं त्रिवृत् पाठयित्वा त्रिवाक् भूत्वा वा लोकं राष्ट्रं वा ज्ञानसम्पन्नं कृतवान्। यतः त्रिवारमध्यापनानन्तरं ज्ञानदानस्य प्रक्रिया शिक्षकाय ब्राह्मणाय वा समाप्ता न भवति, अपितु नैरन्तर्येण चलत्येव। अत एव "त्रिवृत्" इत्युक्तम्। अत्र 'वृत्' नैरन्तर्येण गतिमानतायाः परिचायकः अस्ति। अत उक्तं त्वं त्रिवृत्स्तोमोऽसि' ज्ञानं ददत्त्वं राष्ट्रात्मा पुरुषस्य परमात्मनः त्रिवृत् स्तुतौ संलग्नोऽसीत्यर्थः।

अस्य मन्त्रस्य पंक्तेः ऋग्वेदीयस्य रूपकस्य च संयुक्तं व्याख्यानं दृश्यते ब्राह्मणेषु, तदेवम् —

**"सोऽकामयत यज्ञं सृजेयेति। स मुखत एव त्रिवृतमसृजत। तं गायत्री छन्दोऽन्वसृज्यत- अग्निर्देवता ब्राह्मणो मनुष्यो वसन्त ऋतुः। तस्मात् त्रिवृत्स्तोमानां मुखं गायत्री छन्दसामग्निर्देवतानां ब्राह्मणो मनुष्याणां वसन्त ऋतूनाम्। तस्माद्ब्राह्मणो मुखेन वीर्यङ्करोति मुखतो हि सृष्टः।"**

**"करोति मुखेन वीर्यं य एवं वेद।"**

स इति प्रजापतिः राजा अकामयत यज्ञं कर्म सृजेय। अग्रे सर्वं स्पष्टं पूर्व-व्याख्यानात् विषयस्पष्टत्वाच्च। ये विराड्पुरुषस्य मुखतः ब्राह्मणजातिविशिष्टमानवानां जन्म अभवदेवं शरीराहंकारेण कलहं कुर्वन्ति तस्मै वक्तव्यं भवते उपस्थेन किं? विवाहेन किं? मुखेनैव वीर्यं निसार्य प्रजननं कुर्वन्तु। एतादृशप्रचण्डमूर्खाणां मूर्खतायाश्च वेदे स्थानं नास्ति।

यथात्र ब्राह्मणव्याख्यानमस्ति तथैव कृष्णयजुर्वेदसंहिता[1] सहमिश्रितब्राह्मणेऽपि किञ्चित्परिवर्तनेन व्याख्यानमस्ति।[2] तत्र यजुर्वेदे ब्राह्मणमिश्रिततत्वमेव कृष्णात्वम्। यथा शङ्कराचार्यः वदति **"तानीमानि शुक्लानीत्यव्यामिश्राणि ब्राह्मणेन। अथवा यानीमानि यजूंषि तानि शुक्लानि शुद्धानीत्येतत्।"**[3]

---

1. ताण्ड्य., 6/1/6-7.
2. प्रजापतिरकामयत प्रजायेयेति स मुखतस्त्रिवृतं निरममीत तमग्निर्देवताऽन्वसृज्यत गायत्री छन्दो रथन्तरं साम ब्राह्मणो मनुष्याणामजः पशूनां तस्मात् ते मुख्या मुखतो ह्यसृज्यन्त। तैत्तिरीयसंहितोक्तब्राह्मणम्, 7/1/1.
3. बृहदारण्यक., 6/5/3 शाङ्करभाष्यम्

## 2- क्षत्रियवर्णस्य स्वत्वजागरणम्

मन्त्रे द्वितीयपंक्तौ क्रमेण क्षत्रियवर्णोद्बोधनमस्ति।

. भगवान् वेदः क्षत्रियवर्णस्य स्वत्वं जागरयति। हे क्षत्रिय! त्वमिन्द्रस्य ईश्वरस्य परमात्मनः भागोऽसि तवोपरि विष्णोराधिपत्यं दायित्वमस्ति। यः सर्वेषु भूतेषु प्रविष्टः सर्वेषामन्तर्यामितया सर्वं यमयति सर्वेषां पालनं करोति सः विष्णुः परमात्मा तस्य परमात्मनः पालनशासनात्मकमाधिपत्यं दायित्वं तवोपरि अस्ति। यथा सर्वेषु भूतेषु प्रविष्टः परमात्मा सर्वं जानाति तथैव क्षत्रियोऽपि राष्ट्रियनियमैः गुप्तचरैः क्षत्रियैश्च समग्रे राष्ट्रे प्रविष्टः राष्ट्रस्य स्थितिं सम्यक् जानाति। यथावश्यकशासनेन पालनेन च राष्ट्रं रक्षति पालयति। यथा परमात्मा विष्णुः दुष्टान् दण्डयति। अतिदुष्टानां राक्षसानां संहारं करोति सज्जनानां पवित्रान्तःकरणभक्तानां च रक्षणं करोति। तथैव राजापि दुष्टान् दण्डयति राज्ये सद्गुणान् स्थापयति। सज्जनानां राष्ट्रभक्तानां रक्षणं करोति। अत एव यस्य राज्ञः शासने न्यायेन प्रजानां पालनं जातं तं राजानं प्रजाजनाः परमात्मनः विष्णोरवतारं कथयन्ति। अत एव भगवान् वेदः वक्ति — हे राजन्। प्रजाः राष्ट्रञ्च स्वशरीरवत् पालनात्, प्रजानामात्मभूतत्वात् त्वं परमात्मनः भागोऽसि।

त्वयानेन प्रजापालनात्मककर्मणा क्षत्रं रक्षणधर्ममेव रक्षितम्। हे क्षत्रिय! त्वं पञ्चदशस्तोमोऽसि। पृथिव्यप्तेजोवाय्वाकाशेति पञ्चमहाभूतानां शुद्धिः, प्रदूषणमुक्तता। तेषां शुद्धमहाभूतानां यथावश्यकोपलब्धिः। पञ्चप्राणानां शुद्धिः सक्रियता च अर्थात् समुचितचिकित्साव्यवस्थया प्रजासु आरोग्यस्थापनम्। मनसः, वाचः, कर्मणः, अन्तःकरणस्य, आत्मनश्च शुद्ध्या सक्रियतया च प्रजासु न्यायनैतिकताचारित्र्यसत्कर्मनिष्ठायाः राष्ट्रभक्तेश्च स्थापना। एतत्पञ्चदशकर्म। अनेन पञ्चदशकर्मणा त्वया राष्ट्रात्मा परमात्मा स्तुतः। तदेवोक्तं **"त्वं पञ्चदशस्तोम"** इति मन्त्रस्यास्य ऋग्वेदीयमन्त्रोक्तरूपकस्य च संयुक्तव्याख्यानं दृश्यते ब्राह्मणेषु। तदेवम् —

**"स उरस्त एव बाहुभ्यां पञ्चदशमसृजत तं त्रिष्टुप्छन्दोऽन्वसृज्यतेन्द्रो देवता राजन्यो मनुष्यो ग्रीष्म ऋतुस्तस्माद्राजन्यस्य पञ्चदशस्तोमस्त्रिष्टुप्छन्द इन्द्रो देवता ग्रीष्म ऋतुस्तस्मादु बाहुवीर्यो बाहुभ्यां हि सृष्टः।"**

**"करोति बाहुभ्यां वीर्यं य एवं वेद।"**[1]

स इति प्रजापतिः इत्यादि पूर्ववत्। किञ्चिद् परिवर्तनेन अन्येषु ब्राह्मणेष्वपि व्याख्यानमेतद्दृष्यते।[2]

1. ताण्ड्य., 6/1/8,9.
2. उरसः बाहुभ्यां पञ्चदशं निरमिमीत तमिन्द्रो देवतान्वसृज्यत त्रिष्टुप् छन्दो बृहत् साम राजन्यो मनुष्याणामविः पशूनां तस्मात्ते वीर्यावन्तो वीर्याद्धयसृज्यन्त। तै.सं., 7/1/1/2.

## 3- वैश्यवर्णस्य स्वत्वजागरणम्

मन्त्रे तृतीयभागे क्रमशः वैश्यवर्णस्योद्बोधनमस्ति। **"नृचक्षसां भागोऽसि"** इत्यादि। भगवान् वेदः वैश्यवर्णस्य स्वत्वं जागरयन् वक्ति। नराणां भावनानां द्रष्टारः प्रतिनरं द्रष्ट्रात्मना स्थितत्वात् तेषां भावनानां साक्षीपरमात्मनां भागोऽसि व्यक्तिबाहुल्येन बहुवचनं कल्पितम्। पुनश्च नराणां मनुष्याणां भावनाः चक्षुसः एव प्राकट्यते अतो भावनायाः अभिव्यञ्जकः देवः नृचक्षसिति। प्रतिव्यक्त्युपस्थितत्वात् ते देवाः नृचक्षसः तेषां नृचक्षसां— भागोऽसि। देवरूपजीवात्मनामाकाङ्क्षा सर्वासां भोग्यवस्तूनामुपलब्धिरेव। अन्नफलदुग्धव-स्त्रगृहपतिपत्नीपुत्रपुत्रीमोदप्रमोदस्वास्थ्यसौन्दर्यवैभवाद्युपलब्धिरेव सर्वेषां मानवानामाकाङ्क्षाः सन्ति। तेषामुत्पादने एव संलग्नोऽस्ति कृषकः वैश्यः। तद् भोगान् सर्वस्मै प्राप्तये एव व्यवस्थितं राष्ट्रव्यापि वाणिज्यकर्म। तस्मिन्नेव संलग्नोऽस्ति कृषकः वैश्यः। तदेवोक्तं हे वैश्य! त्वं नृचक्षसां भागोऽसि। **"धातोराधिपत्यम्"**। तवोपरि धातोः धारकस्य परमात्मनः आधिपत्यं दायित्वमस्ति। यथा धाता परमात्मा प्राणिनामुत्पादनेन भोगोत्पादनेन च सृष्टिं धारयति। तथैव विडपि सन्तानोत्पादनेन भोगोत्पादनेन मानवसमुदायं लोकं राष्ट्रं वा धारयति। तदेवोक्तम् — हे वैश्य तवोपरि धातोराधिपत्यमस्ति। अनेन कर्मणा त्वया जनित्रं प्रजननमुत्पादनञ्च स्पृतं रक्षितम्।

त्वं **"सप्तदशस्तोमोऽसि"**। द्वादशमासाः पञ्चर्तवः सम्मिल्य सप्तदश भवन्ति। मधुमास-माधवमास-शुक्रमास-शुचिमासेषमासोर्जमास-सहमास-सहस्यमास-तपमास-तपस्यमासेति द्वादशमासाः। वसन्तग्रीष्मवर्षाशरद्धेमन्ताः पञ्चर्तवः। वसन्तः स्वविषुवकालात् चत्वारिंशद्दिवसपूर्वमेवायाति। तत एव वसन्तोत्सवः। तर्हि वसन्तोत्सवादारभ्य माधवमासपर्यन्तमेकशतदिवसात्मकः वसन्तः। अवशिष्टस्य विंशतिदिवसात्मकस्य शिशिरस्य हेमन्तर्तौ अन्तर्भावः। एवं वसन्तग्रीष्मवर्षाशरद्हेमन्ताः पञ्चर्तवः भवन्ति। ऋग्वेदे तथैवोक्तत्वात्।

प्राणिनामावश्यकताः प्रवृत्तयश्च आर्तवा एव भवन्ति। ऋतुनियमादेव कृषिः तथैव च वाणिज्यकर्म संचरति। एवमत्र द्वादशमासाः पञ्चर्तवश्च सप्तदश भवन्ति। अनेन सप्तदशेन स्वकर्मणि संलग्नः वैश्यः। इदं सप्तदशात्मकं कर्म वा वैश्यानाम्। अनेन सप्तदशेन कर्मणा जनसमुदायात्मकं राष्ट्रात्मकं वा परमात्मानं स्तुतम्। तदेवोक्तम्मन्त्रे त्वं सप्तदशस्तोम इति।

ऋग्वेदीयरूपकस्य मन्त्रस्यास्य च संयुक्तं व्याख्यानमस्ति ब्राह्मणेषु तदेवम् —

**"स मध्यत एव प्रजननात्सप्तदशमसृजत तञ्जगती छन्दोऽन्वसृजत विश्वेदेवा देवता, वैश्यो मनुष्यो वर्षा ऋतुस्तस्माद्वैश्योऽद्यमानो न क्षीयते**

**प्रजनाद्धि सृष्टः। तस्मादु बहुपशुर्वैश्वदेवो हि जागतो वर्षा ह्यस्यर्तुः। तस्माद्ब्राह्मणस्य च राजन्यश्च आद्यो अधरो हि सृष्टः।''**[1]

अत्रोत्पादनमूलकत्वाद् वर्षा वैश्यस्य ऋतुः। शेषस्तु स्पष्टम्। किञ्चिद् परिवर्तनेन अन्येषु ब्राह्मणेष्वपि व्याख्यानमेतद्दृश्यते।[2]

## 4- शूद्रवर्णस्य स्वत्वजागरणम्

मन्त्रे चतुर्थभागे क्रमशः शूद्रवर्णस्योद्बोधनमस्ति। **''मित्रस्य भागोऽसि''** इत्यादि। भगवान् वेदः शूद्रवर्णस्य स्वत्वं जागरयन् वक्ति — हे शूद्र! त्वं समस्तप्राणिसमुदायस्य परममित्रस्य भगवतः सूर्यस्य भागोऽसि। यथा सूर्यः स्वप्रकाशेनापेक्षिततापेन च समस्तप्राणिसमुदायं जागरयति, जीवनं संचारयति, चैतन्यं कारयति तथैव शूद्रोऽपि स्वश्रमेन तपसा समेषां कर्मणि गतिं ददाति। व्यवस्थितेन श्रमेणैव शिल्पमायाति। एवमेषः श्रम एव समग्रकर्मणां मित्रमस्ति। अत एवोक्तं हे तपस्विन्! हे शूद्र! त्वं समेषां मित्रस्य सूर्यस्य भागोऽसि। जलाधिपतिः देवः वरुणोऽस्ति। यथा जलं निम्नस्थानं प्रति प्रवहति तं पूरयति च तथैव यस्य कर्मगतिः निम्ना भवति श्रमः श्रमिकश्च तत्रैव गत्वा तं पूरयति। यथा जलं जलचरस्थलचरनभचराणां समेषां प्राणिनां जडजङ्गमानां जीवनाधारोऽस्ति तथैव श्रमोऽपि घटपटवासाभूषणशस्त्रास्त्रादिभिः विविधैः शिल्पैः मनुष्याणां जीवनाधारोऽस्ति। अत उक्तं हे श्रमिक! हे शूद्र! तवोपरि वरुणस्याधिपत्यमस्ति। वरुणस्य दायित्वमस्ति। त्वया गृहवाटिकातडागादिनिर्माणशिल्पैः दिवः वृष्टिर्वात स्पृतं रक्षितम्। दिवसं वृष्टिं वातञ्च रक्षितम्। पुनः दिवसात् वृष्टेः वाताच्च रक्षितम्।

त्वमेकविंशस्तोमोऽसि। द्वादश मासाः पञ्चर्तवः मनः, वाणी, कर्म, आत्मा च इत्येकविंशतिः। त्वया मासानां ऋतूणां च सदुपयोगेन नव नव शिल्पनिर्माणाय मनसा वाचा कर्मणा स्वात्मानं समर्पितम्। येन नित्यनवनवशिल्पानां रचना संजाता। राष्ट्रस्योत्थाने लोकानां वैभवसम्पन्नतायै एषा तव महती भूमिका एव एकविंशस्तोमैः त्वया कृता राष्ट्रात्मनः परमात्मनः पूजा। तदेवोक्तम् त्वम् **''एकविंशस्तोमोऽसि''**।

## शूद्रसम्बान्धिचतुर्थपंक्तेः विनष्टब्राह्मणविमर्शः शुद्धब्राह्मणस्वरूपञ्च

दुर्भाग्येन ऋग्वेदीयरूपकस्य चतुर्थांशस्य मन्त्रस्यास्य चतुर्थपंक्तेश्च ब्राह्मणेषु कृतं संयुक्तं व्याख्यानं मन्त्रानुकूल्यं न भजतेऽपितु विकृतमस्ति। तद्यथा मन्त्रेऽस्ति शूद्रः मित्रदेवस्य

1. ताण्ड्य., 6/1/10.
2. मध्यतः सप्तदशं निरमिमीत तं विश्वेदेवा देवता अन्वसृज्यन्त जगती छन्दो वैरूपं साम वैश्यो मनुष्याणां गावः पशूनां तस्मात् त आद्या अन्न· धनाद्धयसृजन्त तस्माद् भूयांसोऽन्येभ्यो भूयिष्ठा हि देवता अन्वसृज्यन्त। तैत्तिरीयसंहितोक्तं ब्राह्मणम्, 7/1/1.

भागः। वरुणदेवः तस्याधिपतिः। किन्तु दुष्टैः दूषिते ब्राह्मणे मन्त्रविरुद्धपरिवर्तिते ब्राह्मणे लिखितम्— **"न काचन देवता शूद्रो मनुष्यः अयज्ञियः"**।[1] अन्याः अपि बहवः घृणितपापपूर्णाः अपशब्दाः लिखिताः सन्ति।[2] सर्वत्रान्विष्य ताण्ड्य शतपथे, तैत्तिरीयादि कृष्णयजुर्वेदोक्तब्राह्मणेष्वपि दृष्टं मया तथैव।[3] तेषां मन्त्रैः सह किञ्चिदपि सम्बन्धः नास्ति। मन्त्रानुसारी ब्राह्मणव्याख्यानमूह्यम्। तदेवं भवितुं शक्नोति—

**स पत्त एव प्रतिष्ठाया एकविंशमसृजत तमनुष्टुब्छन्दोऽन्वसृज्यत मित्रो देवता शूद्रो मनुष्य शरद् ऋतुः। तस्मात् पादावेज्यातिवर्द्धते पत्तो हि सृष्टः। तस्माच्छूद्रस्यैकविंशस्तोमानां प्रतिष्ठा प्रतिष्ठाया हि सृष्टः। तस्मादनुष्टुभं छन्दासि नानुव्यूहन्ति।**

शुद्धेन ब्राह्मणेन पुष्टिर्भवति अस्य ब्राह्मणस्य। पश्यन्तु —

**"एषु लोकेषु प्रतितिष्ठति य एवं वेद।"**[4]

एष्वेव ब्राह्मणेषु यत्र पापकर्मिणां दृष्टिर्न पतिता तत्र शुद्धेषु शतशः स्थलेषु सरसोत्कृष्टं व्याख्यानमुपलभ्यते। तत्र प्रथितायाः एकात्मसमरसतायाः किञ्चिद्दिग्दर्शनमत्र कारयामि।

यथा विमर्शितं जन्मानन्तरं जीवनस्य प्रथमावश्यकता विकासाय विविधज्ञानानां भवति। तदर्थमेव विद्वद्भिः शासकैश्च ब्राह्मणवर्णः रचितः। तद् ब्राह्मणवर्णः तत्कालीनः शिक्षाविभागः एव। यस्यान्तर्गतम् ब्रह्मकुलानि, ब्रह्मचारिणः ब्राह्मणाश्च भवन्ति स्म। तत्र ब्रह्मचर्या एव प्रचलति स्म। कालान्तरे क्रमशः एतद् ब्रह्मकुलमेव गुरुकुलनाम वर्तमाने च विद्यालयनाम विश्वविद्यालयनाम प्राप्तम्। तथैव ब्रह्मचारिणः एव विद्यार्थिनः शिष्याः

---

1. **दूषितब्राह्मणम् –**

   **स पत्त एव प्रतिष्ठाया एकविंशमसृजत तमनुष्टुब्छन्दोऽन्वसृज्यत न काचन देवता शूद्रो मनुष्यस्तस्मान्छूद्र उत बहुपशुरयज्ञियो विदेवो हि, न हितं काचन देवतान्वसृज्यत तस्मात्पादावजेज्यनातिवर्द्धते पत्तो हि सृष्टस्तस्मादेकविंशस्तोमानां प्रतिष्ठा प्रतिष्ठाया हि सृष्टस्तस्मादनुष्टुभं छन्दासि नानुव्यूहन्ति। ताण्ड्यमहाब्राह्मणम्, 6/1/11.**

2. **पापवसीयसो विधृत्यै। ताण्ड्य, 6/1/12.**

   **विभृतिः पापवसीयसो भवति य एवं वेद। ताण्ड्यं, 6/1/13**

   **एवमेव अन्यब्राह्मणेष्वपि किञ्चिद्न्यूनाधिक्येन। तत्सर्वं मन्त्रविरुद्धमस्ति।**

3. **पत्त एकविंश निरमिमीत तमनुष्टुप् छन्दोऽन्वसृज्यत वैराजं साम शूद्रो मनुष्याणामश्वः पशूनां तस्मात् तौ भूतसंक्रामिणावश्वश्च शूद्रश्च तस्माच्छूद्रो यज्ञेऽनवक्लृप्तो न हि देवता अन्वसृज्यत तस्मात् पादावुप जीवतः पत्तो ह्यसृज्येताम्। तै.संहितोक्तब्राह्मणम्, 7/1/1.**

4. **ताण्ड्य., 6/2/10.**

वा। ब्राह्मणशब्दस्य स्थाने एव गुरुः शिक्षको वा क्रमशः प्रचलितः। ब्रह्मचर्यमेव शिक्षाचरणम्, ब्रह्मचर्या एव शिक्षा। अस्मिन् ब्रह्मकुले सर्वे बालकाः बालिकाश्च शिक्षार्थिनः ब्रह्मचारिणः ज्ञानार्जनं ब्रह्मचर्यं वा कुर्वन्ति स्म। तत्र ब्रह्मचर्या शिक्षा वा नियमेन प्रचलति स्म। तत्र ब्राह्मणाः सर्वेषां कर्मणां ज्ञानं ददति स्म। अध्यापनस्य, प्रशासनस्य, रक्षणस्य, कृषेः वाणिज्यस्य च विविधानां शिल्पानां च। ब्रह्मचारिणश्च रुच्यनुकूलं स्वयं वृणीतं ज्ञानं ब्रह्मकुले अर्जयित्वा स्नातको भूत्वा ज्ञानार्जितदक्षता यस्मिन् कर्मणि प्राप्ता तस्मिन् कर्मणि प्रविशन्ति स्म।

कस्यापि वर्णावलम्बीकर्मिणां सन्तानाः ज्ञानार्जनाय यदा ब्रह्मकुले प्रविशन्ति स्म तदा तेषां संज्ञा ब्राह्मण एव भवति स्म। तेषां मातापितरौ ब्राह्मणक्षत्रियवैश्यशूद्रवर्णेषु मध्ये कस्यापि वर्णीयाः वा भवेयुः एतद्विषयं ब्राह्मणेषु स्पष्टमस्ति।

**''स ह दीक्षमाण एव ब्राह्मणतामभ्युपैति''**[1]

**''तस्मादपि दीक्षितं राजन्यं वा वैश्यं वा ब्राह्मण इत्येव ब्रूयाद् ब्रह्मणो हि जायते यो यज्ञाज्जायते।''**[2]

**''य उ वै कश्च यजते ब्रह्मणी भूयेवैव यजते''**[3]

स्पष्टमस्ति ज्ञानार्जनाय गुरुकुले ब्रह्मकुले दीक्षमाणः एव ब्राह्मणतां प्राप्नोति। यज्ञात् ज्ञानार्जनरूपसत्कर्मणः ज्ञानी एव ब्राह्मण एव जायते। एवं प्रकारेण ज्ञानार्जनस्य महत्त्वं शिक्षकस्य च महत्त्वं तत्र एवमस्ति—

**''अग्ने महाँ असि ब्राह्मण भारत''।**[4]

अत्रास्मिन् ज्ञानार्जने शिक्षकस्य ब्राह्मणस्य वा यथा निर्देशो भवति सर्वैः तदनुकूलमेवाचरणीयम्। ब्रह्मकुलस्य सर्वलोकहितकारिव्यवस्थायाः रक्षणाय। तदेव श्रुतिः वक्ति—

**''तस्माद्ब्राह्मणं प्रथमं यन्तमितरे त्रयो वर्णाः पश्चादनुयन्ति।''**[5]

इदमप्यत्र विज्ञेयम् यत् ज्ञानार्जने एव ब्राह्मणस्य प्रामुख्यम्। यथा ज्ञानार्जने ब्राह्मणस्य प्रामुख्यं तथैव प्रशासनकर्मणि क्षत्रियस्य प्रामुख्यम्। तद्यथा—

**''तस्मात्क्षत्रियं प्रथमं यन्तमितरे त्रयो वर्णाः पश्चादनुयन्ति''।**[6]

---

1. ऐतरेयब्रा., 7/23.
2. शतपथ., 3/2/1/40.
3. शतपथ., 13/4/1/3.
4. कौ.ब्रा., 3/2; शतपथ., 1/4/3/2; तैत्ति., 3/5/3/1.
5. शतपथ., 6/4/4/13.
6. शतपथ.

प्रजापालनतत्परस्य क्षत्रियस्य महत्त्वमेवं दर्शितमस्ति—

**"क्षत्रियमजनि विश्वस्य भूतस्याधिपपतिरजनि विशामत्ताजन्यमित्राणां हन्ताजनि ब्राह्मणानां गोप्ताजनीति।"**[1]

अत्रामित्राणां हन्ता इत्यनेन राष्ट्रस्य शत्रूणां हन्ता इति बोद्धव्यम्। राष्ट्रव्यवस्थासंचालने क्षत्रियस्य प्रामुख्येनैव सर्ववर्णावलम्बिनः तस्य सम्मानं कुर्वन्ति स्म। तदेवं वर्णितम् —

**"तस्मादु क्षत्रियमायान्तमिमाः प्रजाः विशः प्रत्यवरोहन्ति-तमधस्तादुपास्ते।"**[2]

पुनश्च

**"अपरिमितो वै क्षत्रियः"**[3]

अत्र कार्यस्य प्राधान्यादेव एतेषां सम्मानम्। स्वकर्मणि यत्र ते स्वयं दक्षाः तत्रान्यस्मिन् कर्मणि दक्षाणां भिन्नवर्णीयानां मुखापेक्षित्वं मास्तु तत्र ते एव मुख्याः इत्यपि सावधानेन वक्ति श्रुतिः —

**"तस्मान्न कदाचन ब्राह्मणश्च क्षत्रियश्च वैश्यश्च शूद्रश्च पश्चादन्वितः।"**[4]

तत्र ते एव मुख्याः स्वकर्मणि। तस्मिन्नेव दक्षताकारणेन तत्त्वतः सर्वेषु वर्णेषु तत्तत्कर्मविषयकस्य ज्ञानस्यैव प्रामुख्यम्। ब्रह्मकुले प्रथमे वयसि ब्रह्मचर्याश्रमे वा प्राप्तज्ञानस्यैव विकासः भवति जीवने। मूलतः ज्ञानमेव विकसति सर्वत्र। एतद्विषयं श्रुतिः एवं विस्फारयति—

**"यो वै स्तोमानामवमं परमतां गच्छन्तं वेद परमतामेव गच्छति। त्रिवृद्वै स्तोमानामवमं त्रिवृत् परमो य एवं वेद परमतामेव गच्छति।"**[5]

स्तयूते येनासौ स्तोमः तत्तु ज्ञानमेव तेषां स्तोमानामवमं विविधज्ञानानां प्रारम्भिकस्वरूपं तत्तु शिक्षाग्रहणात्मकप्रारम्भिकज्ञानमेव, निश्चयेन यः कोऽपि तमेतं प्रारम्भिकज्ञानं ज्ञानार्जनपूर्वकमेव परमतां गच्छन्तं वर्द्धन्तं वेद विजानाति सः परमतामेव गच्छति महान् ज्ञानवान् भवतीत्यर्थः। श्रुतिः स्वयमेव स्फारयति रहस्यं त्रिवृद्वै स्तोमानामवमं निश्चयेन प्रारम्भिकज्ञानार्जनं त्रिविदेव। तत्तु ज्ञानमेव यथा चान्यत्र श्रुतिः **"ब्रह्मवै त्रिवृत्"**

---

1. ऐतरेय., 8/17.
2. शतपथ., 3/9/3/7.
3. ऐतरेय., 8/1/2.
4. शतपथ., 6/4/4/13.
5. तै.सं., 7/1/2.

अर्थात् प्रारम्भिकज्ञानार्जनमपि ज्ञानमेव। एतद् तत्तद्विषयकज्ञानमेव वर्द्धतं तत्तद्विषयकमहज्ज्ञानात्मना परिणमते। सः विषयः किमपि वा भवतु। अध्यापनविषयकः; प्रशासनविषयकः, कृषिवाणिज्यविषयकः विविधशिल्पकलाविषयको वा भवतु **"तदेव श्रुतिः वक्ति त्रिवृद्वै स्तोमानामवमं त्रिवृत्परमम्" 'य एवं वेद'** — यः कोऽपि एवं ज्ञानात्मकं रहस्यं विजानाति सः **'परमतामेव गच्छति'** महान्ज्ञानवान्भवतीत्यर्थः।

## समेषां वर्णानां परमं कर्तव्यं धर्माचरणम्

ऋषिभिः ब्रह्मणा ज्ञानेन राष्ट्रोत्कर्षाय वसुविभागं कर्मव्यवस्था वर्णविभागं वा कृतम्। परन्तु कस्यापि कर्मणः साफल्याय सच्चारित्र्यस्य धर्माचरणस्य परमावश्यकता भवति। धर्मात्मकं स्वानुशासनमेवोत्कृष्टजीवनस्य मूलमस्ति। स्वानुशासनेन बिना बाह्य-शासनेन कस्यापि सामर्थ्यस्य सदुपयोगः भवितुं नार्हति। धर्मात्मकेन स्वानुशासनेन कर्मणि समुल्लासो भवति। यथा श्रुतिः—

**"स नैव व्यभवत्तच्छ्रेयोरूपमत्यसृजत धर्मं, तदेतत्क्षत्रस्य क्षत्रं यद्धर्मः। तस्माद् धर्मात्परं नास्ति। अथो अवलीयान्बलीयाँ समाशँसते धर्मेण यथा राज्ञैवम्। यो वै स धर्मः सत्यं वैतत्। तस्मात्सत्यं वदन्तमाहुर्धर्मं वदतीति धर्मं वा वदन्तं सत्यं वदतीति। एतद्ध्येवैतदुभयं भवति।"**[1]

अर्थात् ब्रह्मणा ज्ञानेन चातुर्वर्ण्यव्यवस्थया सत्कर्मसम्पादनव्यवस्थानन्तरमपि तल्लोकः तद्विज्ञानमपेक्षितं वैभवं न प्राप्तवान्। तदा तद्ब्रह्म श्रेयोरूपं सर्वेषां कल्याणप्रदं स्वरूपं अत्यसृजत अतिशयेन सृष्टवान् धर्मं कल्याणतमं स्वरूपं धर्मं सृष्टवानित्यर्थः। यद्यपि लोककल्याणाय लोके कल्याणकरं स्वरूपं क्षत्रं सृष्टवानासीत् तथापि क्षत्रः सर्वस्मिन्काले सर्वैः सह भवितुं नार्हति निरङ्कुशोऽपि भवितुं शक्नोति अतो कल्याणतमं स्वरूपं धर्मं सृष्टवान्। तदेतद्धर्मः क्षत्रस्य क्षत्रं रक्षकस्य रक्षकः पालकस्य पालकः शासकस्य शासकोऽस्ति यद्धर्मः यदेष धर्मः सर्वस्मिन् सर्वत्र सदैवास्ति स्वात्मभूतत्वात्। **"तस्माद्धर्मात्परं नास्ति"** स्पष्टम्। अथ अनेन धर्मेण अबलीयान् अशक्तोऽपि बलीयान् समाशंसते सम्यक् सशक्तोऽनुभवति धर्मबलेनात्मबलेन। राज्ञैवं यथा राज्ञा साहाय्येन अशक्तोऽपि स्वात्मानं सशक्तोऽनुभवति तथैव। वै निश्चयेन यः स धर्मः वै निश्चयेन सत्यं वैतत् सत्याचरणमेवैतत् कर्मणि सत्याचरणं, व्यवहारे सत्याचरणं, गृहे सत्याचरणं, नीतौ सत्याचरणमेतद्धर्मः। तस्मात्सत्यं वदन्तमाहुर्धर्मं वदति इति धर्मं वदन्तमाहुर्सत्यं वदति इति स्पष्टम्। एतद्धर्मः हि निश्चयेन एतदुभयं धर्मः सत्यञ्च भवति।

---

1. **शतपथब्राह्मणम्**, 14/4/2/26; **बृहदारण्यकोपनिषद्**, 1/4/14.

**"तदेतद्ब्रह्म क्षत्रं विट्शूद्रः। तदग्निनैव देवेषु ब्रह्माभवद्। ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्रस्तस्मादग्नावेव देवेषु लोकमिच्छन्ते ब्राह्मणे मनुष्येषु। एताभ्यां हि रूपाभ्यां ब्रह्माभवत्। अथ यो ह वा अस्माल्लोकात्स्वं लोकमदृष्ट्वा प्रैति स एनमविदितो न भुनक्ति। यथा वेदो वाननुक्तोऽन्यद्वा कर्माकृतं यदिह वा अप्यनेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयते एव। आत्मानमेवलोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते। अस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजते।"[1]**

तदेतदिति ते एते ब्रह्मक्षत्रविट्शूद्राः चत्वारः वर्णाः सन्ति। देवेषु द्योतमानप्राकृतिकपदार्थेषु अग्निना एव अग्निद्वारेणैव तद् ब्रह्म ज्ञानमभवत् प्रकाशते। तथैव मनुष्येषु ब्राह्मणः (ब्राह्मणाद् ब्रह्मचारिणं ब्रह्मकुले ब्रह्मचर्येण) ब्राह्मणवर्णेन ब्रह्म ज्ञानमभवत्। यथाग्निः सर्वेषु द्योतमानपदार्थेषु विद्यमानः वर्तते तथैव सर्वेषु मनुष्येषु ज्ञानमपि चिद्रूपतया विद्यते एव, यथाग्निः सर्वान् पदार्थान् अग्निमयङ्करोति तथैव ब्राह्मणोऽपि सर्वान् मनुष्यान् ब्राह्मण एव करोति ज्ञानी एव करोति। तेनैव ब्रह्मणा ज्ञानेन सर्वे मनुष्याः स्वे स्वे कर्मणि दक्षाः भवन्ति। क्षत्रियेण रक्षणकर्मज्ञानस्यजीवितेन क्षत्रियः। वैश्येन उत्पादनसंचारकर्म ज्ञानस्य जीवितेन वैश्यः। शूद्रेण श्रमशिल्पकर्मज्ञानजीवितेन शूद्रः। तस्मात् कारणात् देवेषु द्योतमानपदार्थेषु अग्नौ प्रकाशे एव लोकं दर्शनमिच्छन्ते तथैव च ब्राह्मणे एव ब्रह्म ज्ञानमिच्छन्ते। ज्ञानप्रकाशे एव सर्वाणि कर्माणि सम्भवात्। क्षत्रादिवर्णानां प्राकृतिकमुदाहरणं पूर्वमेव प्रदत्तमासीत्। शेषब्राह्मणवर्णस्य प्राकृतिकमुदाहरणमत्र प्रस्तुतम्।

अथेति वर्णकर्मज्ञानान्तरमपि अस्मात् मनुष्यलोकात् यः कोऽपि स्वं लोकं आत्मलोकमदृष्ट्वा प्रैति प्रकृष्टेन गच्छति मृत्युं प्राप्नोति स एनमात्मलोकमविदितं न भुनक्ति न पालयति। यथा अपठितः वेदः वेदपुस्तकधारणमात्रेण ज्ञानं न ददाति। अन्यद् वा कर्म अकृतं अथवा अन्यत् किमपि कर्म कृतं विना केवलज्ञानेन फलं न ददाति। एवमेव इह आत्मविज्ञानेऽपि अनेवंवित् आत्मलोकमात्मतया न जानन् यः कोऽपि महत्पुण्यं कर्म करोति तद् हा दुखेन वक्ति श्रुतिः तद् महत्कर्म अपि अस्य जनस्य क्षीयते एव आत्मज्ञानाभावात्। तद्कर्म ब्राह्मणवर्णात्मकः, क्षत्रियवर्णात्मकः, वैश्यवर्णात्मकः, शूद्रवर्णात्मको वा किमपि भवेत्, क्षीयते एव आत्मज्ञानाभावात्। अत एव आत्मानमेव लोकमुपासीत स्व स्व कर्म कुर्वन्नपि स्वात्मानमेव विजानीयात् स य आत्मानमेव लोकमुपास्ते कर्मकुर्वन्नपि स्वरूपे एव जागृतः भवति न ह आनन्देन वक्ति श्रुतिः न अस्य आत्मनि जागृतस्य कर्म क्षीयते। अस्माद् हि निश्चयेन स्वस्मादात्मनः एव स्व परमात्मस्वरूपादेव यद्यत्कामयते तत्तत्सृजते परमात्मन्येव सर्वसृजनसामर्थ्यात् परमात्मन एव सर्वसृष्टत्वात्।

1. श.ब्रा., 14/4/2/27; बृ.उ., 1/4/15.

मूलतः स्वरूपोपलब्धिरेव विप्रत्वम्। स्वरूपोपलब्धाय एव विप्र शब्दस्य प्रयोगः दृश्यते वेदेषु। तत्र स्वरूपोपलब्ध्युपायमपि दर्शितमस्ति वेदे तदेवम् —

**"उपह्वरे गिरीणां सङ्गमे च नदीनाम्। धिया विप्रोऽजायत।"**[1]

अर्थात् गिरीणां पर्वतानां उपह्वरे 'उप' उपसर्ग-पूर्वक् हवृ-कौटिल्ये धातोः करणेऽच् प्रत्यये उपह्वरः तस्मिन्। पर्वतानां समीपे स्थितकुटिलमार्गे, "सङ्गमे च नदीनां" पर्वतानां समीपस्थितकुटिलमार्गसङ्गमेन साहचर्येण प्रवहन्तीनां नदीनां समीपे स्थित्व धिया ध्यानेन प्रज्ञया विप्रः विशिष्टप्रज्ञ आत्मदर्शी अजायत अभूत। यद्यपि सर्वत्र स्व स्वरूपे जागरणेनैव स्वावबोधः भवति तथापि सौकर्याय वेदेन प्राकृतिकं सहयोगप्रदमुपायमत्र दर्शितम्।

## वेदेष्वधिकारविमर्शः

ननु ज्ञानात्मकवेदानां श्रवणे पठनेऽर्थज्ञाने च शूद्रवर्णस्याधिकार एव नास्ति। यथा वादरायणमुनिविरचितब्रह्मसूत्रेषु सर्वैः सम्प्रदायप्रवर्तकैराचार्यैः अपशूद्राधिकरणे स्मृतीनामुदाहरणेन विमर्शितम्। तेषां सर्वेषां न्यूनाधिक्येन एवं प्रकारकः विचारः दृश्यते। **"न शूद्राय मतिं दद्यात्।"**[2] शूद्राय मतिं बुद्धिं ज्ञानं वा न दद्यात्। एवं प्रश्ने जाते सति यत् ज्ञानात्मकाः सन्ति वेदाः अतो वेदानां श्रवणेनैव ज्ञानं भविष्यति। प्रस्तुतं स्मृत्युदाहरणम् तैः आचार्यैः—

**"पद्यु ह व एतच्छ्मशानं यच्छूद्रः। तस्माच्छूद्रसमीपे नाध्येतव्यमिति। यस्य हि समीपेऽपि नाध्येतव्यं भवति स कथमश्रुतमधीयीत?"**[3] तथापि केन प्रकारेण कोऽपि शूद्रः वेदं शृणोति चेत् ? स्मृत्यनुसारं दण्डयेत्। तद्विषये स्मृतिनिदेर्शः—

**"अथास्य वेदमुपशृण्वतस्त्रपुजतुम्यां श्रोत्रप्रतिपूरणम्।"**[4]

वेदमुपशृण्वतस्य शूद्रस्य श्रोत्रं त्रपुजतुभ्यां प्रतिपूरितम् किन्तु श्रोत्रेन्द्रियनष्टात् पूर्वमेव सः श्रुत्वा वेदमधीतवानासीत् अतः सः वेदमुच्चरति चेत् ? **"उच्चारणे जिह्वा छेदः"**[5] अस्तु जिह्वाछेदं कृतं किन्तु तावद् सः वेदार्थं ज्ञातवान् आसीत् इति चेत्? **"धारणे शरीरभेद इति।"**[6] अर्थात् शूद्रः यदि वेदार्थं ज्ञातवान् तस्य हननमेव कुर्यात्। अतो

---

1. यर्जु.मा.सं. 26/15.
2. ब्रह्मसूत्रम्, 1/3/38, सूत्रोपरि शाङ्करभाष्ये, रामानुजभाष्ये, निम्बार्क भाष्ये, माध्वभाष्ये, आनन्दभाष्ये, वल्लभभाष्ये उल्लिखितं प्राप्यते।
3. ब्रह्मसूत्रम्, 1/3/38, सूत्रोपरि शाङ्करभाष्ये, रामानुजभाष्ये, निम्बार्क भाष्ये, माध्वभाष्ये, आनन्दभाष्ये, वल्लभभाष्ये उल्लिखितं प्राप्यते।
4. तत्रैव।
5. ''
6. ''

शूद्रवर्णस्य वेदेऽधिकार एव नास्ति। एवं सम्प्रदायप्रवर्त्तकैः शङ्कररामानुजनिम्बार्कमध्व-रामानन्दवल्लभप्रभृतिभिः आचार्यैरुपदिष्टत्वात्।

असंभवमस्त्यैतद् पापपूर्णकथनमाचार्यैः। निर्दयतायाः क्रूरतायाश्च पराकाष्ठास्ति अत्र एषु वाक्येषु। नास्त्यत्र औपनिषद् परमात्मदृष्टिः सर्वभूतहितेरतत्वम्। यथा भगवान् वेदः वक्ति —

"यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति।
सर्वभूतेषु चात्मानं ततो न विजुगुप्सते॥
यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः॥"[1]

आचार्यैः न लिखितं चेत् केन लिखितम् ? वच्मि शरीराहंवादिभिः राक्षसमानसैः वैदिकसंस्कृतेः शत्रुभिः दुष्टैः आचार्याणां भाष्ये योजितं छलेन। किमर्थम् ? महापुरुषान् प्रति घृणोत्पादनाय। तैरेव लिखितं चेत् । तदते वेदविरोधिनः शरीराहंवादिनः अधार्मिका अतत्त्वद्रष्टारः भविष्यन्ति। भवतु नाम ते तथैवासन्निति चेन्न। पश्यतु शरीरात्मदृष्टित्यागाय उपदिशन् शङ्कराचार्यम् —

"वेदान्तवाक्यैः सद्गुरुपदेशेन च सर्वेष्वपि भूतेषु येषां ब्रह्मबुद्धिरुत्पन्ना ते जीवन्मुक्ताः इत्यर्थः। ननु जीवन्मुक्तः कः? यथा देहोऽहं पुरुषोऽहं ब्राह्मणोऽहं शूद्रोऽहमस्मीति दृढनिश्चयस्तथा नाहं ब्राह्मणः, न शूद्रः, न पुरुषः किन्तु असङ्गः सच्चिदानन्दस्वरूपः प्रकाशरूपः सर्वान्तर्यामी चिदाकाशरूपोऽस्मीति दृढनिश्चयरूपोऽपरोक्षज्ञानवान् जीवन्मुक्तः।"[2]

इत्यत्र स्पष्टोपदेशः यथा ब्राह्मणः स्वात्मनि नाऽहं ब्राह्मणोऽपितु शुद्धः सच्चिदानन्दस्वरूपः आत्मास्मि इति निश्चयः कुर्यात् तथैव शूद्रोऽपि स्वात्मनि नाऽहं शूद्रोऽपितु सच्चिदानन्दस्वरूपः आत्मैवास्मि इति दृढनिश्चयः कुर्यात्। अपितु ततोऽत्यधिकं पश्यन्तु—

"भाति यस्य जगद्दृढबुद्धेः, सर्वमप्यनिशमात्मतयैव।
स द्विजोऽस्तु श्वपचो वा, वन्दनीय इति मे दृढनिष्ठा॥
या चितिः स्फुरति विष्णुमुखे, सा पुत्तिकावधिषु सैव सदाहम्।
नैवदृश्यमिति यस्य मनीषा, पुल्कसो भवतु वा स गुरुर्मे॥"[3]

---

1. यजुर्वेदः काण्वसंहिता, 40/6-7; ईशावास्योपनिषद्, 6/7; यजुर्वेदः माध्यन्दिनसंहिता, 6/7.
2. श्रीमदाद्यशङ्कराचार्यविरचिते तत्त्वबोधे जीवन्मुक्तलक्षणे आचार्येणोक्तम्,
3. काशीहिन्दूविश्वविद्यालयस्थितविश्वनाथमन्दिरे उपरि प्रथमतले सङ्गमरमरपाषाणपीठे श्रीमदाद्यशङ्कराचार्यस्य महामनसा उत्कीर्णङ्कारितः श्लोकोऽयम्। मनीषा पञ्चकादुद्धृतम्।

अनेन स्पष्टं यत् क्रूरतायाः पराकाष्ठापर्यन्तमपशूद्राधिकरणनामकं शूद्रस्यहृदयविदारात्मकं भाष्यम् आचार्यस्य नास्ति। अपितु दुष्टैः छलेन योजितमस्ति।

जगद्गुरुरामानुजाचार्यस्तु पटलप्रान्ते स्थित्वा सर्वजनहिताय सर्वजनसुखाय महामन्त्रोपदेशः कृतवान्। जगद्गुरवः निम्बार्काचार्याः, मध्वाचार्याः, वल्लभाचार्यास्तु आत्मानम् भगवद्भक्तानां दासानुदासः कथयन्ति।

जगद्गुरुरामानन्दाचार्याणां शिष्याः कवीरदासः, रैदासः, पीपादासः, सेनदासः, स्वयमेव तेषां महनीयतायाः परिचायकाः। अनेनैव स्पष्टं यदपशूद्राधिकरणनाम्ना प्रचालितः भाष्यः नास्ति महापुरुषाणामेतेषां रचना। अपितु दुर्जनैः वैदिकसंस्कृतेः शत्रुभिः वैदिकवर्णेषु पारस्परिकसामरस्यभञ्जनाय जगद्गुरून् प्रति घृणोत्पादनाय च कूटरचितमेतद् भाष्यम्। कूटयोजनया एव शास्त्रेषु तत्र तत्र प्रक्षिप्तमेतद् भाष्यम्।

एतदेवाश्चर्यमस्त्यत्र यत् यद्दर्शनं सर्वत्र सर्वेषां हृदि परमात्मन उपस्थिांत दर्शयति तस्मिन्नेव दर्शने एतादृशी कूट रचना विद्यते। जन्मना श्रेष्ठशरीराहंकारेण मदान्धा वयमेतादृशीं कूटरचनां न पश्यामः। अपितु तां कूटरचनामेवाद्यापि महापुरुषैः नाम्ना पाठयामः।

ननु "**श्रावयेच्चतुरो वर्णान्**"[1] इत्यादिप्रमाणैः इतिहास-पुराणाधिगमे चातुर्वर्ण्यस्याधिकारस्मरणात्। वेदपूर्वकस्तु नास्यत्यधिकारः शूद्राणामिति चेन्न। वेदवाण्येव ऋषिभ्यः मुखात् प्राप्ता सकलजनकल्याणकारिणी परम्परया कण्ठस्थीकृता आम्नायपरम्परयागता स्वतः प्रामाण्या अपौरुषेया ज्ञानमयीवाणी अस्ति। सैव समर्था अत्र कूटरचनायाः ध्वंसाय। पश्यन्तु तद्वेदवाण्याः प्रामाण्यम् —

**"यथेमां वाचं कल्याणीमावदानि जनेभ्यः**
**ब्रह्मराजन्याभ्यां शूद्राय चार्याय च स्वाय चारणाय च।**
**प्रियो देवानां दक्षिणायै दातुरिह भूयासम्,**
**अयं मे कामः समृद्धतामुप मादो नमतु।"**[2]

वेदात्मा पुरुषः सर्वैमनुष्यैर्वेदाः पठनीयाः पाठ्याश्च इत्याज्ञापयति स्वयं — यथा इमां ऋगादिलक्षणां वेदचतुष्टयीं प्रत्यक्षभूतां कल्याणीं सर्वजनकल्याणकारिणीं वाचं वाणीं जनेभ्यः सकलमनुष्येभ्यः सर्वप्राणिनामुपकाराय आवदानि आ समन्तादुपदिशानि तथैव भवद्भिर्सर्वैर्वेदविद्वद्भिः सर्वमनुष्येभ्यो वेदचतुष्टयी वागुपदेष्टव्या।

ननु जनेभ्यः द्विजेभ्यः इत्यध्याहार्य, वेदाध्ययनाध्यापने तेषामेवाधिकार इति चेन्न। उत्तरमन्त्रभागार्थविरोधात्। केभ्यः जनेभ्यः इत्याकाङ्क्षायाम् — ब्रह्मराजन्यभ्यां ब्राह्मणक्षत्रियाभ्यां च अर्याय वैश्याय कृषकाय, शूद्रायतपसे श्रमिकाय, स्वाय-स्वान्तः

1. ब्रह्मसूत्रशाङ्करभाष्ये उद्धृतम्, 1/3/38 सूत्रोपरि.

2. यजुर्वेदः माध्यन्दिनसंहिता, 26/2.

सुखाय स्वात्मीयाय पुत्रभृत्याय च अरणाय अन्ये जनाः ये वर्णव्यवस्थात्मना व्यवस्थितकर्मणि असंलग्नाः वेदज्ञानरहितोऽपि वेदज्ञानेच्छुकाः शत्रुभावरहिताः तस्मै अरणाय च एषा वेदचतुष्टयी श्राव्या। इह अत्रास्मिन् विद्यादानप्रसङ्गे दातुः वेदज्ञानदातुः देवानां ये वेदज्ञानेन द्योतितुमिच्छन्ति ते ब्रह्मचारिणः शिष्या एवात्र देवाः तेषां दक्षिणायै वेदज्ञानेन स्व स्व कर्मणि दातुः देवानाञ्च दक्षतायै अहं वेदः प्रियः भूयासम् मम ज्ञानेनैव दक्षताप्राप्ति कारणात्। अयं वेदज्ञानप्रसारात्मकः ये मम वेदात्मा पुरुषस्य कामः सर्वप्रियभवनात्मकः जनानां इष्टपूर्त्यात्मकः, कामः समृध्यताम् समृद्धिं प्राप्नोतु। सफलो भवतु।

अदः वेदज्ञानेन स्वे स्वे कर्मणि दक्षः जनसमुदायः मा माम् प्रति उप नमतु वेदज्ञानात्मना वेदात्मापुरुषस्य प्राप्तसामीप्यात् जीवनसाफल्यादागतश्रद्धया प्रह्वतात्मना नमतु।

ननु श्रुतिषु परस्परविरोधः दृश्यते तद्यथाऽन्या श्रुतिः **"न स्त्रीशूद्रौ वेदमधीयताम्"** इति चेन्न। नास्त्येषा श्रुतिः कुत्रापि अपितु दुर्जनैः छलेन प्रचारिता तस्यैव कपोलकल्पनामात्रम्।

ननु स्त्रीणां वेदाध्ययने किं प्रमाणम् ? वेदमन्त्राणां द्रष्ट्री वह्वीः ऋषिका एव प्रमाणम्। तास्तु बालब्रह्मचारिण्यः विवाहं न कृतवत्यः वागाम्भृणी प्रभृतयः न तु सामान्यः स्त्रियः इति चेन्न, विवाहमन्त्राणां द्रष्ट्री ऋषिका सूर्या सावित्री स्वविवाहस्यैव वर्णनं कृतवती पश्यतु पतिगृहगमनसमयस्य तस्या एव वर्णनम् —

**रैभ्यासीदनुदेयी नाराशंसी न्योचनी।**
**सूर्याया भद्रमिद्वासो गाथयैति परिष्कृतम्॥**
**चित्तिरा उपवर्हणं चक्षुरा अभ्यञ्जनम्।**
**द्यौ भूमिः कोश आसीद् यदयात् सूर्या पतिम्॥**[1]

सूर्या स्वविवाहमेव वर्णयति यत् यस्मिन् समये सूर्या पतिं पतिगृहं अयात् गतवती तस्मिन् समये रैभी काञ्चन ऋचाः अनुदेयी दीयमानवधूविनोदनाय लघुवयस्का सखी आसीत्। नाराशंसी प्रातारत्नमित्यादिका ऋचाः मनुष्याणां स्तुतयः न्योचनी वधूसुश्रूषार्थं दीयमाना दासी आसीत् सूर्यायाः वासः दुकूलादिकमाच्छादनयोग्यवस्त्रं भद्रं गाथया कल्याणकारिणी ऋचाभिः परिष्कृतं एति अलङ्कृतमासीत् चित्तिः उपवर्हणं आ चेतसि उदीयमाणः उल्लासात्मका विचाराः एव शिरोपधानमासन् चक्षुः अभ्यञ्जनम् अञ्जनयुतं चक्षुः आसीत्। द्यौः आकाशः भूमिश्च कोशः आसीत् यदा सूर्या पतिगृहं गतवती। अर्थात् विवाहे सूर्या पूर्णवेदज्ञानवती विदुषी आसीत् । विवाहानन्तरमेव सम्यक् मातृगौरवं प्राप्य सा गृहस्थजीवनस्यानुभूतिपरकमन्त्राणां द्रष्ट्री ऋषिका जाता।

---

1. ऋग्वेद.,10/90/6,7.

## वेदज्ञानाय विद्यार्जनाय बालकबालिकानां ब्रह्मकुले प्रवेशाधिकारः

तर्हि किं बालिकाः अपि पठन्ती आसन् ब्रह्मकुले ब्रह्मचारिणीरूपेण। आम्, बालिकाः अपि पठन्ति स्म वैदिककाले। विद्यां यौवनं च प्राप्य स्वानुरूपेण योग्येन स्नातकेन युवकेन सह विवाहं कुर्वन्ति स्म, यथा सूर्या स्वविवाहविषये उक्तवती। सर्वमेव कार्यं ज्ञानेनैव सम्यक् भवति। अध्यापनं प्रशासनं कृषिः वाणिज्यं श्रमशिल्पात्मकं कर्म च। जीवने उत्कर्षाय सर्वेषां मूलावश्यकता ज्ञानस्यैव। यथा आथर्वणे[1]। ततः एव काञ्चन ऋचः प्रस्तौमि —

**आचार्य उपनयमानो ब्रह्मचारिणं कृणुते गर्भमन्तः।**
**तं रात्रीस्तिस्त्र उदरे विभर्ति तं जाते द्रष्टुमभिसंयन्ति देवाः॥**[2]

आचार्यः विद्याध्यापकः ब्रह्मचारिणमुपनयमानः विद्यापठनार्थं दृढव्रतमुपदिशन्नन्तर्गर्भमिव कृणुते। तं तिस्रो रात्रीस्त्रिदिनपर्यन्तमुदरे विभर्ति अर्थात् बालस्य गृहप्राप्तसंस्कारस्य परीक्षणं करोति पठनस्य च रीतिमुपदिशति। यदा विद्याग्रहण-समर्थः विद्वाञ्जायते तदा तं विद्यासु जातं प्रादुर्भूतं देवाः विद्वांसः द्रष्टुम् विद्यादानाय अभिसंयन्ति सर्वतः प्राप्नुवन्ति।

**पूर्वो जातो ब्रह्मणो ब्रह्मचारी धर्मं वसानस्तपसोदतिष्ठत्।**
**तस्माज्जातं ब्राह्मणं ब्रह्म ज्येष्ठम् देवाश्च सर्वे अमृतेन साकम्॥**[3]

पूर्वः ब्रह्मणः ब्रह्मकुले प्रवेशार्हः बालः त्रिदिवसीयदीक्षाकालीनज्ञानात् ब्रह्मचारी ब्रह्मणि ज्ञाने चरितुं शीलं यस्य स ब्रह्मचारी जातः समुद्भूतः, धर्मं वसानः ज्ञानग्रहणात्मकं धर्ममाचरन् तपसा ज्ञानप्राप्तये कृतपरिश्रमेण उदतिष्ठत् नैरन्तर्येण ज्ञानोत्कर्षं प्राप्नुवद्, तस्मात् ज्ञानोत्कर्षात् ब्रह्मज्येष्ठं ज्ञानोत्कृष्टं ब्राह्मणं जातम् समुद्भूतमुत्कृष्टज्ञानात् ब्राह्मण नाम प्राप्तमित्यर्थः। तं च ब्राह्मणं प्रति सर्वे देवाः इन्द्रियात्मकाः देवाः अमृतेन ज्ञानामृतेन साकं सहितं भवन्ति। सर्वाणीन्द्रियाणि तं ज्ञानिनं ज्ञानामृतं ददती भवन्ति इत्यर्थः।

**ब्रह्मचार्येति समिधा समिद्धः, कार्ष्णं वसानो दीक्षितो दीर्घश्मश्रुः।**
**स सद्य एति पूर्वस्मादुत्तरं समुद्रं लोकान्त्संगृभ्य मुहुराचरिक्रत्॥**[4]

सः ब्रह्मचारी समिधा भावी जीवनोपयोगिविद्यया समिद्धः प्रकाशितः कार्ष्णं

1. अथर्ववेदः, 11/5 समग्रं सूक्तम्
2. अथर्ववेदः, 11/5/3.
3. अथर्ववेदः, 11/5/5.
4. अथर्ववेदः, 11/5/6.

कृषविलखने धातोः "कृषेर्वर्णः"[1] सूत्रेण नक् प्रत्यये कृषति विलेखतीतिकृष्णः, कृष्ण-प्रातिपदिकात् अवयवे विकारे चार्थेऽण् प्रत्ययः आदिवृद्धिः कार्ष्णं लेखनस्य च विकारमध्ययनम् वसानः निवसन् लेखनमध्ययनमाचरन् दीर्घश्मश्रुः दीर्घकालपर्यन्तं केशश्मश्रूणि धारितानि येन सः दीक्षितः स्नातकः भूत्वा एति ब्रह्मकुलाद् गच्छति। कुत्र गच्छतीत्यभीप्सायां सः स्नातकः ब्रह्मचारी सद्यः विद्यापूर्त्यनन्तरं शीघ्रतयैव पूर्वस्मात् ब्रह्मचर्यानुष्ठानभूतात् समुद्रात् उत्तरं समुद्रं समस्तकर्मजीवनात्मकं गृहाश्रमं समुद्रम् एति प्राप्नोति। सः लोकान्संगृभ्य लोकसंग्रहं कुर्वन् मुहुः बारम्बारं आ चरिक्रत् आ समन्तात् समग्रे जीवने ब्रह्मचर्यमेव चरति ज्ञानाचरणमेव करोति। ज्ञानाचरणमेव ब्रह्मचर्यम्।

ज्ञानाचरणेन ब्रह्मचर्येण किं किं करोति इत्यभीप्सायां वदति श्रुतिः—

**ब्रह्मचर्येण तपसा राजा राष्ट्रं विरक्षति।**
**आचार्यो ब्रह्मचर्येण ब्रह्मचारिणमिच्छते।।**
**ब्रह्मचर्येण कन्या युवानं विन्दते पतिम्।**
**अनड्वान् ब्रह्मचर्येणाश्वो घासं जिगीषति।।**[2]

ब्रह्मचर्येण ज्ञानाचरणेन तपसा श्रमेण राजा राष्ट्राध्यक्षः राष्ट्रं स्वराष्ट्रं विशिष्टेन रक्षति। आचार्यः आचारं ग्राहयति आचिनोत्यर्थान् आचिनोति बुद्धिं वा ततो आचार्यः।[3] ब्रह्मचर्येण ज्ञानाचरणेनैव आचारं ग्राहयत् ज्ञानं ददत् आचार्यः ब्रह्मचारिणं ज्ञानग्रहणेच्छुकं बालमिच्छते। तथैव ब्रह्मचर्येण ज्ञानाचरणेन ज्ञानसम्पन्ना स्नातका कन्या युवतिः सती स्वानुरूपं ज्ञानसम्पन्नं स्नातकं युवानं पतिं विन्दते लभते। एवमेव ब्रह्मचर्येण ज्ञानाचरणेन अनड्वान वृषभः अश्वश्च घासं जिगीषति। भूमौ प्रस्फुटितं घासं वृषभः अश्वश्च ज्ञानाचरणे जेतुमिच्छति, अर्थात् सरीसृपैः विषधरैः वृश्चिकादिभिः ज्ञानपूर्वकसावधानेनात्मरक्षापूर्वकं खादन्तीत्यर्थः। सर्वं कार्यं सुष्ठुतया ज्ञानाचरणेन ब्रह्मचर्येणैव भवितुर्महति नान्यथा। तत्कार्यं शिक्षणात्मकं रक्षणात्मकं कृषिवाणिज्यात्मकं श्रमशिल्पात्मकं वा भवेत्।

एवं वेदप्रामाण्यात् स्पष्टं यत् वेदाध्ययने ज्ञानग्रहणे सदाचरणे सर्वेषां मानवानामधिकारोऽस्ति। न तु अधिकार एव अपितु सर्वेषां वर्णाश्रमिणां जीवनोत्कर्षाय वेदाध्यनस्य ज्ञानाचरणस्य सदाचरणस्य परमावश्यकतास्ति। ज्ञानोत्कर्षेणैव राष्ट्रोत्कर्षः लोकोत्कर्षः भवितुमार्हति।

---

1. उणादिः, 3/4.
2. अथर्ववेदः, 11/5/17,18.
3. आचार्य कस्मादाचारं ग्राह्यत्याचिनोत्यर्थानाचिनोति बुद्धिमिति वा। निरुक्तम् 1/4.

## वेदान्तसूत्रेषु मनुष्याधिकारप्रकरणं न त्वपशूद्राधिकरणम्

ननु वेदप्रामाण्येन प्रदर्शितं यत् वेदाध्ययने वेदज्ञाने सर्वेषां मनुष्याणामधिकारः वर्तते।सहैव एतदप्युक्तं यत् वेदान्तसूत्राणामपशूद्राधिकरणस्य भाष्यं सम्प्रदायप्रवर्तकाचार्याणां नास्ति। तर्हि महानुनिना बादरायणेनैव वेदेषु शूद्राणामधिकारं निरस्तमथवा वेदविरुद्धसूत्राणां रचना कृता इति चेन्न, महात्मनां बादरायणेन तैः सूत्रैः मनुष्याधिकारमेव विमर्शितम्। तत्रागत केषाञ्चन सूत्राणां विपरीतव्याख्यया तेषां सूत्राणामपशूद्राधिकारणनामप्रचारितं छद्मैः क्षेपककारैः। मूलतः मनुष्याधिकारप्रकरणे पूर्वपक्षनिरसनमेवास्ति तत्र। पूर्वापरसूत्राणां विमर्शेन तेषां सूत्राणां मौलिकमर्थं प्रदर्शयामः। तदेवम् —

श्रुतिः वक्ति **"अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति"**[1] अर्थात् अङ्गुष्ठपरिमाणः पुरुषः मध्यशरीरे स्थितोऽस्ति। स एव पुरुषः **"ईशानो भूत भव्यस्य स एवाद्य स उ श्वः। एतद्वै तत्।"**[2] त्वया पृष्टं ब्रह्म। इत्यत्र पूर्वपक्षमुत्थापयन् सूत्रं कृतम् **"शब्दादेव प्रमितः"**[3] अङ्गुष्ठमात्रपरिमाणात् इत्यनेन अपरिमितं नास्ति ब्रह्म इत्याशङ्कायाः अग्रिमं सूत्रं कृतं **"हृद्यपेक्षया तु मनुष्याधिकारत्वात्"**[4] अर्थादत्र श्रुतेरुपदेशः सर्वेषां मनुष्याणां कृतेऽस्ति मनुष्याणां हृदयं मध्यशरीरेऽङ्गुष्ठमात्रं भवति। हृदयमेव चेतनायाः केन्द्रबिन्दुः यतः समष्टेः चित् परमात्मा ब्रह्म अतः तदेव लक्ष्यीकृत्य मानवहृद्यपेक्षया **"अङ्गुष्ठमात्रः पुरुषः"** इत्युक्तं न तु परिमाणमुक्तमपरिमितस्य समष्टेः चिदपरिमितः पुरुष एव अत्र **"अङ्गुष्ठमात्रः पुरुषः"** इति शब्देनोक्तः।

पुनः प्रश्नजातम् यत् किं मनुष्यमात्रस्यैवाधिकारोऽस्ति ब्रह्मज्ञाने परमात्मज्ञाने न अन्येषां प्राणिनाम् ? इमं प्रश्नमुत्तरति अग्रिमे सूत्रे — **"तदुपर्यपि वादरायणः सम्भवात्"**[5] अर्थात् मनुष्याणामधिकारस्तु अस्त्येव मनुष्येभ्यः श्रेष्ठ देवादीनाम-धिकारोऽपि सम्भवति ज्ञानग्रहणसामर्थ्यसम्भवात्। तदनन्तरमाचार्यजैमिनेः मतं पूर्वपक्षत्वेन प्रदर्श्य स्वीयं निर्णयं दत्तवान्। **"भावं तु वादरायणोऽस्ति हि।"**[6] अर्थात् मम वादरायणस्य मते मनुष्याणामिव देवादीनामपि अर्थित्वादिलक्षणं सामान्यमतो ब्रह्मविद्यायां तेषामप्यधिकारः वर्तते। अनेन विमर्शेन एतन्निगमो भवति यत् यस्मिन् कस्मिन्नपि अर्थित्वादिकं भावमस्ति, तेषां सर्वेषां ब्रह्मविद्यायामधिकारः वर्तते। मूलतः अर्थित्वादिभावमेव ब्रह्मविद्यायाः अधिकारिलक्षणम्।

एवं प्रकारेणास्मिन् प्रकरणे यस्य केन्द्रबिन्दुः मनुष्यसमुदायोऽस्ति स्पष्टं यत् सर्वेषां मानवानामर्थित्वसम्भवात् सर्वेषां मानवानां ब्रह्मविद्यायामधिकारोऽस्ति इति निगमितम्।

---

1. कठो., 2/1/12.
2. कठो., 2/1/13.
3. ब्रह्मसूत्रम्, 1/3/24.
4. ब्रह्मसूत्रम्, 1/3/25.
5. ब्रह्मसूत्रम्, 1/3/26.
6. ब्रह्मसूत्रम्, 1/3/33.

तदा पुनः पूर्वपक्षमागतं यत् श्रुतिवाक्यादेवं दृश्यते शूद्रस्य ब्रह्मविद्यायामधिकारो नास्ति तदेवमाख्यायिका अस्ति छान्दोग्ये— "जनश्रुतेः संतानपरम्परायामुत्पन्नः तस्य पुत्रस्य पौत्रः श्रद्धादेयो बहुदायी बहुपाक्यः बभूत। सः सर्वासु दिक्षु ग्रामेषु नगरेषु धर्मशालान् कारितवान्। सर्वतः एव ममान्नं तेषु धर्मशालासु वसन्तः जनाः भोक्ष्यन्ते इत्यभिप्रायः। तदनन्तरमेकस्मिन्निशायां हंसाः राज्ञो दर्शनगोचरे उड्डीयमानः बभूवुः। तस्मिन्काले तेषां पततां हंसानामेकः पृष्ठतः पतन्नग्रतः पतन्तं हंसमभ्युक्तवान् **"हो होऽयि भल्लाक्ष भल्लाक्ष जानुश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसाङ्क्षीस्तत्त्वा मा प्रधाक्षीरिति।"**[1]

व्याख्या- तमेवमुक्तवन्तमग्रगामी हंसः प्रत्युवाच — हो हो अयि भल्लाक्ष भल्लाक्ष इति आश्चर्येण सम्बोध्य वक्ति। पश्य पश्य जानुश्रुतेः पौत्रायणस्य अन्नदानदिजनितद्रभावजं रात्रौ दिवा समं व्याप्तं ज्योतिः तया ज्योतिषा त्वं सम्बन्धं मा कार्षीः सा ज्योति त्वां मा दहतु इत्यभिप्रायः

तमेतमुक्तवन्तं हंशयग्रगामी हंशः प्रत्युवाच **"कम्वर एनमेतत्सन्तं सयुग्वानमिव रैक्वमात्थ?"**

**व्याख्या-** अरे कमु केन माहात्म्येन युक्तं सन्तं एनं तुच्छं राजानं त्वं सबहुमानमेतद्वचनं सयुग्वानं युग्वना शकटेन गन्त्र्या सह वर्तते इति सयुग्वा तं रैक्वमिव महत्तेजस्वी रैक्वसमम् आत्थ वक्ति? अर्थात् महत्तेजस्विना रैक्वेन सह स्वल्पतेजस्वी तुच्छस्य राज्ञः तुलना अननुरूपा। तदा इतरः हंशः पृष्टवान्-

**"यो नु कथं सयुग्वारैक्वः"।**

इति पृच्छन्तं हंशं प्रति भल्लाक्ष आह **"यथा कृतायविजितायाधरेयाः संयत्येवमेनं सर्वं तदभिसमेति यत्किञ्च प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद स मयैतदुक्त इति"**[2]

**व्याख्या-** यथा कृताय विजिताय क्षत्राय राज्ञे अधरेयाः राजानः प्रजाश्च संयन्ति संगच्छन्ति अन्तर्भवन्ति। तथैव यत्किञ्च प्रजाः साधु शोभनं सत्कर्म धर्मजातं कुर्वन्ति एनं सर्वं तदभिसमेति रैक्वस्य धर्मेऽन्तर्भवति, तस्य च फले सर्वप्राणिधर्मफलमन्तर्भवति।

तथान्योऽपि यः कश्चिद् रैक्वस्य वेद्यं वेद तमपि सर्वप्राणिधर्मजातं तत्फलञ्च रैक्वमिव अभिसमेति।

एतद्वार्तालापः जानुश्रुतिः पौत्रायणः श्रुतवान्। रैक्वस्य तुलनायां स्वा अनादरेण दुखितः स राजा जागरन्नेव रात्रिं यापितवान्। ततः सः रात्रिगते प्रातः संजिहान एव क्षत्तारं रक्षकं स्तुतिकरं सेवकं प्रत्युवाच, **अङ्ग अरे ह सयुग्वानं रैक्वमिव माम आत्थ** नाहं रैक्वसमानतेजस्वी स्तोतव्य इत्यर्थः।

स स्तुतिकर्ता सेवकः क्षत्ता प्रत्युवाच- **यो नु कथं सयुग्वा रैक्व इति।** तदा सः जानुश्रुतिः पौत्रायणः हंसभल्लाक्ष वचनमेव अवोचत्। सः सेवकः रैक्वमविन्ष्य न प्राप्तवान्। आगत्य राजानं प्रत्युक्तवाचाहं रैक्वमविन्ष्य न प्राप्तवान्। तदा राजा सेवकं

---

1.छान्दो. 4/1। 2. छान्दो. 4/1।

**प्रत्युक्तवान्** - **"यत्रारे ब्राह्मणस्यान्वेषणा तदेनमर्च्छेति।"**

तदा ब्रह्मकुलेषु सयुग्वा जनमन्वेषयन् एकस्मिन् स्थले शकटस्य अधस्तात् शकटस्य धुरं पामानं कषमाणं जनं दृष्टवान् । तदा सः सेवकः तस्य समीपे एवोपविश्य पृष्टवान् — **"त्वं हि भगवः सयुग्वा रैक्व इति"** तदा सः जनः प्रत्युवाच — **"अहं ह्यरे ।"** तदा सः सेवकः आगत्य राजानं रैक्वनिवासस्थलं सूचितवान्।

तदा अनादरात् क्षुब्धान्तःकरणः जानुश्रुतिः पौत्रायणः षट्शतानि गाः निष्कमश्वतरीरथञ्चादाय रैक्वं प्रतिचक्रम् तं रैक्वं चाभिवाद्य उवाच—

**"रैक्वेमानि षट्शतानि गवामयं निष्कोऽयमश्वतरीरथो नु मा एता भगवो देवतां शाधि यां देवतामुपास्स इति।[1]"**

व्याख्या- रैक्व! इमानि षट्शतानि गाः अयं निष्कः अश्वतरीरथश्च तुभ्यं मया आनीतानि। भगवन्! एतद्धनं स्वीकृत्य यां देवतां त्वमुपास्से तद्देवतोपदेशेन माम् अनुशाधि तदा आत्मदर्शी पारदर्शी रैक्वः राज्ञः क्षुब्धान्तःकरणं पश्यन्नुवाच—

**"अह हा रे त्वा शूद्र तवैव सह गोभिरस्तु"[2]**

अस्यां श्रुतौ महात्मा रैक्वः अहहा इति व्यङ्याक्षरैः निन्दन् स्पष्टं वक्ति रे शूद्र! अहं त्वा स्वदेवतोपसनविद्यां न दास्यामि। गोभिः सहनिष्कमश्वतरीरथञ्च तवैवास्तु। अनया श्रुत्या दृश्यते शूद्रवर्णस्य ब्रह्मविद्यायां वेदविद्यायां वाधिकारो नास्ति। एतादृशीं पूर्वपक्षात्मिकां भ्रान्तिमपसारणाय महात्मना बादरायणेनेदं सूत्रं रचितम् —

**"शुगस्य तदनादरश्रावणात्तदाद्रवणात् सूच्यते हि।"[3]**

तदिति तस्मात् हंसवाक्यात् **"कम्बर एनमेतत्सन्तं सयुक्वानमिव रैक्वमात्थ"[4]** इत्यस्मात् हंसवाक्यात् आत्मनोऽनादरश्रुतवतः जानुश्रुतेः पौत्रायणस्य शुगुत्पेदे, तामृषी रैक्वः शूद्रशब्देनानेन सूचयाम्बभूवात्मनः परोक्षज्ञता ख्यापनायेति गम्यते। हृद्यपेक्षया सर्वेषां मनुष्याणामधिकारत्वात् नात्र वर्णव्यस्थाया शूद्रवर्णस्यानधिकारं वक्तुं शक्यः। अर्थित्वसामर्थ्ययोः संभवात्। कथं पुनः शूद्रशब्देन शुगुत्पन्ना सूच्यते? वच्मि **"तदाद्रवणात्"** शुचमभिद्रुद्राव, शुचा वाऽभिदुद्रुवे, शुचा वा रैक्वमभिदुद्रावेति शूद्रः, अवयवार्थसंभवात् शुच् शोके धातोः शोचतीति शूद्रः। दृश्यते चायमर्थोऽस्यामाख्यायिकायाम्। न तथा वर्णशूद्रशब्दस्यार्थः तत्र तु **"शोचतेर्ज्वलति कर्मणः"** इति निघण्टूक्तधातोः शूद्र शब्दस्य निष्पत्तिः तथा च श्रुतिः —

**"तपसे शूद्रम्।" "तपो वै शूद्रः। तप एव तत्तपसा समद्धर्यति।"[5]**

अतोऽत्र वर्णव्यवस्थायां व्यवस्थितशूद्रस्याधिकारो ब्रह्मविद्यायां नास्तीति न वक्तव्यमपितु शुगुत्पन्नात् क्षुब्धान्तःकरणेन ज्ञानग्रहणसामर्थ्याभावात् ज्ञानोपदेशनिषेधः।

1. व 2. छान्दोग्योपनिषद्, 4/2/3, श्रुतेः मूलपंक्तिः यस्य विषये ब्रह्मसूत्रे, 1/3/34 तमे सूत्रे विमर्शोऽस्ति।
3. ब्रह्मसूत्रम्, 1/4/34.
4. छान्दोग्य., 4/1/3.
5. यजुर्वेदः, 30/5; श.ब्रा., 3/6/2/10.

जानुश्रुतिः पौत्रायणोऽपि रैक्वस्य परोक्षज्ञतां ज्ञात्वा स्वान्तःकरणस्य स्थितिं दृष्टवान्। अनेन स्वदोषदर्शनेन अन्तःकरणे किञ्चिद् नैर्मल्यमागतं तेन सह चिन्तितवान् ज्ञानप्राप्त्यनन्तरं एषः सर्वज्ञः महात्मा अविवाहितोऽस्ति। मम पुत्री युवतिरविवाहिता चास्ति। एषः महान् ज्ञानी मम जामाता भवितुमर्हति। एवं विचिन्त्य सः प्रभूतधनसम्पत्या सह स्वपुत्र्याः विवाहं रैक्वेन सह कर्तुं निश्चित्य गृहे गतवान्।

स्वाभिप्रायं पुत्रीं प्रत्युक्त्वा तस्या आह्लादितवचनेनोल्लासमयीं स्वीकृतिं च प्राप्य तया सह प्रभूतधनसम्पत्तिं नीत्वा पुनः रैक्वं प्राप्य तं प्रति निवेदितवान् —

**"रैक्वेदं सहस्रं गवामयं निष्कोऽयमश्वतरीरथ इयं जायायं ग्रामो यस्मिन्नासेऽन्वेव मा भगवः शाधीति।"**[1]

रैक्वः एवमागतं जानुश्रुतेः पौत्रायणस्य पूर्वापेक्षया परिवर्तितं मानसं दृष्टवान्। तेन सह आगता तस्याः पुत्र्याः महाज्ञानीपतिप्राप्तिभावनया प्रफुल्लितं मानसमुल्लसितं वदनं चापि दृष्टवान्। जानुश्रुतेः पौत्रायणस्य मानसः क्षोभः पूर्वापेक्षया विगलितप्राय आसीत् तथापि पूर्णतया विगलितः नासीत् । किन्तु तस्य पुत्र्याः अन्तःकरणमतीव निर्मलं ज्ञानोत्सुकञ्चासीत्। तदेव श्रुतिशब्देषु एवमस्ति—

**"तस्या ह मुखमुपोद्गृह्णन्नुवाच। आजहारेमाः शूद्रानेनैवमुखेनालापयिष्यथा इति। ते हैते रैक्वपर्णा नाम महावृषेषु यत्रास्मा उवास। स तस्मै होवाच।"**[2]

व्याख्या- महर्षिः रैक्वः तस्याः युवतेः मुखस्योपरिविद्यमानं ज्ञानप्राप्यर्थमुत्सुकं पवित्रान्तःकरणीयं भावं स्वज्ञानेन गृह्णन्नुवाच हे शोकोद्विग्नमानसशूद्र! ज्ञानक्रयार्थं इमाः सम्पत्तयः आजहार आनीतवान् अस्ति। अनेन स्पष्टं यत् ज्ञानप्राप्त्यनुकूलपूर्णनिर्मलता त्वयि नास्ति। तथापि एषा तव पुत्री ज्ञानप्राप्तये उल्लसितमानसा निर्मलान्तःकरणा परमार्थतत्त्वज्ञानधिकारिणी अस्ति। अतः अनेनैव मुखेन अस्याः सम्मुखमेव औपनिषद् विद्यायाः प्रवचनं करिष्यामि। एवं प्रकारेण सह श्रोतारूपेण त्वमपि ज्ञानं प्राप्स्यसि। एवमुक्त्वा सः रैक्वः तस्मै विद्यां होवाच। अग्रिमे सूत्रे महर्षिः वादरायणः वक्ति —

**"क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात्।"**[3]

अर्थात् चैत्ररथेन सह जानुश्रुतेः सम्बन्धेन एतद् स्पष्टं ज्ञायते यत् जानुश्रुतिः पौत्रायणः क्षत्रियः आसीत्। अतः शूद्र इत्यनेन शब्देनात्र शुगा क्षुब्धमानसयुक्तव्यक्तिः एव ग्राह्यः, तादृशमानसेन ज्ञानग्रहणसम्भावनायाः अनवकाशात्। न तु मानवसमुदायस्य

---

1. छान्दोग्य., 4/2/4.
2. छान्दोग्य., 4/2/5.
3. ब्रह्मसूत्रम्, 1/3/35.

कोऽपि वर्गो वर्णो जातिर्वा। एवमेतद् स्पष्टं यत् वेदे ब्रह्मविद्यायां वाधिकारविषये सर्वत्र अन्तःकरणस्य संस्कार एव ग्राह्यः। तदेवोक्तमग्रिमे सूत्रे महात्मावादरायणेन व्यासेन **"संस्कारपरामर्शात्तदभावाभिलापाच्च।"**[1] कुत्रापि शास्त्रेषु शुक्रशोणितपरामर्शः न दृश्यते। तद्यथा — **"तं होपनिन्ये।"**[2] **"अधीहि भगव इति होपससाद"**[3] **"ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणा एष ह वैतत्सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः।"**[4] **"तान्हानुपनीयैव"**[5] इत्यादिभिः श्रुतिभिः संस्कारपरामर्श एव दृश्यते न तु शुक्रशोणितपरामर्शः। जानुश्रुतौ पौत्रायणे अपेक्षिताऽन्तःकरणीयसंस्काराभावः आसीत् अत एव ब्रह्मविद्यायाः निषेधः शुग्संस्काराभावे जाते ज्ञानोपदेशः कृतः रैक्वेन। अन्तःकरणीयसंस्कारस्य एष विषयः अस्मिन्नेवाध्यायेऽग्रिमाख्यायिकायां स्पष्टतरमस्ति। सा चाख्यायिका एवमस्ति —

**"सत्यकामो ह जाबालो जबालां मातरमामन्त्रयाञ्चक्रे ब्रह्मचर्यं भवति विवत्स्यामि किंगोत्रो न्वहमस्मीति।"**

**"सा हैनमुवाच नाहमेतद्वेद तात यद्गोत्रस्त्वमसि। बह्वहं चरन्ती परिचारिणी यौवने त्वामलमे। साहमेतन्न वेद यद्गोत्रस्त्वमसि। जबाला तु नामाऽहमस्मि सत्यकामो नाम त्वमसि। स सत्यकाम एव जबालो ब्रुवीथा इति।"**

**"स ह हारिद्रुमतं गौतममेत्योवाच ब्रह्मचर्यं भगवति वत्स्याम्युपेयां भगवन्तमिति।"**

**"तं होवाच किं गोत्रो नु सोम्यासीति। स होवाच नाहमेतद्वेद भो यद्गोत्रोऽहमस्मि। अपृच्छं मातरं सा मां प्रत्यब्रवीद्, बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे। साहमेतन्नवेद यद्गोत्रस्त्वमसि। जबाला तु नामाऽहमस्मि सत्यकामो नाम त्वमसीति। सोऽहं सत्यकामो जाबालोऽस्मि भो इति।"**

**तं होवाच! नैतदब्राह्मणो विवक्तुमर्हति। समिधं सोम्याहरोप, त्वा नेष्ये, न सत्यादगा[6] इति।**

ननु अत्रास्मिन्नाख्यायिकायामविज्ञातगोत्रस्य सत्यकामस्य सत्यसन्धत्वादेव गुरुणा ब्राह्मणजन्यत्वं निश्चित्य तस्मै उपनयनं विधाय ब्रह्मविद्या प्रदत्ता इति चेन्न। सत्यकामे

1. ब.शू., 1/3/36.
2. छा.उ., 7/1/1.
3. श.ब्रा. 11/5/3/13.
4. प्रश्नो., 1/1.
5. छान्दोग्य., 5/11/7.
6. छान्दोग्योपनिषद्, 4/4/1,2,3,4,5.

सत्यसन्धत्वं मातुः प्रदत्तसत्संस्कारादेवागतम्। तस्य मातुः यदि तं सत्संस्कारेण न संस्कारितवती स्याद् तदा सः गुरुकुले प्रविष्टः न भवेत्। अतो असत्संस्कारस्य अभावनिर्धारणे एव अत्र गुरोः प्रवृत्तिः तदेवसूत्रे वक्ति महर्षिः बादरायणः —

**"तदभावनिर्धारणे च प्रवृत्तेः"**[1]

तस्य माता जबाला ब्राह्मणी आसीदिति चेन्न। स्वयमेव उक्तवती सा **"बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे।"** न परिचर्यात्मकं कर्म ब्राह्मण्याः कुत्रापि शास्त्रेषूक्तमतो सा शूद्रा आसीत् **"परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम्"**[2] इति स्मरणात्। न केवलं सा ब्राह्मणगृहेष्वेव परिचारिका इति वक्तुं शक्यते, यतः सा स्वपुत्रो ब्राह्मणजन्य इत्यपि न वक्तुं समर्था। एवं रूपस्य परिचारिकापुत्रस्य अविज्ञातगोत्रस्य मातुः प्रदत्तसत्संकारादेव ब्राह्मणत्वमुक्तम्। अत्र ब्राह्मणपदेन सत्संस्कारमेवोक्तं गौतमेन। तथा च श्रुतिः —

**"तस्यै वाचः सत्यमेव ब्रह्म।"**[3]

**"ब्रह्म वा ऋतम्।"**[4]

अनेन सत्येन ब्रह्मणा युक्तः सत्यकामः अतो ब्राह्मणः। तदेव वक्ति श्रुतिः **"न सत्यादगाः"** इति। अनेन सत्येन सत्संस्कारेण ब्रह्मणा युक्तः यः कोऽपि जनः स ब्राह्मणः न तु केवलं सत्यकाम एव। यथा पूर्वाख्यायिकायां **'शूद्र'** शब्देन पौत्रायणस्य जानुश्रुतेः अन्तःकरणीयः शुग्संस्कार एव ग्राह्यः तथैवात्र ब्राह्मणशब्देनापि मातुः प्रदत्तः अन्तःकरणीयः सत्संस्कार एव ग्राह्यः। अत्रान्तःकरणे कुसंस्कारस्य अभावनिर्धारणे एव प्रवृत्तिः उभयत्र आख्यायिकायामृषीणां, तदेवोक्तं महात्माबादरायणेन **"तदभावनिर्धारणे च प्रवृत्तेः।"** इत्यस्मिन् सूत्रे। शिशोः जैन्मानन्तरं प्राथम्येन शिक्षा माता ददाति। द्वितीयः शिक्षकः पिता भवति तदनन्तरमेवाचार्येण शिक्षा भवति स्म। ब्रह्मकुले प्रवेशसमये आचार्य संस्कारात्मिका पूर्वशिक्षायाः परीक्षणं करोति स्म। यथोक्तमाथर्वणे—

**आचार्य उपनयमानो ब्रह्मचारिणं कृणुते गर्भमन्तः।**
**तं रात्रीस्तिस्र उदरे बिभर्ति तं जातं द्रष्टुमभिसंयन्ति देवाः॥**[5]

---

1. ब्रह्मसूत्रम्, 1/3/37.
2. श्रीमद्भगवद्गीता, 18/44.
3. श.ब्रा., 2/1/4/10.
4. श.ब्रा., 4/1/4/10.
5. अथर्ववेदः, 11/5/3.

तैत्तिरीये च—

**मातृदेवोभव। पितृदेवोभव। आचार्यदेव भव।**[1]

अन्तःकरणीय संस्कारस्यैव बाह्यरूपमस्ति उपनयन-संस्कारः। 'अन्तःकरणस्य संस्काराभावे बाह्यसंस्कारेण किमपि न हि सेत्स्यति। बाह्यः संस्कारः मानससंस्कारे सहयोगार्थमेव भवति।

कुसंस्कारग्रस्तेन मानसेन ज्ञानग्राह्यता न संभवति। एतद्विषयः स्पष्टङ्करोति अग्रिमे सूत्रे वादरायणः —

**"श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च"**[2]

अर्थात् कुसंस्कारग्रस्तान्तःकरणः समग्रज्ञानग्रहणप्रक्रियायाः श्रवणस्य तदनु अध्ययनस्य तदनु अर्थग्रहणस्य प्रतिषेधं करोति। प्रतिक्रियाग्रस्तः क्षुब्धः कुसंस्कारग्रस्तो वा अन्तःकरणः ज्ञानवार्ताः न हि शृणोति न च श्रोतुमिच्छति। श्रुत्वापि न मनुते न चार्थङ्गृह्णाति। तदेव सूत्रयति महर्षिः यत् अन्तःकरणेन श्रवणाध्यनार्थप्रतिषेधात्। **"स्मृतेश्च"** इति एतद्विषयः प्रसिद्धेषु स्मृतिषु रामायणमहाभारतप्रभृतिषु स्पष्टमस्ति। मन्थरया कुसंस्कृतान्तःकरणा कैकेयी पवित्रान्तःकरणस्य राज्ञः दशरथस्य ऋतम्भराः ज्ञानवार्ताः न श्रुतवती। श्रुत्वापि नाधीतवती न चिन्तितवती अतो न गृहीतवती यद्यपि परिणामं वैधव्यं जातम्। महात्मना पुत्रेण भरतेनापि धिक्कृता।

पश्यतु राज्ञः दशरथस्य कैकेयीं प्रतिबोधनम् — यथावदति वाल्मीकिः —

**ननु तु राघवस्तुल्यो भरतेन महात्मना।**
**बहुशो हि स्म बाले त्वं कथाः कथयसे मम॥**
**रोचयस्यभिरामस्य रामस्य शुभलोचने।**
**तव शुश्रूषमाणस्य किमर्थं विप्रवासनम्॥**
**रामो हि भरताद् भूयस्तव शुश्रूषते सदा।**
**विशेषं त्वयि तस्मात् तु भरतस्य न लक्ष्यसे॥**
**शुश्रूषां गौरवं चैव प्रमाणं वचनक्रियाम्।**
**कस्तु भूयस्तरं कुर्यादन्यत्र पुरुषर्षभात्॥**
**सान्त्वयन् सर्वभूतानि रामः शुद्धेन चेतसा।**
**गृह्णाति मनुजव्याघ्रः प्रियैर्विषयवासिनः॥**

---

1. शिक्षावल्ली, एकादशोऽनुवाकः
2. ब्रह्मसूत्रम्, 1/3/38.

सत्यं दानं तपस्त्यागो मित्रता शौचमार्जवम्।
विद्या च गुरुशुश्रूषा ध्रुवाण्येतानि राघवे॥
न स्मराम्यप्रियं वाक्यं लोकस्य प्रियवादिनः।
स कथं त्वत्कृते रामं वक्ष्यामि प्रियमप्रियम्॥
क्षमा यस्मिन्स्तपस्त्यागः सत्यं धर्मः कृतज्ञता।
अप्यहिंसा च भूतानां तमृते का गतिर्मम॥
मम वृद्धस्य कैकेयी गतान्तस्य तपस्विनः।
दीनं लालप्यमानस्य कारुण्यं कर्तुमर्हसि॥
पृथिव्यां सागरान्तायां यत् किञ्चिदधिगम्यते।
तत् सर्वं तव दास्यामि मां च त्वं मन्युमाविश॥
अञ्जलिं कुर्मि कैकेयी पादौ चापि स्पृशामि ते।
शरणं भव रामस्य माधर्मो मामिह स्पृशेत्॥[1]

एवं महात्मना दशरथेन सद्वाक्यैः बोधिता प्रार्थितापि च मन्थरया कुसंस्कृतान्तःकरणा कैकेयी पत्युः सद्बोधवाक्यं न धृतवती। अपितु विपरीतमेव चिन्तयन्ती वक्ति—

यदि दत्वा वरौ राजन् पुनः प्रत्यनुतप्यसे।
धार्मिकत्वं कथं वीर पृथिव्यां कथयिष्यसि॥
स त्व धर्मं परित्यज्य रामं राज्येऽभिषिच्य च।
सह कौशल्यया नित्यं रन्तुमिच्छसि दुर्मते॥
भवत्यधर्मो धर्मो वा सत्यं वा यदि बानृतम्।
यत्त्वया संश्रुतं मह्यं तस्य नास्ति व्यतिक्रमः॥
एकाहमपि पश्येयं यद्यहं राममातरम्।
अञ्जलिं प्रतिगृह्णन्ती श्रेयो ननु मृतिर्मम॥
भरतेनात्मना चाहं शपे ते मनुजाधिप।
यथा नान्येन तुष्येयमृते रामविवासनात्॥[2]

1. वाल्मीकिरामायणम्, अयो., 12/21,24,25,26,28,30,33,34,35,36.
2. वाल्मीकिरामायणम्, अयो., 12/39,45,46,48,49.

पुनः दशरथः कैकेयीं बोधितुमिच्छन् वदति —

**विना हि सूर्येण भवेत् प्रवृत्ति**
**रवर्षता वज्रधरेण वापि।**
**रामं तु गच्छन्तमितः समीक्ष्य**
**जीवेन्न कश्चिदिति चेतना मे॥**
**न किञ्चिदाहाहितमप्रियं वचो**
**न वेत्ति रामः परुषाणि भाषितुम्।**
**कथं तु रामे ह्यभिरामवादिनि**
**ब्रवीषि दोषान् गुणनित्यसम्मते॥**
**न जीवितं मेऽस्ति कुतः पुनः सुखं**
**विनात्मजेनात्मवतां कुतो रतिः।**
**ममाहितं देवि न कर्तुमर्हसि**
**स्पृशामि पादावपि ते प्रसीद मे॥**[1]

एवं प्रकारेण विविधप्रकारैः बोधिता प्राथिताऽपि कैकेयी कुसंस्कारप्रभावात् श्रुत्वापि अश्रुतवती एव आसीत्। यथा वदति महर्षिः वाल्मीकिः—

**विशुद्धभावस्य हि दुष्टभावा**
**दीनस्य ताम्राश्रुकलस्य राज्ञः।**
**श्रुत्वा विचित्रं करुणं विलापं**
**भर्तुर्नृशंसा न चकार वाक्यम्॥**[2]

परिणामन्तु सर्वविदितमेव। अलं कुसंस्कारग्रस्तान्तःकरणानामुपदेशेन। यथाऽत्र रामायणे तथैव महाभारतेऽपि राजसिंहासनाकाङ्क्षी पुत्रमोहग्रस्तान्तःकरणः धृतराष्ट्रः महात्मना भीष्मपितामहेन महात्मना विदुरेण प्रदत्तं सर्वलोककल्याणकारिज्ञानात्मकं महदुपदेशं किञ्चिदपि न धृतवान्। न तु इत्येव अपितु भगवता कृष्णेन अर्जुनाय युद्धपूर्वश्रावितः समग्रः गीतोपदेशः संजयमाध्यमेन श्रुत्वाप्यश्रुतवानेव। गीतां श्रावयित्वा संजयः धृतराष्ट्रं प्रति स्पष्टं वक्ति—

**यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः।**
**तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम॥**[3]

---

1. वाल्मीकिरामायणम्, अयो., 12/104,108,111
2. वाल्मीकिरामायणम्, अयो.,13/24.
3. श्रीमद्भगवद्गीता, 18/78 (अन्तिमः श्लोकः)

तदपि ईर्ष्यामोहलोभादिकुसंस्कारग्रस्तान्तःकरणः धृतराष्ट्रः न चेतितवान्। परिणामः सर्वेषां पुत्राणां मृत्युः महाविनाशः। तत्कुसंस्काराभावनिर्धारणे च सत्संस्कारविज्ञाने स्थापनेऽपि ऋषीणां प्रवृत्तेः। संस्कारपरामर्शात् न तु शुक्रशोणितपरामर्शात् इत्येव अलम्।

नन्वत्रादिकवेः महर्षिवाल्मीकेः ऐतिहासिकादिकाव्यरामायणतः प्रस्तुतमुदाहरणम्। तत्र रामः स्वयं तपस्तपन् निरपराधतापसशम्बूकस्य वधः कृतवानिति चेत्, न। दुष्टैः राक्षसमानसैः रामस्य चरित्रहननाय लोके रामप्रत्यनास्थोत्पादनाय शम्बूकवधप्रभृतिमिथ्या-कूटरचना रामायणे प्रक्षिप्ता। अतो प्रक्षेपविषयेऽपि किञ्चिद् विमर्शयामः।

## भगवतो रामस्य जीवनं वैदिकमूल्यानां श्रेष्ठतमं रूपम् तान्मूल्यानावरणाय दुष्टैः राक्षसमानसैः शम्बूकबधप्रभृतिमिथ्या-कूटरचना प्रक्षिप्ता रामायणे

पुरातनकालादेव दैवीसम्पदासुरीसंपच्च इति लोकेषु पश्यामो वयम्। अनुग्रहशक्त्यैव निर्मलान्तःकरणाः ऋषयः दैवीसम्पत्सम्पन्ना भवन्ति। तेषु लोकानुग्रहाय शास्त्राणामवतरणं भवति। अपौरुषेया निगमात्मिका वेदशब्दराशिरपि ऋषीणां माध्यमेनैवावतरति लोककल्याणाय। तथैव परमात्मन आवरकशक्त्यासुरीभावापन्नाः शरीराहं-वादिनोऽधार्मिकाः जनाः लोके भ्रान्त्युत्पदनाय लोकानामनुपकाराय स्वीयानधर्मकृत्यान् छद्मधर्मरूपेणावरणाय च पवित्रेषु शास्त्रेषु स्वीयान् कलुषितान् भावान् कूटबुद्ध्या प्रक्षिपन्ति। एते राक्षसमानसाः महात्मनां ऋषीणां प्रति शत्रुभावापन्ना एव भवन्ति। आसुरीभावापन्नानां दुष्टानां प्रति लोके श्रद्धा नास्तीति जानन्तः ते स्वीयाः कूटरचनाः छलेन ऋषिनाम्नैव स्थापितजीवनमूल्यानामावरणाय ऋषिभिः प्रणीतेषु तेषु तेषु शास्त्रेषु मिश्रणं कुर्वन्ति प्रक्षिपन्तीति।

वयं जानीमः रावणादिशरीराहंवादिनः राक्षसा अपि संस्कृतभाषायाः ज्ञातारः आसन्। ते वैदिकसंस्कृतेः शत्रवः वैदिकसत्कर्मविरोधिनः अध्वरे हिंसाकर्तारः, ऋषिभिः क्रियमाणे वैदिकेऽध्वरे रक्तमांसास्थिप्रभृतिप्रक्षिप्त्वा यज्ञध्वंसकर्तारः सदाचारहीनाः कदाचारलीनाः आसन्। पुनश्चास्माकं देशः तादृशैरेव राक्षसमानसैः क्रूरैः वैदेशिकैरप्याक्रान्तः आसीत्। एभिः सर्वैः राक्षसमानसैरस्माकं शास्त्राणां वैदिकजीवनमूल्यानां च विनाशाय सर्वप्रकारेण यत्नं कृतम्। तादृशे समये वेदानां रक्षणाय वैदिकशब्दानामर्थमजानन्नपि **''वेदानां सस्वरकण्ठस्थीकरणमेव महाफलदायकम्''** इत्याकारिका सामयिकी शास्त्रव्यवस्था प्रदत्ता महापुरुषैः। किन्त्वन्यत्र परम्परया न कण्ठस्थीकृतेषु शास्त्रेषु मानवतायाः शत्रुभिः मिथ्याकूटरचनाः शास्त्रेषु विविधेषु स्थलेषु मिश्रिताः प्रक्षिप्ताः। सर्वमेतदनुमन्यैव महापुरुषैः विद्वद्भिः तस्मिन् प्राचीने काले एव एषा व्यवस्था स्थापिता यत् **''स्वतः प्रामाण्यमानुपूर्वी परम्परया कण्ठस्थीकृतानां वेदानामेव, वेदपूर्वकमेव चान्येषां शास्त्राणाम्।''**

परञ्च सर्वभूतहिते रताः ऋषयः लोकोपकाराय येषां जीवनमूल्यानां स्थापना स्वीयेषु शास्त्रेषु कृतवन्तः तेषां जीवनमूल्यानामावरणाय तेषु तेषु शास्त्रेषु मानवतायाः शत्रुभिः राक्षसैः राक्षसमानसैर्वा प्रक्षिप्ता कूटरचना, तस्मिन् शास्त्रे पवित्रबुद्ध्या कृतेन तपात्मकेन श्रमेण, तच्छास्त्रं तत्र प्रक्षिप्ता कूटरचना च तथैव स्पष्टतया प्रतिभाति यथा स्वर्णं तदुपरि प्रक्षिप्ता धूलिश्च। अत एव "**धूलिप्रक्षेपन्यायः**" शास्त्रे लोके च प्रचलितोऽस्ति।

भगवतः रामस्य जीवनं वैदिकमूल्यानां श्रेष्ठतमं रूपमस्ति। तान्मूल्यानावरणाय रामायणे याः कूटरचनाः प्रक्षिप्ताः तस्याः निराकरणं परमावश्यकं तच्च महर्षेः रचनायाः दिव्यप्रकाशात् स्पष्टतया प्रतिभाति।

## रामस्य सत्यधर्मनिष्ठावरणाय चारित्र्यावरणाय च कृतप्रक्षेपविमर्शः

"**प्रजानां पार्थिवात्मजः बहिश्चर इव प्राणः**"[1] सर्वभूतहिते रतः भगवान् रामः वनवासकाले वनात् वनेषु परिभ्रमन्, आश्रमादाश्रमं परिभ्रमन् द्वादशे वर्षे महर्षेः शरभङ्गस्याश्रमे गतवान्। भगवता रामेण कृतसेवायामेव बृद्धः शरभङ्गः पाञ्चभौतिकं शरीरं व्यक्त्वा ब्रह्मलोकं प्राप्तवान्। तस्मिन्नाश्रमे एव निवसन्तं रामं प्रति मुनिसङ्घाः समागताः ते राक्षसाणां क्रूरकर्मं स्वीयं सङ्कटापन्नं जीवनञ्च निवेदितवन्तः। रामं सहैव नीत्वा राक्षसैः खादितानां मुनीनां कङ्कालाञ्च दर्शितवन्तः तद्यथा —

**एहि पश्य शरीराणि मुनीनां भावितात्मनाम्।**
**हतानां राक्षसैर्घोरैर्बहूनां बहुधावने॥**
**पम्पानदीनिवासानामनुमन्दाकिनीमपि।**
**चित्रकूटालयानाञ्च क्रियते कदनं महत्॥**[2]

ऋषिभिः दर्शितान् कङ्कालानवलोक्य राक्षसैः कृतक्रूरकर्मविषये सर्वं श्रुत्वा विचिन्त्य च कारुण्येन विगलितान्तःकरणः महात्मा रामः मुनीनां प्रत्युक्तवान्। भवतामर्थसिद्ध्यर्थमेवाहमत्रागतोऽस्मि। अयं मम वने वासः राक्षसाणां विनाशय भविष्यति। एवं प्रतिज्ञां कृत्वा वक्ति—

**तपस्विनां रणे शत्रून् हन्तुमिच्छामि राक्षसान्।**
**पश्यन्तु ऋषयः वीर्यं सभ्रातुर्मे तपोधनाः॥**[3]

---

1. वाल्मीकिरामायणम्, अयो., 1/19.
2. वाल्मीकिरामायणम्, अरण्य., 6/16/17.
3. वाल्मीकिरामायणम्, अरण्य., 6/25.

एवं राक्षसानां विनाशय कृतसंकल्पः ततः अग्रे चरन् भ्रात्रा सीतया सह महर्षेः सुतीक्ष्णस्याश्रमे तापसयोग्यमातिथ्यं स्वीकृत्य रात्रौ विश्रम्य प्रातः दण्डकारण्यवासिनां तपस्विनामाश्रमान् वनप्रकृतिञ्च दर्शनार्थं धृतचापासी सीतया सह रामलक्ष्मणौ प्रस्थितौ।

राक्षसाणां संहाराय कृतसंकल्पं मार्गेचरन् रघुनन्दनं पतिं हितमिच्छन्ती पतिव्रता सीता स्निग्धया वाचा इदमुक्तवती, यत् सूक्ष्मविधिना विचारेण भवतः कृतप्रतिज्ञायामधर्मं पश्यामि। अत्रास्मिन्लोके त्रीण्येव कामजानि व्यसनानि भवन्ति। तत्र प्रथमं मिथ्यावाक्यं द्वितीयं परदाराभिगमनं तृतीयञ्च विनावैरं रौद्रता।[1] तत्राप्युत्तरोत्तरं गुरुतरमपराधं भवति। भवति मिथ्यावाक्यं नास्ति न भूतं न च भविष्यति। परस्त्रीविषयिणी धर्मविनाशिनी अभिलाषा भवति मनस्यपि क्वचिदपि न विद्यते अतः व्यवहारे तादृशी कल्पनाप्यशक्या एव।[2] भवान् धर्मिष्ठः सत्यसंधश्चास्ति जितेन्द्रियत्वादिति सर्वमहं जानामि।[3] किन्तु मोहात् निर्वैरं परप्राणाभिहिंसात्मकं रौद्रं कर्म भवति समुपस्थितं विद्यते भवतः कृतप्रतिज्ञायाम्—

**प्रतिज्ञातस्त्वया वीर दण्डकारण्यवासिनाम्।**
**ऋषीणां रक्षणार्थाय वधः संयति रक्षसाम्।।**
**बुद्धिर्वैरं विना हन्तुं राक्षसान् दण्डकाश्रितान्।**
**अपराधं विना हन्तुं लोको वीर न मंस्यते।।**[4]

एवमत्र सीता चिन्तितवती ऋषीणां प्रति मोहवशादेव रामेण एषा प्रतिज्ञा कृता। ऋषिभिः सह राक्षसाणां शत्रुता भवितुमर्हति। किन्त्वस्माभिः राक्षसाणां शत्रुता नास्ति मित्रतापि भवितुं शक्नोति। अविचारपूर्विकैवैषा प्रतिज्ञाऽसमीचीना लोकेऽपि नास्ति सम्मानवर्द्धिनी कीर्तिदायिका वा। यद्यपि क्षत्रियवीराणामार्तानामभिरक्षणं कार्यमस्ति।[4] तथापि तत्सर्वं देशनीति-लोकनीति-राजनीतिपूर्वकमेव कीर्तिदायकं साफल्याय च भवति।

**क्व च शस्त्रं क्व च वनं क्व च क्षात्रं तपः क्व च।**
**व्याविद्धमिदमस्माभिर्देशधर्मस्तु पूज्यताम् ।।**[5]

एव पत्युः हिताकाङ्क्षया विविधनीतिद्वारेण संकल्पात् निवारयन्तीं पतिव्रतां सीतां प्रति रामः प्रत्युवाच, भवत्या यदुक्तं "**क्षत्रियैर्धार्यते चापो नार्तशब्दं भवेद्**" इत्येव

1. वाल्मीकिरामायणम्, अरण्य.,9/3,4.
2. वाल्मीकिरामायणम्, अरण्य.,9/3,6
3. वाल्मीकिरामायणम्, अरण्य.,9/7.
4. वाल्मीकिरामायणम्, अरण्य.,9/10,25.
5. वाल्मीकिरामायणम्, अरण्य.,9/26.

धर्मात्मकम्।[1] द्वादशवर्षात् वनात् वनेषु, आश्रमादाश्रमं परिभ्रमन् वयमनुभवामः यदेते ऋषयः "**सर्वभूतहितेरताः सन्ति।**"[2] ये राक्षसा एतेषामृषीणां शत्रवः ते कस्यापि रामस्य वा मित्राण्यपि भवितुं शक्नुवन्तीति भ्रमः नास्ति रामे। राक्षसाः स्वशत्रून् ऋषीनेव खादितवन्तः इत्यपि नास्ति। अपिंतु राक्षसैः मानवताया एव भक्षणं कृतमस्ति। धर्मः सत्यञ्च त्यक्त्वा रामः कापि लोकनीतिं राजनीतिं कीर्तिं वा नेच्छति। अन्येषां कृते एते राक्षसैः खादिताः मुनीनामस्थिकङ्कालाः सन्ति। किन्तु रामः खादितेषु मुनिकङ्कालेषु मुनिषु चात्मानमेव पश्यति। नास्ति रामः शरीरात्मा, अपितु सर्वात्मा एव रामः।[3] आर्ताः मुनयः स्वयमागत्य माम् प्रति प्रार्थितवन्तः। ऋषिभिरनुक्तेनापि मया तदेव करणीयमासीत्। सम्यक् विमृश्यैव रामः निर्णयं करोति। तन्निर्णयं चात्मसात्करोति। आत्मभूते निर्णयेऽसम्भाव्यमेव परिवर्तनम्। रामाय सदा सत्यमेवेष्टं नान्यत्किञ्चनमिषत्। महर्षिवाल्मीकिमुखात् प्रस्फुटितेषु शब्देषु रामः वक्ति—

**संश्रुत्य च न शक्ष्यामि जीवमानः प्रतिश्रवम्।**
**मुनीनामन्यथा कर्तुं सत्यमिष्टं हि मे सदा॥**
**अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम्।**
**न तु प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः॥**
**तदवश्यं मया कार्यमृषीणां परिपालनम्।**
**अनुक्तेनापि वैदेही प्रतिज्ञाय कथं पुनः॥**[4]

भगवता रामेण कृता एषा प्रतिज्ञा सत्यधर्मनिष्ठायाः श्रेष्ठतमं स्वरूपमस्ति। रामः स्वयं वक्ति शत्रुभिः सह युद्धे प्राप्ते ममापि शरीरस्य त्यागः भवितुं शक्नोति। लक्ष्मणेन सह भवत्या शरीरोऽपि युद्धे नष्टः भवितुं शक्यते। किन्तु राक्षसाणां विनाशाय प्रस्तुतप्रतिज्ञायाः त्यागः न हि भविष्यति तस्याः आत्मभूतत्वात्, अमृतत्वाच्चात्मनः। एवंप्रकारकः करुणामयः सत्यनिष्ठः धर्मनिष्ठः आत्मदर्शी प्रजानां पर्थिवात्मजः रामः राक्षसान् समाप्य भ्रातृभिः सीतया सह अयोध्यायां यदा सिंहानासीनः तदा रामराज्ये कुत्रापि नारीणां रोदनं न श्रूयते स्म। राममेवानुपश्यन्तः ते परस्परं सन्देहं न कुर्वन्ति स्म। सर्वं मुदितमेव जातं यथा वदति वाल्मीकिः—

**सर्वं मुदितमेवासीत् सर्वो धर्मपरोऽभवत्।**
**राममेवानुपश्यन्तो नाभ्यहिंसन् परस्परम्॥**

---

1. वाल्मीकिरामायणम्, अरण्य.,9/27.
2. वाल्मीकिरामायणम्, अरण्य.,10/3.
3. वाल्मीकिरामायणम्, अरण्य.,1/15.
4. वाल्मीकिरामायणम्, अरण्य.,10/17,18,19.

**रामो रामो राम इति प्रजानामभवन्कथाः।**

**राम भूतं जगद्भूत रामे राज्यं प्रशासति।।**[1]

एवं भगवता रामेण जीवितं महर्षिणा वाल्मीकिना गीतञ्च श्रेष्ठतम-जीवनमूल्यानामावरणाय राक्षसानां महिमवर्णयन् रामराज्ये सन्देहप्राबल्यं प्रदर्शयन् भगवन्तं रामं प्रति महर्षिवाल्मीकिं प्रति च शत्रुभावापन्नः राक्षसमानसः क्षेपककारः उत्तरकाण्डनाम्ना स्वरचित मिथ्याकथां प्रक्षिपति रामायणे। महर्षिः उक्तवान् यत् सर्वे जनाः रामं विलोकयन्तः परस्परं सन्देहं न कुर्वन्ति। किन्त्वत्र प्रक्षिप्तरचनायां सर्वे अयोध्यावासिनः सीतायाः चरित्रमेव सन्दिह्यन्ति। न तु सीतायाः चरित्रस्योपर्येव सन्देहोऽपितु रामोऽपि सत्यधर्मनिष्ठः न तद्विपरीतं रामोऽतीव कीर्तिलोलुपः, सः कीर्तिप्राप्त्यर्थं किमप्यसत्यनिष्ठमधार्मिकञ्च कर्म कर्तुं शक्नोति। तद्यथोत्तरकाण्डे सर्वं सत्यं विजानन्नपि सीतात्यागनिर्णयप्रकरणे दुष्टेन क्षेपककारेण कल्पितः रामः वक्ति—

**अन्तरात्मा च मे वेत्ति सीतां शुद्धां यशस्विनीम् ।**

**ततो गृहीत्वा वैदेहीमयोध्यायामहमागतः।।**

**अयं तु मे महान् वादः शोकश्च हृदि वर्तते ।**

**पौरापवादः सुमहान्स्तथा जनपदस्य च ।।**

**अकीर्तियस्य गीयेत लोके भूतस्य कस्यचित्।**

**पतत्येवाधमाँल्लोकान् यावच्छब्दः प्रकीर्त्यते।।**

**अकीर्तिर्निन्द्यते देवैः कीर्तिर्लोकेषु पूज्यते।**

**कीर्त्यर्थं तु समारम्भः सर्वेषां सुमहात्मनाम् ।।**[2]

अनया दुष्टरचनाद्वारेण रामः कीर्तिलोलुपः, न तु सत्यधर्मनिष्ठ इत्युक्त्वा रामः कीर्त्यर्थं किमपि कर्तुं शक्नोति, इति प्रक्षिपन् मुनीनां रक्षणस्य राक्षसानां विनासाय च सत्यधर्मनिष्ठप्रतिज्ञाप्रसङ्गे रामोक्तश्लोक एव परिवर्त्य स्वकल्पितेन रामेण वाचयति—

**अप्यहं जीवितं जह्यां युष्मान् वा पुरुषर्षभाः।**

**अपवादभयाद् भीतः किं पुनर्जनकात्मजाम्।।**[3]

पुनः पश्यतु "**सत्यमिष्टं हि मे सदा**" इत्युक्त्वा मुनीनां रक्षाप्रसङ्गे कृत-

---

1. वाल्मीकिरामायणम्, युद्ध., 128/100,102.
2. वाल्मीकिरामायणम्, उत्तर., 45/10,11,12,13,
3. वाल्मीकिरामायणम्, उत्तर., 45/14.

प्रतिज्ञायाः स्वसत्यनिष्ठायाश्च दार्ढ्याय भगवता रामेण अरण्य काण्डोक्तं मूलश्लोकम्—

**अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम्।**
**न तु प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः॥**[1]

एवं राक्षसमानसेन दुष्टेन क्षेपककारेण स्वीयकूटरचनाद्वारेण रामचारित्र्ये नृशंसता-कीर्तिलोलुपतास्थापनाय सत्यधर्मनिष्ठाऽऽवरणाय भगवतोक्तश्लोकमेव परिवर्त्य कुत्सितः प्रयासः कृतः। न तु इत्येव अपितु —

**फलमूलाशिनं जितेन्द्रियं नियताहारं रामं प्रक्षिप्ते उत्तरे काण्डे मद्यपी मांसाहारी व्यभिचारी च लिखति क्षेपककारः सीतापरित्यागात्मिकां मिथ्याकथायाम्।**

तापसौ रामलक्ष्मणौ वर्णयन्ती खरदूषणौ प्रति राक्षसी सूर्पणखापि तयोः सात्विकं जीवनं ज्ञापयन्ती एवमुक्तवती—

**फलमूलाशिनौ दान्तौ तापसौ ब्रह्मचारिणौ।**
**पुत्रौ दशरथस्यास्तां भ्रातरौ रामलक्ष्मणौ॥**
**तरुणी रूपसंपन्ना सर्वाभरणभूषिता।**
**दृष्टा तत्र मया नारी तयोर्मध्ये सुमध्यमा॥**[2]

अत्र स्पष्टं यत् रामलक्ष्मणौ फलमूलाशिनौ आस्ताम्। तेजस्विनौ तपस्विनौ तौ ब्रह्मचारिणौ ज्ञानाचरणं कुर्वतौ आस्ताम्। ज्ञानाचरणमेव ब्रह्मचर्यमित्यपि स्पष्टमत्र। पत्नीसीतया सार्द्धमेव रामः ब्रह्मचर्यं चरति ज्ञानाचरणं करोतीत्यर्थः। द्वितीयेन श्लोकेन एतद्विषयः स्पष्टः। यः कोऽपि ज्ञानाचरणं करोति स एव ब्रह्मचारी न तु अविवाहितः स्त्रीपुरुषसंबन्धविरहितो वा। रामलक्ष्मणौ फलमूलाशिनाविति एतावाहारविषये न जानन्ती शूर्पणखा एवमुक्तवतीति चेन्न, सत्यवादी रामः स्वयं स्वपरिचयं ददाति राक्षसान् —

**पुत्रौ दशरथस्यावां भ्रातरौ रामलक्ष्मणौ।**
**प्रविष्टौ सीतया सार्धं दुश्चरं दण्डकावनम्॥**
**फलमूलाशिनौ दान्तौ तापसौ ब्रह्मचारिणौ।**
**वसन्तौ दण्डकारण्ये किमर्थमुपहिंस्यथ॥**[3]

शत्रुः राक्षसः मारीचोऽपि रावणं रामविषये ज्ञापयन् वक्ति—

**"तापसं नियताहारं सर्वभूतहितेरतम्।"**[4]

1. वाल्मीकिरामायणम्, अरण्य., 10/18.
2. वाल्मीकिरामायणम्, अरण्य.,19/15,17.
3. वाल्मीकिरामायणम्, अरण्य., 20/7,8.
4. वाल्मीकिरामायणम्, अरण्य.,39/8.

रामः वनवासकाले एव तापसात्मकं जीवनं चरन् मांसाहारं न करोति स्म। न स्वाभाविके जीवनेऽयोध्यायामितिचेन्न, महर्षिः वाल्मीकिः स्वयमयोध्यां वर्णयनुक्तवान् यत् कोऽपि अयोध्यावासी मांसाहारी, अदानी, अनात्मवान्, दरिद्रो वा नास्तीति।

**तस्मिन् पुरवरे हृष्टाः धर्मात्मानो बहुश्रुताः।**
**नरास्तुष्टा धनैः स्वैः स्वैरलुब्धा सत्यवादिनः।**
**नामृष्टभोजी नादाता नाप्यनङ्गदनिष्कधृक्।**
**नाहस्ताभरणो वापि दृश्यते नाप्यनात्मवान्॥**[1]

अर्थात् तत्र अयोध्यापुर्यां सर्वे एव अयोध्यावासिनः अलुब्धाः, स्वैः धनैः तुष्टाः, धर्मात्मानः, सत्यवादिनः, दानिनः प्रसन्नाश्चासन्। तत्र कोऽपि मांसाहारी, अनात्मवादी, दरिद्री वा नासीत्। इदमप्यत्रावधेयं यदनात्मवादिन एव मांसाहारं कुर्वन्ति न त्वात्मवादिनः। सर्वेषु भूतेष्वात्मदर्शनत्वात् ते बन्धनवधक्लेशान् प्राणिनां न चिकीर्षन्ति। वर्तमानकालेऽपि अयोध्यायां मांसाहारः पूर्णतया निषिद्धोऽस्ति। जितेन्द्रियः धर्मात्मा सर्वात्मा रामः मनसापि कामभावनया परनारीविषये कदापि न चिन्तितवानिति स्वयं भगवती सीता वक्ति—

**कुतोऽभिलषणं स्त्रीणां परेषां धर्मनाशनम्।**
**तव नास्ति मनुष्येन्द्र न चाभूत्ते कदाचन॥**
**मनस्यपि तथा राम न चैतद्विद्यते क्वचित्।**
**स्वदारनिरतश्चैव नित्यमेव नृपात्मज॥**
**धर्मिष्ठः सत्यसंधश्च पितुर्निदेशकारकः।**
**त्वयि धर्मश्च सत्यञ्च त्वयि सर्वं प्रतिष्ठितम्॥**[2]

एवं प्रकारकफलमूलाशिनं नियताहारं सर्वभूतहितेरतं धर्मिष्ठं रामं सत्यसंधं दूषयन् पापात्मा क्षेपककारः प्रक्षिप्ते उत्तरे काण्डे रामेण स्थापितजीवनमूल्यानामावरणाय मिथ्याकथां लिखति—

**बह्वासनगृहोपेतां लतागृहसमावृताम्।**
**अशोकवनिकां स्फीतां प्रविश्य रघुनन्दनः॥**
**आसने च शुभाकरे पुण्यप्रकरभूषिते।**
**कुथास्तरसंस्तीर्णे रामः संनिषषाद ह॥**

---

1. वाल्मीकिरामायणम्, बाल., 6/6,11.
2. वाल्मीकिरामायणम्, अरण्य., 9/5,6.

सीतामादाय हस्तेन मधु मैरेयकं शुचि।
पाययामास काकुत्स्थ सचीमिव पुरन्दरः॥
मांसानि सुभृष्टानि फलानि विविधानि च।
रामस्याभ्यवहारार्थं किंकरास्तूर्णमाहरन्॥
उपानृत्यञ्श्च राजानं नृत्यगीतविशारदाः।
अप्सरोरगसंघाश्च किन्नरीपरिवारिताः॥
दक्षिणा रूपवत्यश्च स्त्रियः पानवशङ्गताः।
उपानृत्यञ्श्च काकुत्स्थ नृत्यगीतविशारदाः॥
मनोऽभिरामा रामास्ता रामो रमयता वरः।
रमयामास धर्मात्मा रामं परमभूषिताः॥[1]

अर्थात् रघुनन्दनः रामः बह्वासनगृहयुक्तां विविधैः लतामण्डपैः सुसज्जितां विशालामशोकवनिकां प्रविश्य विविधैः पुष्पैः विभूषिते चित्रितकोमलचिक्वणविस्तरेण संस्तीर्णे आसने सम्यगासीनः जातः सीतया सह। तदा स्वहस्तेन शुचिमधुरं मैरेयकं मद्यमादाय काकुत्स्थः रामः सीतां पाययामास पायितवान् यथेन्द्रः पवित्रमधुरं मद्यं शचीं पाययति। न तु रामादयः मद्यपानमेव कुर्वन्ति स्म, अपितु मद्यः शुचिः मधुरश्च भवतीति स्थापयितुमिच्छन् मद्यपायी, मांसाहारी व्यभिचारी क्षेपककारः **"मधुमैरेयकं शुचीति"** लिखितवान् । स्वीयं दुश्चारित्र्यं रामानुसारी दर्शयितुमिच्छन् अग्रे लिखति मद्यं पीत्वा सीतारामौ सुमृष्टानि मांसानि विविधानि फलानि च खादितवन्तौ यथा मद्यपायीव्यभिचारिणः कुर्वन्ति। तत्र च बहवः नृत्यगीतविशारदाः दक्षिणा रूपवत्यः अप्सराः नागकन्यकाः किन्नर्यः स्त्रियः तथैव मद्यं पीत्वा मांसादिकं खादित्वा राजानं राममुपानृत्यन्।

यदा उपानृत्यन्तः एताः दक्षिणा रूपवत्यः मनोऽभिरामाः रमणयः मद्यपानवशङ्गताः तदा रमणकर्तृषु श्रेष्ठः कामकलादक्षः धर्मात्मा रामः ताभिः नित्यपरमभूषिताभिः सुन्दरीभिः रमणीभिः सह रमयामास, इत्यनेन दुष्टः क्षेपककारः महर्षिवाल्मीकिलिखितसीतोक्त-स्त्रीणामभिलषणं परदाराभिगमनं महदधर्मं धर्मत्वेन स्थापनाय, पापिष्ठं धर्मात्मरूपप्रदानाय च धर्मात्मा राम एव एवं कृतवानिति लिखितवान्। पुनः पश्यतु सीतोक्तं रामस्वरूपं वाल्मीकिकृतश्लोकेषु —

**कुतोऽभिलषणं स्त्रीणां परेषां धर्मनाशनम्।**
**तव नास्ति मनुष्येन्द्र न चाभूत्ते कदाचन॥**

---

1. वाल्मीकिरामायणम्, उत्तर., 42/16तः 22 पर्यन्तम्।

**मनस्यापि तथा राम न चैतद् विद्यते क्वचित्।**
**स्वदारनिरतश्चैव नित्यमेव नृपात्मज।।**
**धर्मिष्ठः सत्यसन्धश्च पितुर्निर्देशकारकः।**
**त्वयि धर्मश्च सत्यञ्च त्वयि सर्वं प्रतिष्ठितम्।।**[1]

वाल्मीकिमहर्षिणा दृष्टः **"रामः नैरन्तर्येण सर्वभूतहिते एव रतः आस्ताम्"** तदावरणाय एषः दुष्टः क्षेपककारः लिखति प्रतिदिवसमेवापराह्णे दिवसार्धभागे रामः मद्यं पीत्वा मांसादिकञ्च भोजयित्वा अन्तःपुरे विविधैः सुन्दरीभिः स्त्रीभिः सह रमणं करोति स्म अवलोकयन्तु विद्वान्सः —

**पूर्वाह्णे धर्मकार्याणि कृत्वा धर्मेण धर्मवित्।**
**शेषं दिवसभागार्धमन्तःपुरगतोऽभवत्।।**[2]

वर्तमानसमयेऽपि एतादृशः विलासी न दृश्यते। अनेन पापात्मनाऽस्माकं जीवनमूल्यानां विनाशाय अस्माकं प्राणात्मके भगवतो रामविषये पापात्मकी मिथ्यारचना विलिख्य पवित्रे रामायणे प्रक्षिप्ता। स्वतन्त्रेऽपि राष्ट्रेऽद्यापि धार्मिकाः विद्वान्सः पापिष्ठैः कूटलेखकैः धर्मग्रन्थेषु प्रक्षिप्तान् अधर्मान् पश्यन्नपि न पश्यन्तः कथं सहन्ति इत्येवाश्चर्यम्। अस्मासु विद्वत्सु विद्वत्ता धार्मिकता जीविताऽस्ति वा? अग्रेऽपि अवलोकयन्तु क्षेपककाराणां कुकृत्यम्।

## महर्षिवाल्मीकिं प्रति रामं प्रति भारतं राष्ट्रं प्रति च शत्रुभावात् प्रक्षिप्ता शम्बूकवधनाम्नी कूटरचितमिथ्या कथा दुष्टैः क्षेपककारैः।

भगवता रामेण जीविता वाल्मीकिमहर्षिणा गीता वैदिकीवर्णात्मिकासमरसतायाः विनाशाय पूते शवर्याः मतङ्गस्याश्रमे छलेन प्रक्षिप्ता शम्बूकवधनाम्नी मिथ्याकथा। अयोध्या-वर्णने ऋषिणा लिखितं यत् सर्वे एव अयोध्यावासिनः षडङ्गवेदाध्ययनं कुर्वन्ति, सद्व्रतं पालयन्ति। सर्वे एव नराश्च नार्यश्च राष्ट्रभक्ताः, श्रीसम्पन्नाः, दानिनः, सत्यवादिनः, धर्मनिष्ठाः, अनिन्दकाः, सामर्थ्यसम्पन्नाः विद्वान्सः सन्ति। कोऽपि अयोध्यावासी एतेभ्यः गुणेभ्यः रहितः नास्ति। पश्यन्तु —

**नाषडङ्गविदत्रास्ति नाऽव्रतो नाऽसहस्रदः।**
**न दीनः क्षिप्तचित्तो वा व्यथितो वापि कश्चन।।**

---

1. वाल्मीकिरामायणम्, अरण्य., 9/5,6.
2. वाल्मीकिरामायणम्, उत्तर., 42/47 गीताप्रेस

**कश्चिन्नरो वा नारी वा नाऽश्रीमान् नाप्यरूपवान्।**
**द्रष्टुं शक्यमयोध्यायां नापि राजन्यं भक्तिमान्॥**[1]

ननु सर्वे एव अयोध्यावासिनः तस्मिन् समये षडङ्गवेदाध्ययनं कुर्वन्तिस्म अत एव अयोध्यायां कोऽपि शूद्र नासीत् शूद्राणां वेदेष्वनधिकारप्रसङ्गादिति चेन्न। ब्राह्मणादारभ्य शूद्रपर्यन्ताः सर्वे वर्णावलम्बिनः षडङ्गवेदानधीत्य सत्यवादिनः कृतज्ञाः विक्रमसंयुताः शूराः देवतातिथिपूजकाश्चासन्। इति तत्रैव —

**वर्णेष्वग्र्यचतुर्थेषु देवतातिथिपूजकाः।**
**कृतार्थश्च वदान्याश्च शूरा विक्रमसंयुताः॥**[2]

समग्रः वैदिकः धर्मः रामराज्ये स्थापितः। रामस्य गुहनिषादेन सह मैत्री, जटायुं प्रति पितृवत् श्रद्धा, सर्वेषां वनवासिनामृषीणां ऋक्षवानराणां प्रति चात्मीयभावः स्पष्टं वर्णितं ऋषिणा रामायणे। शैवलस्योत्तरे प्रान्ते पम्पासरे मतङ्गाश्रमे भीलन्याः शवर्याः तपः भक्तिश्च, तां प्रति रामस्य हार्दिकः स्नेहः एतद् सर्वं दर्शयन्नेव वाल्मीकिः रामं "**बहिश्चर इव प्राणाः प्रजानां पार्थिवात्मजः।**" इति लिखितवान्। अत एव प्रजावत्सलः सर्वान्तरात्मा रामः भूतानुद्वेजनीयान् पापकर्मकर्तॄन् ब्राह्मणकण्टकान् राक्षसान् रावणादीनहनत्। सर्वे देवा ऋषयः गन्धर्वाः महात्मानः युद्धसमये रामस्य मङ्गलमिच्छन् एवमूचुः —

**स्वस्ति गोब्राह्मणानाञ्च लोकानां चेति संस्थिताः।**
**जयतां राघवो युद्धे पौलस्त्यान् रजनीचरान्॥**
**चक्रहस्तो यथा विष्णुः सर्वानसुरपुङ्गवान्।**[3]

सर्वत्र युद्धसमये तत्र तत्र महात्मनामेषा मङ्गलकामना किञ्चिद् परिवर्तनेन रामायणेऽस्ति तद्यथा पुनः तत्रैव—

**स्वस्ति गोब्राह्मणेभ्यस्तु लोकानां ये च सम्मताः।**
**जयतां राघवो युद्धे पौलस्त्यान् रजनीचरान्॥**
**चक्रहस्तो यथा विष्णुः सर्वानुसरसत्तमान्।**[4]

---

1. वाल्मीकिरामायणम्, बालका., 6/15,16 गीताप्रेस
2. वाल्मीकिरामायणम्, बाल., 6/17.
3. वाल्मीकिरामायणम्, अरण्य., 24/21.
4. वाल्मीकिरामायणम्, अरण्य., 23/28.

रामः स्वयमपि राक्षसान् खरादीन् वधन् वक्ति —

**नृशंसशील क्षुद्रात्मन् नित्यं ब्राह्मणकण्टक।**
**त्वत्कृते शङ्कितैरग्नौ मुनिभिर्पात्यते हविः॥[1]**
**ये त्वया दण्डकारण्ये भक्षिता धर्मचारिणः।**
**तानद्य निहता संख्ये ससैन्योऽनुगमिष्यसि॥**
**अद्य त्वां निहतं बाणैः पश्यन्तु परमर्षयः।**
**निरयस्थं विमानस्था ये त्वया निहता पुराः॥[2]**

महर्षिः वाल्मीकिः पौलस्त्यान् राक्षसान् कुत्रापि ब्राह्मणं न वक्ति, किन्तु दुष्टः क्षेपककारः स्वकपोलकल्पिते उत्तरे काण्डे पौलस्त्यानां राक्षसानां महिमवर्णयन् **''रावणादीन् हत्वा रामेण ब्रह्महत्या कृता''** इति लिखितान्। कृत्येनानेन प्रतिभाति एषः क्षेपककारः रावणादिराक्षसप्रकृत्यानुयायी कोऽपि पौलस्त्यः छद्मब्राह्मण आसीत्। इदमप्यत्रावधेयं यत् यदा राक्षसाः मुनीनां महात्मनां हननं कुर्वन्ति स्म, तदाऽनेन राजदोषेण कस्यापि ब्राह्मणपुत्रस्य मृत्युर्न भवति स्म। किन्तु रामराज्येऽनेन कल्पितेन अहिंसकेन धार्मिकेण शूद्रेण कस्याप्यहितमनिच्छन् मात्रपरलोकप्राप्त्यर्थ-क्रियमाणतपप्रभावादेव ब्राह्मणपुत्रस्य मृत्युः जाता। यद्यप्यस्याः कूटकथायाः मिथ्यात्वस्य प्रमाणभूतं युद्धकाण्डे वाल्मीकि-वर्णितरामराज्यवर्णनमेवास्ति। तत्र महात्मा वाल्मीकिः एवं लिखति—

**निर्दस्युरभवन्लोको नानर्थं कस्यचिद् स्पृशत्।**
**न च स्म वृद्धाः बालानां प्रेतकार्याणि कुर्वते॥**
**आसन् प्रजा धर्मपरा रामे शासति नानृताः।**
**सर्वे लक्षणसम्पन्नाः सर्वे धर्मपरायणाः॥**
**रामो रामो राम इति प्रजानामभवन्कथाः।**
**रामभूतं जगद्भूत रामे राज्यं प्रशासति॥[3]**

इत्येवं स्पष्टमुक्तं यत् समग्रमेव विश्वं रामराज्ये राममयं जातम्। रामः विश्वस्य चक्रवर्ती सम्राट्। किन्तु तत्सर्वमावृतुमिच्छन् क्षेपकारः प्रक्षिपति—

**तत कतिपयाह्नः सुबृधो जानपदो द्विजः।**
**मृतं बालमुपादाय राजद्वारमुपागमत्॥**

---

1. वाल्मीकिरामायणम्, अरण्य., 30/12.
2. वाल्मीकिरामायणम्, अरण्य., 29/12,13
3. वाल्मीकिरामायणम्, युद्ध., 128/99,100,102.

रामस्य दुष्कृतं किञ्चिद् महदस्ति न संशयः।
यथाहि विषयस्थानां बालानां मृत्युरागतः॥[1]

क्षेपककारः रामस्य चक्रवर्तिसम्राड्रूपमप्यावरन् लिखति—

न ह्यन्यविषयस्थानां बालानां मृत्युतो भयम्।
स राजञ्जीवयस्वैनं बालं मृत्युं वशं गतम्॥
राजद्वारि मरिष्यामि पत्न्या सार्धमनाथवत्।
ब्रह्महत्या ततो राम समुपेत्य सुखी भव॥[2]

एवं स्वकल्पितवृद्धब्राह्मणमुखेन रामं ब्रह्महत्यारमुक्त्वा एषः शठः क्षेपककारः रघुकुलराज्येषु "**रामः श्रेष्ठतमोऽस्ति**" इत्यप्यसहन् विविधप्रकारेण कल्पितब्राह्मणमुखेन रामराज्यं दूषयति पश्यन्तु—

सम्प्रत्यनाथो विषय इक्ष्वाकूणां महात्मनाम्।
रामं नाथमिहासाद्य बालान्तकरणां ध्रुवम्॥
राजदोषैर्विपद्यन्ते प्रजा ह्यविधिपालिताः।
असद्वृत्ते हि नृपतावकाले म्रियते जनः॥[3]

रामराज्यं प्रति लोकेऽनास्थां जागरितुमिच्छन् क्षेपककारः स्वकल्पितेन ब्राह्मणमाश्रित्य स्वयं मिथ्या वक्ति इक्ष्वाकूणां इक्ष्वाकुवंशी राज्ञां महात्मनां महापुरुषाणां विषयः राज्यं सम्प्रति रामे राज्यं प्रशासति इह अयोध्यासिंहासने राममासाद्य रामं प्राप्य अनाथं जातमस्ति केन कारणेन इत्याकाङ्क्षायां वक्ति बालान्तकरणं ध्रुवं निश्चयेन बालानां मृत्युकारकत्वात्। अविधिपालिताः प्रजाः राजदोषैः विपत्तिं प्राप्नुवन्ति नृपतौ राजनि असद्वृत्ते मिथ्याचरणे हि एव जनः अकाले असमये म्रियते मृत्युं प्राप्नोति। एवं रामः मिथ्याचारी कीर्तिलोलुपः राजा इत्यादि रामं प्रति बहुविधमपशब्दमुक्त्वा स्वमिथ्याकथामग्रे कल्पयति। रामः एतत् सर्वं श्रुतवान् श्रुत्वा च मन्त्रिणः आहूतवान् —

स दुखेन च संतप्तो मन्त्रिणस्तानुपाह्वयत्।
वसिष्ठं वामदेवञ्च भ्रातृञ्श्च सहनैगमान्॥
ततो द्विजा वशिष्ठेन सार्धमष्टौ प्रवेशितः।
राजानं देवसंकाशं वर्धस्वेति ततोऽब्रुवन्॥

1. वाल्मीकिरामायणम्, उत्तर., 73/2,10.
2. वाल्मीकिरामायणम्, उत्तर., 73/11,12
3. वाल्मीकिरामायणम्, उत्तर., 73/15,16.

**मार्कण्डेयोऽथ मौद्गल्यो वामदेवश्च काश्यपः।**
**कात्यायनोऽथ जाबालिर्गौतमो नारदस्तथा।।[1]**

अत्रोक्तं क्षेपककारेण रामस्य मन्त्रिमण्डले प्रगणिताः ऋषयोऽपि चिन्तनीयाः। तेषु मध्येऽहिल्यायाः पतिः गौतमोऽप्यस्ति यः अहिल्यां शापं दत्त्वा पञ्चत्वे विलीनः आसीत्। ततः कश्चन कालानन्तरं रामस्य चरणरजेन शिलारूपे स्थिताऽहिल्या मुक्तिं प्राप्तवती स्वाश्रमे। रामस्य मन्त्रिमण्डले नारदस्योल्लेखोऽन्यत्र कुत्रापि नास्ति। किन्त्वत्र एषः क्षेपका कारः स्वकूटयोजनानुसारं मिथ्याकथायाः प्रभाववर्द्धनाय नारदमपि रामस्य मन्त्रिमण्डले आहूतवान्। कारणमत्र वाल्मीकिं प्रति रामचरित्रस्य प्रथमवक्ता त्रिलोकसंचारी पारद्रष्टा नारद एव। सः रामराज्यमेवं वर्णितवान् वाल्मीकिं प्रति—

**नन्दिग्रामे जटां हित्वा भ्रातृभिः सहितोऽनघः।**
**रामः सीतामनुप्राप्य राज्यं पुनरवाप्तवान्।।**
**प्रहृष्टमुदितो लोकस्तुष्टः पुष्टः सुधार्मिकः।**
**निरामयो ह्यरोगश्च दुर्भिक्ष-भय-वर्जितः।।**
**न पुत्रमरणं केचित् द्रक्ष्यन्ति पुरुषाः क्वचित्।**
**नार्यश्चाविधवा नित्यं भविष्यन्ति पतिव्रताः।।[2]**

यथा नारदेन रामराज्यविषये उक्तमासीत् तथैव रामराज्यं दृष्ट्वा वाल्मीकिः युद्धकाण्डसमाप्तौ रामराज्यवर्णनं कृतवान्।

**न पर्यदेवन् विधवा न च व्यालकृतं भयम्।**
**न व्याधिजं भयं चासीत् रामे राज्यं प्रशासति।।**
**निर्दस्युरभवन्लोको नानर्थं कस्यचित्दस्पृशत्।**
**न च स्म वृद्धाः बलानां प्रेतकार्याणि कुर्वते।।**
**सर्वं मुदितमेवासीत् सर्वो धंर्मपरोऽभवत्।**
**राममेवानुपश्यन्तो नाभ्यहिंसन् परस्परम्।।**
**रामो रामो राम इति प्रजानामभवन्कथाः।**
**राम भूतं जगद्भूतरामेराज्यं प्रशासति।।[3]**

---

1. वाल्मीकिरामायणम्, उत्तर., 74/2,3,4
2. वाल्मीकिरामायणम्, बाल., 1/89,90,91.
3. वाल्मीकिरामायणम्, युद्ध., 128/98,99,100,102.

किन्तु दुष्टः क्षेपककारः लोके भ्रान्त्युत्पादनाय रामचरित्रहननाय च तथ्यात् विपरीतमेव लिखति। वाल्मीकिवर्णितरामराज्यस्य पंक्तिशः खण्डनाय एवोत्तरकाण्डं कल्पितवान्। तथैवात्र वाल्मीकिलिखिता **"न च स्म वृद्धाः बालानां प्रेतकार्याणि कुर्वते"**[1] इति पङ्क्तिं खण्डयन् तद्विपरीतमुत्तरकाण्डे लिखति **"सुवृद्धो जानपदो द्विजः मृतं बालमुपादाय राजद्वारमुपागमत्"**[2] इति। वाल्मीकिमहर्षिणा युद्धकाण्डे समाप्तौ लिखितम् —

**"ब्राह्मणाः क्षत्रियाः वैश्याः शूद्रा लोभविवर्जिताः।**
**स्वकर्मसु प्रवर्तन्ते तुष्टाः स्वैरेव कर्मभिः॥"**[3] इति।

एषः क्षेपककारः वर्णात्मकसामरस्यताविनाशाय एषा मिथ्या कूटकथा लिखति। यतः त्रिलोकसंचारी पारद्रष्टा नारदः एव रामचरित्रस्य प्रथमवक्तास्ति तत्र शम्बूकवधनाम्नी-मिथ्याकथाया अस्तित्वं नास्ति। अतोऽत्र मिथ्याकथायां सत्यत्वस्य भ्रमोत्पादनाय रामस्य मन्त्रिमण्डले वशिष्ठेन सह नारदमपि स्थापयति। तेषां सर्वेषां समुपविष्टानां दीप्ततेजसां मन्त्रिणां समक्षं क्षेपककारकल्पितमिथ्याचारेण श्रीहीनः दीनः रामः वक्ति—

**मन्त्रिणो नैगमाश्चैव यथार्हमनुकूलतः।**
**तेषां समुपविष्टानां सर्वेषां दीप्ततेजसाम्॥**
**राघवः सर्वमाचष्टे द्विजोऽयमुपरोधते।**[4]

दीनस्य राज्ञः रामस्यैतद् वचनं श्रुत्वा नारदः स्वयमर्थात् क्षेपककारेण कल्पितः नारदः न तु वास्तविकः अपितु स्वयं क्षेपककारः एव मिथ्या वक्ति—

**शृणु राजन् यथाकाले प्राप्तो बालस्य संक्षयः।**
**श्रुत्वा कर्तव्यतां राजन् कुरुष्व रघुनन्दन॥**[5]

हे राजन् राम! शृणु यथा येन प्रकारेण येन राजदोषेण एषः ब्राह्मणपुत्रः अकाले मृत्युं प्राप्तवान्। केनादृष्टेनैषः बालः मृतः तत् सर्वं मत्तः श्रुत्वा कर्तव्यं कुरु। एवं दुष्टः क्षेपककारः अधर्मं पापं धर्मत्वेन भ्रामयति।

**पुरा कृतयुगे राजन् ब्राह्मणा वै तपस्विनः।**
**अब्राह्मणः तदा राजन् न तपस्वी कथञ्चन॥**

---

1. वाल्मीकिरामायणम्, युद्ध., 128/99 गीताप्रेस
2. वाल्मीकिरामायणम्, उत्तर., 73/2 गीताप्रेस
3. वाल्मीकिरामायणम्, युद्ध., 128/104 गीताप्रेस
4. वाल्मीकिरामायणम्, उत्तर., 74/6-7, गीताप्रेस
5. वाल्मीकिरामायणम्, उत्तर., 74/8, गीताप्रेस

**तस्मिन् युगे प्रज्वलिते ब्रह्मभूते सनातने।**
**अमृत्यवस्तदा सर्वे जज्ञिरे दीर्घदर्शिनः॥**[1]

पश्यन्तु विद्वान्सः विश्वस्य प्रथमसम्राट् **महात्मा मनुः** ऋग्वेदीयमानवसूक्तानां द्रष्टा **ऋषिः**।[2] तस्य पत्नी **महीयसी श्रद्धा** ऋग्वेदीयश्रद्धासूक्तस्य द्रष्ट्री **ऋषिका**।[3] राजपुत्रः ध्रुवः तस्य तपः तेन परमात्मोपलब्धिः सर्वविदित एव। एतेषां सर्वेषां तपः ऋषित्वञ्च श्लोकद्वयेनानेन पापात्मना क्षेपकेनावृतम्। "**मनुर्वैवस्वतो राजा**"[4] इति शतपथे। अग्रे पश्यन्तु क्षेपककारस्य कुकृत्यम् —

**ततस्त्रेतायुगं नाम मानवानां वपुष्मताम्।**
**क्षत्रिया यत्र जायन्ते पूर्वेण तपसान्विताः॥**
**वीर्येण तपसा चैव तेऽधिका पूर्वजन्मनि।**
**मानवा ये महात्मानः तत्र त्रेतायुगे युगे॥**
**स्वधर्मः परमस्तेषां वैश्यशूद्रतदागतम्।**
**पूजां वै सर्ववर्णानां शूद्रश्चक्रुर्विशेषतः॥**[5]

वयं सर्वे जानीमः मनुध्रुवादयः महात्मानः कृतयुगे एव आसन्। कृतयुगे एव तैः तपः तप्तम्। किन्तु एषः क्षेपककारः लिखति मानवाः महात्मानः त्रेतायुगे एव तप कृतवन्तः। तस्मिन् युगे वैश्यशूद्रवर्णयोः तपनिषेधं करोति। अनेन कृतयुगे ऋग्वेदोऽपि नासीदिति वक्तुमिच्छति एषः दुष्टः क्षेपककारः। एतेनैव दुर्गासप्तशतीवर्णितसमाधिवैश्य-तपस्याप्यावरणं कृतम्। अनया युक्त्या ध्रुवादयः त्रेतायुगे जाताः इति विचिन्त्य रामस्य द्वापरयुग इति अग्रे लिखति—

**अस्मिन् द्वापरसंख्याने तपो वैश्यान् समाविशत्।**
**त्रिभ्यो युगेभ्यो त्रीन् वर्णान् क्रमात् वै तप आविशत्॥**
**न शूद्रो लभते धर्मं युगतस्तु नरर्षभ।**
**हीनवर्णो नृपश्रेष्ठ तप्यते तु महत्तपः॥**
**भविष्यच्छूद्रयोन्यां हि तपश्चर्या कलौ युगे।**
**अधर्मः परमो राजन् द्वापरे शूद्रजन्मनः॥**

1. वाल्मीकिरामायणम्, उत्तर., 74/9,10, गीताप्रेस
2. ऋग्वेदे, 8/27-28.
3. ऋग्वेदे, 10/151.
4. श.ब्रा., 13/4/3/3.
5. वाल्मीकिरामायणम्, उत्तर., 74/11,12,21 गीताप्रेस

**स वै विषयपर्यन्ते तव राजन्महातपाः।**
**अद्य तप्यति दुर्बुद्धिः तेन बालवधो ह्ययम्।।**[1]

एवं पापात्मना क्षेपककारेण लिखितं रामः द्वापरे आसीत्। तथा शूद्रस्य धर्मेऽधिकारः नास्ति, अधर्ममेव करणीयं शूद्राणाम्। सर्वत्र शास्त्रेषु "**धर्म एव कर्तव्यः मानवानां न त्वधर्मः**", तत्रापि शूद्रवर्णानां विशेषेण तप एव कर्म - इति प्रतिपादितमस्ति वेदे "**तपसे शूद्रम्**" इत्यस्मिन् यजुर्वेदीय मन्त्रे। अस्य मन्त्रस्य व्याख्यानं शतपथे एवमस्ति—

**"तपसे शूद्रम्"। तपो वै शूद्रः। तप एव तत्तपसा समर्द्धयति।**[2]

किन्त्वत्र क्षेपकेन प्रतिपादितं यत् शूद्रतपोद्भूतेन अदृष्टेन ब्राह्मणपुत्रः मृतः। यद्यपि तपः ब्राह्मणपुत्रमारणाय शूद्रेन न कृतमासीत्। एवं भवेत् चेत् ये केऽपि ब्राह्मणशत्रवः ते शूद्रेण तपं कारयित्वा ब्राह्मणानां वंशोच्छेदं कर्तुमशक्नुवन्। किन्तु तथा न जातमतो मिथ्याकथा एषा। दुष्टः क्षेपककारः अग्रे कथयति यस्य राज्ञः राज्ये शूद्रः तपति शूद्रतपप्रभावेण सः राजापि क्षिप्रं नरकं याति। इत्युक्त्वा क्षेपककारेण कल्पितः नारदः तथैव कल्पितं राममादिशति- भवतः राज्ये कोऽपि दुर्बुधिः शूद्रः अधर्मं त्यक्त्वा धर्मं स्वीकृत्य कुत्रापि तपति। भवान् तस्यान्वेषणं कृत्वा वधं करोतु। तस्य वधेनैवैषः ब्राह्मणबालकः जीवितं भविष्यति। एषः काल्पनिकः रामोऽपि क्षेपककारस्य कल्पनायां हर्षोत्फुल्लः प्राणरहितमक्षतं बालशरीरं रक्षणाय लक्ष्मणमादिष्टम् —

**गच्छ सौम्य द्विजश्रेष्ठ समाश्वासय सुव्रत।**
**बालस्य च शरीरं तत् तैलद्रोण्यां निधापय।।**
**गन्धैश्च परमोदारैस्तैलैश्च वै सुगन्धिभिः।**
**यथा न क्षीयते बालस्तथा सौम्य विधीयताम्।।**
**यथा शरीरो बालस्य गुप्तः सन् क्लिष्टकर्मणः।**
**विपत्तिः परिभेदो वै न भवेच्च तथा कुरु।।**[3]

एवं लक्ष्मणं संदिश्य पुष्पकं मनसा ध्यात्वाऽऽहूय धनुः रुचिरप्रभं खड्गं च गृहीत्वा तस्मिन् विमानेऽध्यरोहत। क्षेपककारस्य मिथ्यारचनायामेव न तु तथ्यतः। तथ्यतस्तु पुष्पकविमानं भगवान् रामः भ्रातृभिः सहितः भरतस्याश्रमे नन्दीग्रामे अवतीर्य कुवेराय प्रेषितवान् यथा वदति महर्षिः वाल्मीकिः—

**भरताश्रममासाद्य ससैन्यो राघवस्तदा।**
**अवतीर्य विमानाग्रादवतस्थे महीतले।।**

---

1. वाल्मीकिरामायणम्, उत्तर., 74/22.
2. यजुर्वेदः, 30/5; श.ब्रा., 3/6/2/10.
3. वाल्मीकिरामायणम्, उत्तर., 75/2,3,4

**अब्रवीत् तु तदा रामस्तद्विमानमनुत्तमम्।**
**वह वैश्रवणं देवमनुजानामि गम्यताम्॥**
**ततो राममनुज्ञातं तद् विमानमनुत्तमम्।**
**उत्तरां दिशमुद्दिश्य जगाम धनदालयम्॥**
**विमानं पुष्पकं दिव्यं संगृहीतं तु रक्षसा।**
**अगमद् धनदं वेगाद् रामवाक्यप्रचोदितम्॥**[1]

एवं स्पष्टं यत् भगवता रामेण पुष्पकविमानं कुबेराय प्रेषितमासीत् । मूलतः पुष्पकस्य स्वामी कुवेर एव। महापुरुषेषु प्रदत्तवस्तोः पुनरुपयोगः कुत्रापि न हि दृश्यते। किन्तु एषः क्षेपककारः रामं मिथ्याचारी दर्शयितुमेवैषा मिथ्याकथां लिखितवान्। अत एव क्षेपककारस्य काल्पनिकः रामः उक्तप्रकारेण पुष्पकविमाने अध्यरोहत। तेन च विमानेन रामः प्रतीचीं दिशां गत्वा दृष्टवान् कुत्रापि कोऽपि शूद्रः तपः न हि तप्यते। तदनन्तरं हिमवतामुत्तरदिशमपश्यमानः कुत्रापि तपं तपन् शूद्रं न दृष्टवान्। तथैव पूर्वामपि दिशि कुत्रापि तपं तपन् शूद्रं न दृष्टवान्। तद्यथा प्रक्षिप्तकथायां वक्ति क्षेपककारः—

**प्रायात् प्रतीचीं हरितं विचिन्वंश्च ततस्ततः।**
**उत्तरामगमच्छ्रीमान् दिशं हिमवता वृताम्॥**
**अपश्यमानस्तत्रापि स्वल्पमप्यथ दुष्कृतम्।**
**पूर्वामपि दिशं सर्वामथापश्यन्नराधिपः॥**
**प्रविशुद्धसमाचारामादर्शतलनिर्मलाम् ।**
**पुष्पकस्थो महाबाहुस्तदापश्यन्नराधिपः॥**[2]

वयं सर्वे जानीमः भगवतः रामस्य तपोभूमिः कर्मभूमिः दक्षिणदिशि एवासीत्। गुहनिषादेन सह मैत्री वनवासिनाम् ऋक्षवानराणां संयोजनम्, तपस्विनां संरक्षणम्, मानवतायाः शत्रून् राक्षसानां हननं च सर्वं दक्षिणदिशि एव कृतम्। तद्यथा रावणं प्रति रामः स्वयं वक्ति—

**देवदानवयक्षाणां गन्धर्वोरगरक्षसाम्।**
**शत्रुमद्योद्धरिष्यामि त्वामृषीणां च कण्टकम्॥**[3]

---

1. वाल्मीकिरामायणम्, युद्ध., 127/60,61,62,63.
2. वाल्मीकिरामायणम्, उत्तर., 75/10,11,12.
3. वाल्मीकिरामायणम्, युद्ध., 41/80.

किन्त्वत्र क्षेपककारः वर्णात्मकं सामरस्यं विनाशयितुमिच्छन् पारस्परिकं द्वेषमुत्पादयितुमिच्छञ्च निरपराधस्य शूद्रस्य नृशंसवधात्मिकां कूटरचनां दक्षिणदिशि एव कल्पयति। यदा पश्चिमदिशि, उत्तरदिशि, पूर्वादिशि सर्वं दृष्ट्वा कुत्रापि तपं तपन् शूद्रं न प्राप्तवान्' तदा—

**दक्षिणां दिशामाक्रामत् ततो राजर्षि नन्दनः।**
**शैवलस्योत्तरे पार्श्वे ददर्श सुमहत्सरः॥**[1]

दक्षिणदिशि शैवलस्योत्तरे पार्श्वे पम्पासरोऽस्ति। यत्र तपस्विन्याः भीलन्याः शबर्याः आश्रमोऽस्ति। अहो एषः पापात्मा तपः पूते शबर्याः पावने आश्रमे मिथ्याशूद्रवधं कूटबुद्ध्या कल्पयति।

**तस्मिन् सरसि तप्यन्तं तापसं सुमहत्तपः।**
**ददर्श राघवः श्रीमान् लम्बमानमधोमुखम्॥**
**राघवस्तमुपागम्य तप्यन्तं तप उत्तमम्।**
**उवाच च नृपो वाक्यं धन्यस्त्वमसि सुव्रत॥**
**कस्यां योन्यां तपोवृद्ध वर्तसे दृढ़विक्रम।**
**कौतूहलात्त्वां पृच्छामि रामो दाशरर्हिहम्॥**
**कोऽर्थो मनीषितस्तुभ्यं स्वर्गलाभोऽपरोऽथवा।**
**वराश्रयो यदर्थे त्वं तपस्यन्यैः सुदुश्चरम्॥**
**यमाश्रित्य तपस्तप्तं श्रोतुमिच्छामि तापस।**
**ब्राह्मणो वासि भद्रं ते क्षत्रियो वासि दुर्जयः।**
**वैश्यस्तृतीयो वर्णो वा शूद्रो वा सत्यवाग्भव॥**[2]

एवमेषः क्षेपककारेण कल्पितः रामः तापसेन तस्य वर्णयोनिं पृच्छति न तु ऐतिहासिकः महर्षिवाल्मीकिना दृष्टः रामः। स रामः तु पक्षीणाम् ऋक्षवानराणां विषयेऽपि वर्णयोनिं न पृच्छति। तापसीश्रमणीशबरीविषये तु श्रेष्ठतमः स्नेहः एव, तत्र महात्मा राम एवं पृच्छति—

**कच्चित्ते निर्जिता विघ्नाः कच्चित्ते वर्द्धते तपः।**
**कच्चित्ते नियतः कोपः आहारश्च तपोधने॥**

---

1. वाल्मीकिरामायणम्, उत्तर., 75/13.
2. वाल्मीकिरामायणम्, उत्तर., 75/14 तः 18 पर्यन्तम्

**कच्चित्ते नियमाः प्राप्ताः कच्चित्ते मनसः सुखम्।**
**कच्चित्ते गुरुसुश्रूषा, सफला चारुभाषिणि।।**[1]

वाल्मीकिः भीलनीं तापसीं शबरीं सिद्धां सिद्धसम्मतां वदति—

**रामेण तापसी पृष्टा सा सिद्धा सिद्धसम्मता।**
**शशंस शबरी बृद्धा रामाय प्रत्यवस्थिता॥**
**अद्य प्राप्ता तपः सिद्धिस्तव संदर्शनान्मया।**
**अद्यमे सफलं जन्म गुर्वश्च सुपूजिताः।।**[2]

आतिथ्यवार्तालापानन्तरं रामेण शबर्याः गुरूणां प्रभावविषये प्रत्यक्षदर्शनकामना व्यक्ता। तदा शबरी राममाश्रमं दर्शयन्ती स्वगुरूणां प्रभावमेवमुक्तवती—

**पश्य मेघघनप्रख्य मृगपक्षिसमाकुलम्।**
**मतङ्गवनमित्येव विश्रुतं रघुनन्दन।।**
**इह ते भावितात्मानो गुरुवो मे महाद्युते।**
**जुहुयाञ्चक्रिरे नीडं मन्त्रवन्मन्त्रपूजितम्।।**
**तेषां तपः प्रभावेण पश्याद्यापि रघूत्तम।**
**द्योतयन्ती दिशः सर्वाः श्रियावेद्यतुलप्रभा।।**[3]

एवं शबर्याः मतङ्गादीनाम् ऋषीणाञ्च तपः। रामस्य भक्तवात्सल्यं सर्वात्मकत्वेन कारुण्यम्। लोके रामं प्रति श्रद्धाकारणेनेवैकात्मभाव इति सर्वमसहन् पापात्मा क्षेपककारः अस्मिन् शबर्याः आश्रमे शूद्रवधात्मिकां मिथ्याकूटरचनां कुर्वन् तस्य स्वकल्पितनाम अपि शबरीनामतः साम्यं प्रकल्प्य शम्बूकनाम लिखति। रामे मिथ्यानृशंसतां दर्शयितुं, वर्णेषु पारस्परिकं द्वेषं स्थापयितुं चैवं प्रक्षिपति। तत्र प्रक्षिप्तरचनायां रामेण पृष्टः अधोमुखः लम्बमानः तापसः रामं प्रति एवं वक्ति—

**शूद्रयोन्यां प्रजातोऽस्मि तप उग्रं समास्थितः।**
**देवत्वं प्रार्थये राम सशरीरो महायशः।।**
**न मिथ्याहं वदे राम देवलोकजिगीषया।**
**शूद्रं मां विद्धि काकुत्स्थ शम्बूकं नाम नामतः।।**[4]

---

1. वाल्मीकिरामायणम्, अरण्य., 74/8,9
2. वाल्मीकिरामायणम्, अरण्य., 74/10,11
3. वाल्मीकिरामायणम्, अरण्य., 74/21,22,24
4. वाल्मीकिरामायणम्, उत्तर., 76/2,3

एवं प्रकारेण देवलोकजिगीषया सशरीरं देवत्वं प्रार्थयन्तस्य सत्यं वदन्तस्य कस्यापि हानेर्नेच्छन्तस्य तापसस्य शम्बूकस्य रामः शूद्र इति श्रृण्वन्नेव सद्यः खड्गेन शिरश्चिच्छेद तत्र पापात्मा क्षेपककारेण प्रक्षिप्ते काण्डे—

**भाषतस्तस्य शूद्रस्य खड्ग सुरुचिरप्रभम्।**
**निष्कृष्य कोषाद् विमलं शिरश्चिच्छेद राघवः॥**[1]

अनेन नृशंसकर्मणा क्षेपककारेण कल्पिताः देवाः प्रसन्नाः पुष्पवृष्टिं कृतवन्तः रामं प्रति ज्ञापितवन्तश्च यत् यस्मिन् क्षणे भवान् शम्बूकस्य शिरच्छेदं कृतवान्। तस्मिन्नेव क्षणे मृतब्राह्मणबालस्य तैलकुण्डे स्थापितः शवः जीवितः तैलादुत्थित्वा च गृहे गतवान् तद्यथा तत्रैव प्रक्षिप्ते उत्तरे काण्डे—

**यस्मिन् मुहूर्त्ते काकुत्स्थ शूद्रोऽयं विनिपातितः।**
**तस्मिन् मुहूर्त्ते बालोऽसौ जीवेन समयुज्यत॥**[2]

विद्वान्सः चिन्तयन्तु यस्मिन् क्षणे रामेण लक्ष्मणेन च खरदूषण त्रिशिरारावणमेघनादादीनां शिरच्छेदं कृतं तस्मिन् क्षणे तैः दुष्टैः राक्षसैः निरपराध एव हतस्य कस्यापि ऋषेः ब्राह्मणस्य शवः कङ्कालो वा न जीवितः, किन्तु एकेन निरपराधशूद्रस्य वधेन यः कस्याप्यहितं नेच्छति स्म ब्राह्मणपुत्रस्य शवः जीवितः जातः। इत्येवं मिथ्याकूटरचनायाः पराकाष्ठा एव कृताऽऽनेन पापात्मना क्षेपककारेण।

मूलतः एषा कूटरचना प्रक्षिप्य पापात्मा क्षेपककारः भगवन्तं रामं प्रति घृणोत्पादनाय, ब्राह्मणशूद्रयोर्मध्ये क्षत्रियशूद्रयोर्मध्ये द्वेषबीजं स्थापनाय च मिथ्याकथा-माध्यमेन कूटप्रयासः कृतवान्। वर्तमानसमये तत्कूटप्रयासस्य प्रभावोऽपि दृश्यते लोके। तद्विषये विद्वद्भिः सावधानेन चिन्तनीयम्।

वयं सर्वे जानीमो यद् विश्वामित्रस्य अध्वरे राक्षसाः रक्तमांसमज्जास्थ्यादि प्रक्षिप्य हिंसया अध्वरविरुद्धकर्मणा यज्ञध्वसं कुर्वन्ति स्म तदा सानुजेन भगवता रामेण यज्ञरक्षणं कृतम्। वनवासकाले भगवतारामेण ऋक्षवानरादिवनवासिमानवसमुदायं स्वचारित्र्येण प्रेम्णात्मीयभावेन संगृहीतम्। ऋक्षवानरादयः मानवजातीयाः रामायणे एव स्पष्टं तद्यथा—

रामराज्याभिषेकसमये-

**प्रतिकर्म च सीतायाः सर्वा दशरथस्त्रियः।**
**आत्मनैव तदा चक्रुर्मनस्विन्यो मनोहरम्॥**

1. वाल्मीकिरामायणम्, उत्तर., 76/4.
2. वाल्मीकिरामायणम्, उत्तर., 76/15.

**ततो वानरपत्नीनां सर्वासामेव शोभनम्।**
**चकार यत्नात् कौशल्या प्रहृष्टा पुत्रवत्सला।।**[1]

अर्थात् सर्वासामेव वानरपत्नीनां शोभनं श्रृंगारं पुत्रवत्सला कौशल्या स्वयं कृतवती। मानवीषु एवं श्रृंगारसंभवं न तु वानरपशुषु। अद्यापि वनवासिषु दक्षिणे भारते ऋक्षवानरसंज्ञकाः मानवाः सन्ति। अत एव रामः वनवासी मानवान् संगृह्य कुलाभिमानी दुश्चारित्र्ययुक्तं सज्जनानां सन्तापकं दुष्टं रावणं हत्वा लोके रामराज्यस्य स्थापनां कृतवान्। यत्र सर्ववर्णाः सर्वे मानवाः पारस्परिकप्रेम्णा निवसन्ति स्म। ते धर्मेणा सच्चारित्र्येण निवसन् राममेवानुपश्यन्तः पारस्परिकं सन्देहं न कुर्वन्ति स्म। ब्राह्मणाः क्षत्रियाः वैश्याः शूद्राः लोभरहिताः स्वकर्मसु प्रवर्तन्ते स्म सर्वे स्वकर्मणा सन्तुष्टः आसन् । अत एव राष्ट्रं सर्वसुखसम्पन्नं जातं यथामहर्षिः वाल्मीकिः वक्ति—

**रामो रामो राम इति प्रजानामभवन् कथाः।**
**राम भूतं जगद्भूतं रामे राज्यं प्रशासति।।**
**नित्यमूला नित्यफलास्तरवस्तत्र पुष्पिताः।**
**कामवर्षी च पर्जन्यः सुखस्पर्शश्च मारुतः।।**
**ब्राह्मणाः क्षत्रियाः वैश्याः शूद्रा लोभविवर्जिताः।**
**स्वकर्मसु प्रवर्तन्ते तुष्टाः स्वैरेव कर्मभिः।**
**आसन् प्रजा धर्मपराः रामे शासति नानृताः।**
**सर्वे लक्षणसम्पन्नाः सर्वे धर्मपरायणाः।।**[2]

रामराज्यस्य प्रत्यक्षद्रष्टा महर्षिवाल्मीकिः तैः प्रणीतैरेभिः श्लोकैः स्पष्टं यत् यथा वेदाकाङ्क्षा तथा भगवता रामेण रामराज्यं स्थापितम्। कीदृशी वेदाकाङ्क्षा? वच्मि—

**रुचं नो धेहि ब्राह्मणेषु रुचं राजसु नस्कृधि।**
**रुचं विश्येषु शूद्रेषु मयि धेहि रुचा रुचम्।।**[3]

यथा भगवता रामेण अराक्षसं लोकं कृत्वा महर्षीणामध्वराणाञ्च रक्षा कृता, तथैव पवित्रेषु शास्त्रेषु अस्माकं सामरस्यस्य संस्कृतेश्च विनाशाय राक्षसमानसैः दुष्टैः प्रक्षिप्ताः कूटरचनाः अस्माभिः निस्सारणीयाः। एतेषां क्षेपकानां निवारणार्थं सन्नद्धा भवन्तु विद्वान्सः भागवताः। पवित्रैः शास्त्रैः वैदिकजीवनमूल्यानां स्थापनं कुर्वन्तु लोकोपकाराय।

---

1. वाल्मीकिरामायणम्, युद्ध., 128/17,18.
2. वाल्मीकिरामायणम्, युद्ध., 128/102 तः 105 पर्यन्तम्
3. यजुर्वेदः मा.सं., 18/48.

येन रामायणश्रवणफलात्मकं जीवित्पुत्राणां मातृगौरवमस्माकं मातरोऽपि प्राप्नुवन्तु। यथा वदति महर्षिः वाल्मीकिः—

**राघवेण यथा माता सुमित्रा लक्ष्मणेन च।**
**भरतेन च कैकेयी जीवपुत्रास्तथा स्त्रियः॥**
**भविष्यन्ति सदानन्दाः पुत्रपौत्रसमन्विताः।**
**श्रुत्वा रामायणमिदं दीर्घमायुश्च विन्दति॥**[1]

## चातुर्वर्ण्येन सम्पादित सत्कर्म एव ज्योतिष्टोमः चतुष्टोमो वा

चतुर्भिर्वर्णैः निष्पादितकर्म एव मूलतः चतुष्टोमयागः ज्योतिष्टोमयागो वा भवति। तदेवं वर्णितमस्ति ऐतरेये —

**"ज्योतिष्टोम एवाग्निष्टोमः स्याद्। ब्रह्म वै स्तोमानां त्रिवृत्, क्षत्रं पञ्चदशः, ब्रह्म खलु वै क्षत्रात्पूर्वं ब्रह्म पुरस्तान्म उग्रं राष्ट्रमव्यथ्यमसदिति, विशः सप्तदशः शौद्रोवर्ण एकविंशो, विशं चैवास्मै तच्छौद्रञ्च वर्णमनुवर्त्मानौ कुर्वन्ति।**

**अथ तेजो वै स्तोमानां त्रिवृत्, वीर्यं पञ्चदशः, प्रजातिः सप्तदशः, प्रतिष्ठैकविंशः।**

**तदेनं तेजसा वीर्येण प्रजात्या प्रतिष्ठयाऽन्ततः समर्द्धयति। तस्माज्ज्योतिष्टोमः स्यात्।"**[2]

श्रुत्यर्थविमर्शः— ब्रह्म वै ज्ञानमेव स्तोमानां मानवसमुदायस्य विकासाय समर्पितकर्मणां त्रिवृदस्ति त्रिवृदध्यापनात् विकसितत्वात्। क्षत्रं प्रशासनिकसामर्थ्यमेव मानवसमुदायस्य विकासाय समर्पितकर्मणां पञ्चदशस्तोमोऽस्ति। पञ्चदशस्तु यथा पूर्वं व्याख्यातम्। ब्रह्म खलु वै क्षत्रात् पूर्वं निश्चयेन प्रशासनिक- सामर्थ्यस्योपयोगात्पूर्वं ज्ञानात्मकः विमर्शः· आवश्यकः। ज्ञानपूर्वकमेव सामर्थ्यस्य सदुपयोगः भवति। ब्रह्मपुरस्तान्म उग्रं राष्ट्रमव्यथ्यमसदिति ज्ञानपूर्वकसामर्थ्यस्य सदुपयोगं कुर्वन् मम राष्ट्रमुग्रं व्यथितञ्च न भवतु। स्पष्टमस्ति यद् ज्ञानरहितशक्तेः दुरुपयोग एव भविष्यति। तेन च राष्ट्रमुग्रं व्यथितञ्च भविष्यति। अत ज्ञानपूर्वकमेव सामर्थ्यस्य उपयोगमुपदिष्टम्। लोकस्य विकासाय समर्पितसत्कर्मणां कृषिवाणिज्यात्मकं वैश्यकर्म एव सप्तदशस्तोमोऽस्ति। द्वादशमासाः पञ्चर्तवः एव कृषिवाणिज्यनियामकत्वात् सप्तदश इति पूर्वमेव व्याख्यातम्। लोके राष्ट्रे च विविधानां शिल्पानां विकासाय समर्पिततपात्मकः शौद्रवर्णः एव स्तोमानामेकविंशोऽस्ति। एकविंशः यथा पूर्वं व्याख्यातम् तथैव। अद्यापि लोके यत्र श्रमस्य सामर्थ्यं दृश्यते

---

1. **वाल्मीकिरामायणम्, युद्ध., 128/110,111.**
2. **ऐ.ब्रा., 36/4.**

जनाः कथयन्ति—

**''उन्नीस नहीं इक्कीस है''।**[1]

अस्मै राष्ट्राय मानवसमष्ट्यैवा विकासाय विशश्च शौद्रश्च कृषकात्मा श्रमिकात्मा च एषा समग्रा प्रजा एव चातुर्वर्ण्येन वर्तनं कुर्वती अस्ति।

अत एव प्रजायामुपस्थिततेजः एव स्तोमानां त्रिवृदस्ति। वीर्यं सामर्थ्यं वा पञ्चदशोऽस्ति। प्रकृष्टेनोत्पादनमेव सप्तदशः। प्रतिष्ठैवैकविंशः।

तत् तस्मात्कारणात् एते चतुर्वर्णाः सम्भूय एनं राष्ट्रं लोकं वा तेजसा, वीर्येण, प्रजात्या, प्रतिष्ठयाऽन्ततः समर्द्धयति। तस्मात् सामूहिकप्रयासात्मकोऽयं ज्योतिष्टोमः सम्पद्यते।

चातुर्वर्ण्येन सम्भूय लोकानां समुन्नत्यै कृतमेतद् सत्कर्म एव चतुष्टोमयागो भवति। एवमुक्तमस्ति ताण्ड्ये—

**''चतुष्टोमो भवति। प्रतिष्ठा वै चतुष्टोमः प्रतिष्ठित्यै।''**[2]

स्पष्टं यत् चातुवर्ण्येन कृतेन सत्कर्मणा एव चतुष्टोमयागो भवति। निश्चयेन चातुर्वर्ण्यकृत्सत्कर्मणा सम्पन्न एष चतुष्टोमयाग एव राष्ट्रस्य प्रतिष्ठास्ति। यतः लोकानां राष्ट्रस्य प्रतिष्ठित्यै एव एषा वर्णव्यवस्था कृता महापुरुषैः।

## वर्णानां सहयोगात्मकं समानताविधायकञ्च रथाश्वरूपकम्

उपर्युक्तचातुवर्ण्येन सम्भूय लोकानां समुन्नत्यै कृतसत्कर्मात्मकचतुष्टोमयागविषये एकं रूपकमस्ति ताण्ड्ये—

**''यद्वै राजानोऽध्वानं धावयन्ति। ये अश्वानां वीर्यवत्तमास्तान्युञ्जन्ते। त्रिवृत्पञ्चदशः सप्तदश एकविंश एते वै स्तोमानां वीर्यवत्तमास्तानेव युङ्क्ते स्वर्गस्य लोकस्य समष्ट्यै।''**[3]

यदिति यदा राजानः राष्ट्रप्रमुखाः वै निश्चयेन अध्वानं मार्गं धावन्ति धावन्क्रियायां स्पर्धयन्ति तदा ते राजानः स्वीये रथे ये अश्वाः अश्वानां वीर्यवत्तमाः अश्वानां मध्ये धावन्सामर्थ्ये श्रेष्ठतमाः अश्वाः भवन्ति तानेव अश्वान् स्वीये रथे युञ्जन्ते युञ्जते। तथैव स्वर्गस्य लोकस्य समष्ट्यै, समग्रवैभवात्मकस्य लोकस्य समष्ट्यै, एतद् समुदायात्मकं स्वराष्ट्रं परं वैभवाय नेतुं श्रेष्ठतमकर्मसम्पादने सक्षमः जनसमुदायः अपेक्षते। श्रुतिः तादृशजनसमुदायं स्वयं निर्दिशति। त्रिवृत् - त्रिवृत्स्तोमात्मकः ब्राह्मणवर्णः ज्ञानात्मकसमुत्कर्षाय सक्षमः समुदायः, पञ्चदशः पञ्चदशस्तोमात्मकः क्षत्रियवर्णः यमनियमसत्यन्यायनिष्ठाप्रभृतिभिः राष्ट्रस्य

1. हिन्दीभाषायां लोकोक्तिः।
2. ताण्ड्य., 6/1/16.
3. ताण्ड्यमहाब्राह्मणम्, 6/4/15.

रक्षणात्मककर्म समुत्कर्षाय रक्षणकर्मणि सक्षमः समुदायः, सप्तदशः सप्तदश-स्तोमात्मकः वैश्यवर्णः उत्पादनोत्कर्षे उत्पादितपदार्थानां संचारोत्कर्षे च सक्षमः समुदायः, एकविंशः एकविंशस्तोमात्मकः शूद्रवर्णः श्रमेण तपसा विविधानां शिल्पानां सम्पादने सक्षमः समुदायः एषः चतुर्वर्णात्मकः मानवकर्मविभागः स्वर्गस्य लोकस्य समष्ट्यै समग्रलोकस्य वैभवात्मकसमुत्कर्षाय स्तोमानां वीर्यवत्तमाः कर्मणामुत्कृष्टतमाः स्तोमाः सन्ति। अतः लोकस्य समष्टेः उत्कर्षाय एतान् वर्णान् लोकरथे राष्ट्ररथे वा युङ्क्ते युञ्जते।

इदमत्रावधेयं यथा रथनयने सर्वेषामश्वानां समानं योगदानं भवति। सर्वे च सहैव मिलित्वा रथं नयन्ति। श्रेष्ठत्वहेयत्वविषयकं पारस्परिकं द्वेषं न कुर्वन्ति, तस्मात् समान-प्रवाहेन रथः चलति। पारस्परिकश्रेष्ठतासम्पादनाय अश्वेषु कलहः भविष्यति चेत्, रथः न चलिष्यति, अपितु विनश्यत्येव। तथैव लोकानां परं वैभवं नेतुं राष्ट्ररथमप्यस्ति। तत्र नियुक्ताः चतुर्वर्णात्मकाः चत्वारः अश्वाः समानाः सन्ति। कस्यापि वर्णस्य कर्ममहत्त्वं न्यूनं नास्ति। स्वे स्वे कर्मणि दत्तचित्ताः, स्वे स्वे कर्मणि सहैव संलग्नाः स्वराष्ट्रं परं वैभवं नेतुं समर्था भवितुं शक्नुवन्ति। विकृतवर्णवादव्याख्यया पारस्परिकश्रेष्ठत्व-यत्वस्थापनात्मककलहेन राष्ट्रमेतद् नश्यति। तादृशी कल्पनापि नासीदृषीणां वेदानां वा। अपितु तैः चतुष्टोमयागात्मकं चातुर्वर्ण्यपक्षिणं पुण्यलोकेषु सं-चरन्तं दृष्टमासीत्।

## चातुर्वर्ण्यसंपादितसत्कर्म एव चतुष्टोमयागात्मकः चातुर्वर्ण्यपक्षी

अहो कियदद्भुतास्ति एषा श्रुतिभावना यत्र चत्वारो वर्णाः चतुष्टोमरूपाः स्व स्व कर्मणा समग्रमानवतायाः उत्कर्षे संलग्नाः सन्ति। तत्र स्वे स्वे कर्मणि संलग्ना एते चत्वारो वर्णाः ज्योतिष्टोमं चतुष्टोमं सम्पादयन्तः समग्रमानवतायाः उपासनायां संलग्नाः भारतात्मराष्ट्रात्म-पक्षीरूपाः सन्ति। एष पक्षी एव उड्डीयमानः पतन् पुण्यमयूलोकेषु लोकोत्कर्षात्मकशिखरेषु संचरति। यथा श्रुतिः वक्ति —

**''पक्षी वा एष स्तोमः।''**[1]

**''न वा अपक्षः पक्षिणमाप्नोति। अथैष पक्षी पक्षिणि निधीयते। तस्मात्पक्षिणः पक्षैः पतन्ति।''**[2]

अर्थात् राष्ट्रं कर्मविभागेन योजनं वर्णव्यवस्थया राष्ट्रात्म-पक्षिणः पक्षैः योजनमस्ति। किमर्थमित्याकाङ्क्षायां वक्ति श्रुतिः **''न अपक्षः पक्षिणमाप्नोति''** अर्थात् कर्मविभागव्यवस्थारहितः जनसमुदायः राष्ट्रं वा, सत्कर्मविभागव्यवस्थायुक्तस्य

---

1. ताण्ड्यमहाब्राह्मणम्, 19/10/1.
2. ताण्डयमहाब्राह्मणम्, 19/10/3.

जनसमुदायस्य राष्ट्रस्य वा वैभवं न हि प्राप्तुं शक्नोति। यथा पक्षी पक्षिणि निधीयते तथैव एषः भारतात्मा पक्षी अपि सत्कर्मविभागात्मकवर्णव्यवस्थारूपपक्षेष्वेव सम्यक्रूपेण स्थितोऽस्ति। तस्मात्कारणात् पक्षीवत् एषः राष्ट्रात्मा पक्षी वर्णव्यवस्थात्मकपक्षैरेव श्रेयः शिखरेषु पतति यथा पक्षिणः पक्षैः पतन्ति। पक्षिणः आकाशे पतन्ति एषः भारतराष्ट्रात्मा पक्षी कुत्र पतति? इत्याकाङ्क्षायां श्रुतिः स्वयं वक्ति—

**"पक्षी ज्योतिष्मान् पुण्यान् लोकान् सञ्चरति।"**[1]

एषः भारतात्मा पक्षीज्योतिष्मान् पुण्यान् लोकान् सञ्चरति। सत्कर्मजन्यवैभवे एव उड्डयते इत्यर्थः। वैदेशिकैः इतिहासकारैरपि एवं स्वर्णपक्षिणमुन्नतिशिखरेषु परंवैभवे पतन् दृष्टमासीत्। अस्य वर्णपक्षिणः वर्णस्तोमात्मकः स्वरूपं किमित्याकाङ्क्षायां श्रुतिः स्वयं वक्ति—

**"त्रिवृत् शिरो भवति।"**[2]

**"अन्नं वा अर्को वा ब्रह्मवर्चसं गायत्र्यन्नाद्यं चैवेभ्यो ब्रह्मवर्चसञ्च मुखतो दधाति।"**[3]

अर्थात् ब्राह्मणवर्णात्मकः त्रिवृत्स्तोम एव अस्य राष्ट्रात्मा पक्षिणः शिरोऽस्ति। यतः अन्नं, जलं, ज्ञानाचरणं, परमात्मनः गायत्र्या सामूहिकप्रार्थना, भोगञ्च, ज्ञानात्मिका तेजस्विता च एषः मुखतो दधाति।

**"पञ्चदशसप्तदशौ पक्षौ भवतः। पक्षाभ्यां वै यजमानो वयो भूत्वा स्वर्गं लोकमेति।"**[4]

अर्थात् क्षत्रियवर्णात्मकः पञ्चदशस्तोमः वैश्यवर्णात्मकः सप्तदशस्तोमश्चास्य पक्षिणः पक्षौ स्तः। यतः समुचितप्रशासनेन सम्यगुत्पादनेन उत्पादनस्य च राष्ट्रव्यापिसमुचितसंचारव्यवस्थयैव वाणिज्यकर्मणैव राष्ट्रः वैभवं प्राप्तुं शक्यते नान्यथा। आभ्यां प्रशासनवाणिज्यपक्षाभ्यां क्षत्रियवैश्यपक्षाभ्यां वा एष राष्ट्रात्मा यजमानः वयो भूत्वा स्वर्गं लोकमेति सत्कर्मकुर्वन्नेव वैभवस्य चरमोत्कर्षं प्राप्नोतीत्यर्थः। श्रुतिः चतुर्थवर्णस्य महत्त्वं दर्शयन् वक्ति—

**"एकविंशः पुच्छं भवति।"**[5]

---

1. ताण्ड्यमहाब्राह्मणम्, 19/10/4.
2. ताण्ड्यमहाब्राह्मणम्, 5/1/2.
3. ताण्ड्यमहाब्राह्मणम्, 5/1/9.
4. ताण्ड्यमहाब्राह्मणम्, 5/1/10.
5. ताण्ड्यमहाब्राह्मणम्, 5/1/16.

**"एकविंशो वै स्तोमानां प्रतिष्ठा, तस्माद्वयः पुच्छेन प्रतिष्ठायोत्पतति, पुच्छेन प्रतिष्ठाय निषीदति।"[1]**

शौद्रवर्णात्मकः एकविंशस्तोम एव भारतराष्ट्रात्मपक्षिणः पुच्छमस्ति। निश्चयेन शौद्रवर्णात्मकः तपात्मकः श्रमात्मकः एकविंशस्तोम एव चतुर्वर्णात्मकचतुष्टोमसत्कर्मस्य प्रतिष्ठा अस्ति। यतः सर्वेषां वर्णानां तप एव श्रम एव आधारभूतोऽस्ति। सर्वे वर्णावलम्बिनः श्रमेणैव स्वे स्वे कर्मणि संलग्नाः भवन्ति। श्रमेणैव स्वकार्यं सम्पाद्य प्रतितिष्ठन्ति। यथा वयः पक्षी पुच्छेनैव प्रतिष्ठाय उड्डयते पुच्छेनैव प्रतिष्ठाय स्थीयते तद्वत् सर्वेषां वर्णानामुपकारकमस्ति श्रमः शिल्पञ्च। अत एव श्रुतिः उक्तवती एष राष्ट्रात्मा पक्षी अपि पुच्छेन प्रतिष्ठायोत्पतति, पुच्छेन प्रतिष्ठाय निषीदति।

**"पक्षि वा एतच्छन्दः, पक्षी ज्योतिष्मान् पुण्यान् लोकान् सञ्चरति। य एवं वेद।"[2]**

निश्चयेन चतुर्वर्णात्मकः चतुष्टोमसत्कर्मरूपः एष पक्षी एव एष वेदः चतुर्वर्णात्मकः, एषः वेदात्मा पक्षी एव ज्योतिर्मयपुण्यान् लोकान् सञ्चरति। अर्थात् ज्ञानात्मक एवास्ति चातुर्वर्ण्यविभागः। ज्ञानेनैव सर्वे वर्णाः स्वे स्वे कर्मणि दक्षतां प्राप्य साफल्यं प्राप्नुवन्ति। ये एतद् रहस्यमेवं विजानन्ति ते एव विजानन्ति वेदरहस्यम्। ते एव सर्वतः एनं वेदात्मानं भारतात्मानं राष्ट्रात्मानं पक्षिणमभिरक्षन्ति।

महात्मनः वैवस्वतमनोः राज्ये पुण्यलोकेषु सञ्चरन्तं दृष्टं महर्षिभिः एनं भारतपक्षिणम्। तदेव श्रुतिरुद्घोषितम् —

**"मनुर्वैवस्वतो राजेत्याह। तस्य मनुष्या विशः।"[3]**

राजा पदेन वैवस्वत मनुरेवोक्तम्। सर्वे मनुष्याः तस्य राज्ञः विशः प्रजाः। सः महात्मा राजा सर्वा एव प्रजाः आत्मतया पालितवान्। अत एव वैवस्वतमनोः मुखादेव मानवसूक्तरूपेण वेदस्य कल्याणी वाणी निःसृता। तदेव श्रुतिः उद्घोषयति —

**मनो ऋचः सामिधेन्यो भवन्ति।**
**मनुर्वै यत्किञ्चावदत्तद्भेषजम्भेषजतायै ॥[4]**

अर्थात् निश्चयेन यत्किमपि मनुः वक्ति तत्सर्वं भेषजतायै भेषजमस्ति। कुत्र वदति मनुः? मनुस्मृतौ वा? मैवमपौरुषेया श्रुतिः स्मृतेः उदाहरणं न ददाति। महाराजा मनुः ऋग्वेदीयमानवसूक्तानां द्रष्टा ऋषिरस्ति। एतदपि भवितुं शक्नोति यत्

1. ताण्ड्यमहाब्राह्मणम्, 5/1/17.
2. ताण्ड्यमहाब्राह्मणम्, 19/11/18.
3. श.ब्रा., 13/4/3/3.
4. ताण्ड्यमहाब्राह्मणम् 23/16/6,7.

मानवसूक्तस्थितमन्त्रानाधारीकृत्य केनापि विदुषा श्लोकात्मकस्मृतिरूपव्याख्यानं कृतं भवेत् मनुस्मृति नाम्ना। किन्तु वर्तमानमनुस्मृतिस्तु दुष्टानां प्रक्षेपितक्षेपकानां संग्रहरूपैव जाता दृश्यते। महाराज्ञः मनोः मानवसूक्तानां व्याख्यानात्मकाः श्लोकाः तद्विपरीतैः दुष्टैः योजितप्रक्षिप्तश्लोकैरावृताः सन्ति। एषां सूक्तानां सम्यगध्ययनेन मननेनानुशीलनेन सुधीजनैः स्मृतिव्याख्यानात् प्रक्षेपनिस्सारणेन समुद्धारोऽपेक्षते। दृष्टान्तार्थं मानवसूक्तस्य मन्त्रद्वयमत्र प्रस्तौमि—

**अस्ति हि वः सजात्यम् रिशादशो देवासोऽस्त्याप्यम् ।**
**प्र णः पूर्वस्मै सुविताय वोचत मक्षू सुम्नाय नव्यसे॥**[1]

अर्थात् रिशादसः दोषान् रोगान् शत्रूञ्च नाशकाः देवासः विद्वान्सः विद्यां कामयमानाः सज्जनाः हि निश्चयेन वः युष्माकं मया सह सजात्यमस्ति सजातीयः सम्बन्धः अस्ति। आप्यम् आप्तुं योग्यं बन्धुत्वमस्ति। पूर्वस्मै सुविताय प्राथम्येन ये श्रेष्ठतमाः ऐश्वर्याः सन्ति तान् प्राप्तये नव्यसे सुम्नाय अतिशयेन नवीनाय सुखाय प्र प्रकृष्टतया प्राप्तये नः वोचत अस्माकं युस्माकं च पारस्परिकसंवादः मक्षू शीघ्रं भवत।

**देवन्देवं वोऽवसे देवन्देवमभिष्टये ।**
**देवन्देवं हुवेम वाजसातये गृणन्तो देव्या धियः॥**[2]

अर्थात् अहं मनुः वः युष्मान् देवन्देवं यः द्योतितुमिच्छति सः देवः सर्वे एव जनाः द्योतितुमिच्छन्ति अतः सर्वे देवाः तत्र देवन्देवं जनं जनं प्रत्येकं जनमवसे रक्षणाय न्यायनीतिचारित्र्यधर्मादिः रक्षणाय हुवेम आह्वयामः। युष्मान् देवन्देवं जनं जनं प्रतिजनमभिष्टये अभीष्टसिद्धये लोकानां हुवेम आह्वयामः। युष्मान् देवन्देवं प्रत्येकं वाजसातये धनप्राप्तये ऐश्वर्यप्राप्तये हुवेम आह्वयामः देव्या धिया देदीप्यमानया प्रज्ञया कर्मणा वा गृणन्तः स्तुवन्तः। दिव्यप्रज्ञया सत्कर्मणां सम्पादनं कुरुथ युष्मान् साफल्यं प्राप्नुथ इत्यभिप्रायः।

अस्माकमृषीणां चतुष्टोमात्मकवेदात्मा राष्ट्रात्मा भारतात्मा चातुर्वर्ण्यपक्षी, यं पक्षिणं ते ऋषयः ज्योतिर्मये पुण्यलोके सञ्चरन्तं दृष्टवन्तः सः पक्षी राक्षससमानसैः दुष्टैः आक्रामकैः पवित्रशास्त्रेषु प्रक्षेपितक्षेपकैः शास्त्रकलेवरे पाषाणात्मकैः क्षेपकैराक्रान्तोऽस्ति, व्रणितोऽस्ति, आहतोऽस्ति। कुत्रचित् तस्य कर्णौ त्रपुजतुभ्यां परिपूरणस्य प्रयासः दृश्यते। कुत्रचिद् जिह्वाछेदस्य। पक्षिणं हननस्यापि प्रयासः न्यूनः नास्ति। कुत्रचिदफ-गानिस्तानपाकिस्तानवंगलादेशरूपेण तस्य पक्षौ लुञ्चितौ कुत्रचिदरुणाचलमणि-पुरमिजोरमरूपेण अस्य पुच्छकर्तनस्यैव प्रयासः दृश्यते। ते तु वैदेशिकाः आक्रामकाः

1. ऋग्वेदः, 8/27/10.
2. ऋग्वेदः, 8/27/13.

राक्षसमानसाः दुष्टाः वैदिकमूलेन भ्रान्ताः सन्ति। अतो तेषामेतादृशः प्रयासः नास्ति विस्मयकारकः। किन्त्वेतदेवाश्चर्यं यत् ये आत्मानमृषीणां वंशजं कथयन्ति, ते एव अद्य तेषां राक्षसमानसानां पंक्तौ स्थिताः पक्षिणं प्रत्याक्रमणाय उद्यताः दृश्यन्ते। भवन्तोऽपि स्वान्तः अवलोकयन्तु। भवतः स्थितिः कीदृशी पक्षिणं प्रत्याक्रमणाय रक्षणाय वा? यदा भवन्तः जागरिष्यन्ति तदा भवति स्वात्मनि ऋषीणां रक्तप्रवाहः संचरमाणाः द्रक्ष्यन्ति। तदाहं घोषयितुं शक्नोमि पुनरेषः पक्षी पूर्णं स्वास्थ्यं प्राप्स्यति। पुनरेषः ज्योतिर्मयेषु पुण्यलोकेषु संचरिष्यति।



चतुर्थोऽध्यायः

# निगमेषु कालतत्त्वविमर्शः

## कालदर्शनम्

कलयति, कलयते, कलते वा इति कालः। कल-गतौ संख्याने च[1] कल क्षेपे,[2] कल आस्वादने,[3] कल शब्दसंख्यानयोः इत्याद्यर्थेषु प्रयुक्त-कलधातोः कर्मणि घञ् प्रत्ययेनादिवृद्धिः, कालप्रतिपदिकात् 'सु'विभक्तौ कालः। कलयति सर्वमिति कालः।

सूर्यः उदयति, ज्योतिः प्रसरति, प्राणिषु चैतन्यमायाति। प्रातः कालः भवति। प्राणिनः स्व-स्वप्रकृत्यनुसारं कर्मणि संलग्नाः भवन्ति। कर्मणि कालः गच्छति, काले कर्म क्रियते कालेनैव गण्यते च। शनैः शनैः कालः गच्छति। शनैः शनैः कालः आयाति। प्रातःकालः, दिवाकालः, सायंकालः, रात्रिकालः। यस्मिन् क्षणे कालावयवेऽस्मि, सः क्षणः याति, सहैव संलग्न एवान्यः क्षण आयाति।[4] सः पूर्वक्षणः गतवान्, एषः वर्तमानक्षणोऽपि याति, तथैव संलग्न एवाग्रिमः क्षणः आयाति। वर्तमानः भूतः भवन्नस्ति, भविष्यः वर्तमानः भवन्नस्ति। वर्तमानः भूते परिवर्त्यते, भविष्यः वर्तमाने परिवर्त्यते। एषः काल एव सर्वं कलयति। कालक्रमेण परिवर्त्यमाना प्रकृतिरेषा चिरनवीना गम्यमाना वर्तते। अस्यां परिवर्त्यमानायां प्रकृतावेव सर्वं कलयन् कालो दृश्यते। कालः तस्य क्रमश्च यथास्ति वेदेषु तथा विमृशामि।

**अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठोऽध्वरेष्वीड्यः।**
**यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशे विशे॥**[5]

इहेति अत्रास्मिन्लोके धातृभिः ज्ञानधारणसामर्थ्यसम्पन्नैः जनैः वननीयेष्वरण्येषु नानाकारेषु प्रसृतेषु दृश्यमानेषु लोकेषु विभ्वं चैतन्यविद्याव्याप्तं चित्रमाश्चर्यगुणयुक्तं नानाविधमद्भुतं विज्ञानं प्रथमः धायि प्राथम्येन धृतं यं तं विज्ञानमप्नवानः व्यवहरन् विद्यासन्तानान्कुर्वन्तः भृगवः विद्ययाविद्यायाः भर्जकाः परिपक्वविज्ञानाः ऋषयः विशे विशे

---

1. चुरादिः 290 उभयपदी
2. चुरादिः 72 उभयपदी
3. चुरादिः 204 उभयपदी
4. भ्वादिः 334 आत्मनेपदी
5. ऋग्वेदः 4/7/1.

प्रजायै प्रजायै विरुरुचुः विशेषेण प्रकाशितवन्तः। अतस्तेऽध्वरेषु सत्कर्मणि ईड्यः पूज्यः होता।

तदेवं निश्चिते कालेऽहोरात्रादारभ्य ऋतुमासवर्षात्मकं प्रकृतौ गम्यमानं परिवर्तनम्। तेनैव क्रमेण तत्रोद्भववस्तूनि जीवेषु ऋतूनां प्राकृतिकः प्रभावः। प्रत्येकं क्रियायां गम्यमानः कालावधिः। क्रमेण प्रत्यहोरात्रीयगम्यमानं तापक्रमपरिवर्तनम् । तथैव क्रमेण रात्रिदिवसयोः पारस्परिकं गम्यमानं न्यूनाधिक्यं तस्मिन् क्रमे एव प्राप्तः समानकालावधियुक्तः दिवसः रात्रिश्च। सूर्यस्य चन्द्रमसश्च प्राच्यां दिशि उदयः पश्चिमदिशि गमनमस्तङ्गता च। सर्वासां ताराणां पूर्वतः पश्चिमगमनम्। उत्तरदिशि ध्रुवतारायाः अपरिवर्तिता स्थितिः। तस्य समीपस्थताराणां तस्यैव परिक्रमणम्। पुनश्च सर्वासां ताराणां तस्यैव परिक्रमायां पूर्वतः पश्चिमदिशि परिक्रमणस्थितिः। आकाशे निश्चितवृत्तीयमार्गे निश्चितनक्षत्राणां स्थितिः। तेषां नक्षत्राणां निश्चितकालान्तराले निश्चित-स्थले दर्शनम्। पार्श्वस्थितनक्षत्रैः निश्चिताकारात्मिका स्थितिः। तीव्रतया चलन्ती नौकायां स्थितौ नद्याः कूलयोः तत्र स्थितवृक्षादीनाञ्च चलनस्य भ्रमः। एतत्सर्वं पश्यन्तः ऋषेः निर्मलान्तःकरणे ऋतम्भराप्रज्ञायांकालचक्रनियामक-मन्त्रावतरणं जातम्।

## कालचक्रज्ञापकमन्त्रः

**द्वादश प्रधयश्चक्रमेकं त्रीणि नभ्यानि क उ तच्चिकेत।**
**तस्मिन्त्साकं त्रिशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः॥**[1]

द्वादशेति मन्त्रस्य दीर्घतमा ऋषिः। संवत्सरात्मा कालः देवता। स्वराड् पंक्तिश्छन्दः। पञ्चमः स्वरः।

अन्वयः — चला, एकम् , चक्रम् , (भावयति)। तस्मिन् (चक्रे) त्रीणि नभ्यानि (सन्ति)। द्वादश प्रधयः (सन्ति)। तस्मिन् साकं, त्रिशता, षष्टिः न (चार्थे नः) शङ्कवः, न (इवार्थे न) अर्पिताः (सन्ति) (तस्मिन् चक्रे कालाः) चलासः (सन्ति)। क, उ, तत्, चिकेत।

चलेति चलन्ती हीयं पृथिवी चला (गच्छन्ती हीयं "ग्मा" पृथिव्याः नाम निघन्टौ) स्वाक्षोपरि चलन्ती भ्रमन्ती अहोरात्राणि कुर्वती स्वाधिपतिं सूर्यं परिक्रमन्ती चलन्ती हीयं पृथिवी एकमद्वितीयं दीर्घतमं चक्रं भावयति। तस्मिन् चक्रे भ्रमन्त्याः परिक्रमन्त्याः पृथिव्याः फलकाश्रितानि त्रीणि नभ्यानि भवन्ति। क्रमशः विषुवफलकाश्रितनाभिः, उत्तराफलकाश्रितनाभिः, दक्षिणफलकाश्रितनाभिश्च। स्वाक्षोपरि पृथिव्याः नतिकारणात्

---

1. ऋग्वेदः 1/164/48.

सूर्यकिरणानां सापेक्षतया फलकत्रयं भवति। विषुवानाभिफलकमुत्तरानाभिफलकं दक्षिणानाभिफलकञ्च। द्वादश प्रधयः सूर्यकेन्द्रात् समानकोणात्मकाः परिधिस्थानीयाः प्रकृष्टाः द्वादश विभागाः दादश मासात्मकाः सन्ति। तस्मिन् चक्रे केन्द्रात् समानकोणात्मकः त्रिशता साकं षष्टिश्च (चार्थे न) शङ्कवः (इवार्थे न) इव अंशात्मकाः विभागाः अर्पिताः सन्ति। $360^0$ अंशात्मकमेव वृत्तं चक्रं भवति। एवं $360^0$ चक्रस्य द्वादशविभागे कृते सति प्रतिविभागं त्रिंशदंशात्मकं भवति। अर्थात् सूर्यस्य परिक्रमायां रता पृथिवी यदा नृत्यन्ती चलन्ती त्रिंशदंशात्मकं परिक्रमामार्गं पूरयति तदा एकः मासः भवति-एवमेव द्वादशविभागात्मकाः द्वादशमासाः भवन्ति। यथा निरुक्ते—

**"द्वादश प्रधयश्चक्रमेकमिति मासानां मासा मानात्।"**[1]

तस्मिन् कालचक्रे एवं प्रकारेण क्षणं प्रतिक्षणमहोरात्र-मास-ऋतु-वर्षरूपाः कालावयवाः चलासः सन्ति। क उ कश्चित् प्रसिद्ध विद्वानेव तत् कालचक्रं चिकेत जानाति।

## पृथिव्याः घूर्णनम्

अस्य मन्त्रस्यायमेवार्थः ऐतरेयव्याख्यानात् स्पष्टी भवति। तदेवम् —

**स वा एष न कदाचनास्तमेति नोदेति। तं यदस्तमेतीति मन्यन्तेऽह्न एव तदन्तमित्वाथात्मानं विपर्यस्यते। रात्रीमेवावस्तात् कुरुतेऽहः परस्तात्।**

**अथ यदेनं प्रातरुदेतीति मन्यन्ते रात्रेरेव तदन्तमित्वाथात्मानं विपर्यस्यतेऽहरेवावस्तात् कुरुते रात्रिं परस्तात्। स वा एष न कदाचन निम्नोचति। न ह वै कदाचन निम्नोचति। एतस्य ह सायुज्यं सरूपतां स लोकतामश्नुते य एवं वेद य एवं वेद।**[2]

सूर्योदयास्तविषये तत्त्वं ज्ञापयन्ती श्रुतिः वक्ति वै निश्चयेन स एषः सूर्यः न कदाचन कदापि अस्तमेति अस्तङ्गतो भवति नोदेति न च-उदितो भवति। प्रकाशरूपः सदैव विद्यते एवेत्यर्थः। तं सूर्यं यद् यदा लोका अस्तमेति अस्तङ्गतो भवतीति मन्यन्ते जानन्ति तद् तदा पृथिव्याः दैनिकस्वाक्षीयगतिकारणतः अह्नः दिवसस्य प्रातःकालादारभ्य प्रातर्स्थानीयः लोकः पृथिव्याः स्थलविशेषस्थः इत्वा स्वाधारस्थलेन गत्वा सूर्यस्य दृश्यमानगतिदिशातः विपरीतदिशायां भ्रमन् सूर्यस्य दर्शनकालादारभ्य अन्तं दिवसान्तं यावत् गत्वा आत्मानं विपर्यस्यते प्रातःकालीनदिशातः विपरीतदिशायां कुरुते प्राप्नोति। एवमेषः लोकः रात्रिमेव निशामेव अवस्तात् अधः स्थितां समीपस्थां कुरुते, रात्रिमेव प्राप्नोति इत्यर्थः दिवसः परस्तात् परस्मिन् देशे कुरुते।

1. निरुक्तम् 4/27.
2. ऐत.ब्रा. 14/6.

अथ यद् यदा एनं सूर्यं प्रातः प्रभातवेलायामुदेति उदितो भवति इति मन्यन्ते विजानन्ति। तद् तदा रात्रेः प्रारम्भकालादारभ्य रात्रेरन्तकालपर्यन्तं तत्स्थानीयः लोकः इत्वा स्वाधारस्थलेन भ्रमन् गत्वा अथ क्रमान्तर्येण आत्मानं विपर्यस्यते रात्र्यारम्भकालीनदिशातः विपरीतदिशायां प्राप्नोति। एवमेषः लोकः अहरेव दिवसः एव अवस्तात् अधःस्थितं समीपस्थं कुरुते। दिवसमेव प्राप्नोतीत्यर्थः। रात्रिं परस्तात् परस्मिन् देशे विपरीतदेशे वा कुरुते।

स वा एषः सूर्यः न कदाचन कदापि निम्नोचति अधः गच्छति अस्तङ्गतो भवति वा। द्विरुक्तिः दार्ढ्याय।

अमुमेव विषयं गोपथश्रुतिरपि वक्ति सूर्योदयास्तभ्रमनिवारणाय —

**स वा एष न कदाचनास्तमयति नोदयति। तद्यदेनं पश्चादस्तमयतीति मन्यन्ते, अह्न एव तदन्तं गत्वाथात्मानं विपर्यस्यतेऽहरेवाधस्तात् कृणुते रात्रीं परस्तात्। स वा एष न कदाचनास्तमयति नोदयति।**

**तद्यदेनं पुरस्तादुदयतीति मन्यन्ते, रात्रेरेव तदन्तं गत्वाथात्मानं विपर्यस्यते रात्रिमेवाधस्तात् कृणुतेऽहः परस्तात्। स वा एष न कदाचनास्तमयति नोदयति न ह वै कदाचन निम्लोचति। एतस्य ह सायुज्यं सलोकतामश्नुते, य एवं वेद।''**[1]

पूर्वश्रुतिव्याख्यानवत् स्पष्टमतो न पुनर्व्याख्येयम्। सूर्यः विराजति सत्। इत्येवार्थमार्यभटोऽब्रवीत्।

**उदयो यो लङ्कायां सोऽस्तमयः सवितुरेव सिद्धपुरे।**
**मध्याह्नो यवकोट्यां लोमकविषयेऽर्धरात्रं स्यात्॥**[2]

अर्थः - यः समयः दक्षिणस्यां दिशि लङ्कायां सवितुः सूर्यस्य उदयः दृश्यते स एव समयः सिद्धपुरसंज्ञके उदीच्यां दिशि सूर्यास्तमयः, तदेव च प्राच्यां दिशि यवकोटिसंज्ञपुर्यां मध्यंदिन इति, तदेव च प्रतीच्यां लोमकराष्ट्रेऽर्धरात्रमिति। अतः सूर्यो महादीप्तिः सदैव खलु वर्तते।

स्वाक्षोपरि पृथिव्याः घूर्णनात् पृथिव्याः यो भागः सूर्यस्य सम्मुखं यथाक्रमेणायाति तेनैवक्रमेण तस्मिन् भागे क्रमशः प्रात आरभ्य दिवसः भवति, चलन्नेव सायं प्राप्नोति तथैव तत्स्थलं घूर्णन् सूर्यं पृष्ठे कुर्वन् सायंकालादारभ्य रात्रिं करोति, तथैव समानगत्या नैरन्तर्येण भ्रमन् रात्रिं यापयन् सूर्यस्य सम्मुखतां प्राप्नुवन् पुनः प्रभातकालं प्राप्नोति।

---

1. गोपथब्राह्मणे उत्तरभागे चतुर्थप्रपाठके दशमीकाण्डिकायाम्
2. आर्यभटीयम्, गोलपादः 13.

पुनः तत्स्थानीयाः जनाः सूर्यं पश्यन्तः सूर्योदयः भवतीति वदन्ति किन्तु मूलतः सूर्यदर्शनं भवति न तु सूर्योदयदर्शनम्। तथैव भ्रमन्तः सूर्यंपृष्ठे कुर्वन्तः स्थलेन सूर्यदर्शनाभावं प्राप्नुवन्तः सूर्यास्तः भवतीति कथयन्ति। किन्तु मूलतः स्थलेनावरणात् सूर्यदर्शनाभावं प्राप्नोति तदेव सायंकालः न तु सूर्यास्तः। सूर्यस्तु महादीप्तिः सदैव खलु वर्तते।

## उत्तरावर्त्तदक्षिणावर्त्तसहविषुववर्णनम्

संवत्सरकालचक्रे मासनिर्धारणप्रकारं श्रुतिः वक्ति शतपथे—

**"तदाहुर्य्यद् द्वादशमासाः संवत्सरस्य। अथैतदहरत्येति यत् वैषुवतम्। अवरेषामेता 3 त् परेषा 3 मिति। अवरेषाञ्चैव परेषाञ्चेति ह ब्रूयात्। आत्मा वै संवत्सरस्य विषुवानङ्गानि मासाः। यत्र वा आत्मा तदङ्गानि। यत्रो अङ्गानि तदात्मा। न वा आत्मा अङ्गान्यतिरिच्यते। नात्मानमङ्गान्यतिरिच्यन्ते। एवमुहैतद् अवरेषाञ्चैव परेषाञ्च भवति।"**[1]

किञ्चिद् परिवर्तनेन श्रुतिरेषा गोपथेऽपि —

**"तदाहुर्यद् द्वादशमासाः संवत्सरः। अथ हैतदहरवाप्नुयामेति यद्वैषुवतम्। अपरेषां स्विदितमह्नां परेषामिति। अपरेषाञ्चैव परेषाञ्चेति ब्रूयाद्। आत्मा वै संवत्सरस्य विषुवानङ्गानि मासाः। यत्र वा आत्मा तदङ्गानि यत्राङ्गानि तदात्मा। न वा आत्माऽङ्गान्यतिरिच्यते नोऽङ्गान्यात्मानमतिरिच्यन्त इति। एवमु हैव तदपरेषां स्विदितमह्नां परेषामित्यपरेषाञ्चैव परेषाञ्चेति ब्रूयात्स वा एष संवत्सरः।"**[2]

अर्थस्तु तदिति तत् संवत्सरकालचक्रमाहुः कथयन्ति। यद् संवत्सरस्य द्वादशमासाः भवन्ति, द्वादशमासात्मकः संवत्सरो वा। अथ पृथिव्याः घूर्णने परिक्रमणे च गतिमत्कालचक्रस्य ज्ञानानन्तरं ह निश्चयेन एतद्वैषुवतमहः अयं समरात्रिन्दिवकालात्मकं वैषुवतमहः[3] अहोरात्रमवाप्नुयाम प्राप्नुयाम। यत् यः अत्येति सर्वत्र रात्रिदिवसयोः समानमानत्वात् यः अन्यदिवसान् अतिक्रामति स्वात्मानं श्रेष्ठत्वेन स्थापयतीत्यर्थः। अवरेषामेता3त् परेषा3मिति, न वरः इति अवरः कालावधौ लघुः तेषां कालावधौ लघु-दिवसानामेतात् एति प्राप्नोति यं स एतः तस्मात्, क्रमेणवर्द्धनद्योतनायप्लुतत्त्वं, परेषां दिवसात् परे रात्रिः तेभ्यः दिवसेभ्यः परेषां याः रात्र्यः दिवसापेक्षया कालावधौ दीर्घाः

1. श.ब्रा. 12/2/3/6.
2. गो.ब्रा.पूर्व. 4/19.
3. " समरात्रिन्दिवे काले विषुवद्विषुवं च तत्" अमरकोषः 1/4/14.
विषुसाम्येऽव्ययम् ततो "तदस्यास्त्यस्मिन्निति मतुप्" इत्यनेन सूत्रेण मतुप्, 'संज्ञायाम्' इत्यनेन सूत्रेण वत्वम्। व प्रकरणे अन्यत्रापि इत्युक्तेर्वः तेन विषुवम्। विषुवे भवमहः वैषुवमहः।

ताः रात्रितः क्रमेण कालावधिं प्राप्नुवन् प्रतिदिवसं शनैः शनैः वृद्धिं प्राप्नुवन् तेनैव क्रमेण रात्रेः कालावधिः लघुतां प्राप्नुवन्ती समरात्रिंदिवकालात्मकः वैषुवतमहोरात्रं विषुवनाभिं प्राप्नोति। अर्थात् स्वाक्षोपरि घूर्णन्ती सूर्यं परिक्रमन्ती एषा पृथिवी स्वाक्षोपरि $23^0$ अंश $28'$ कलात्मकनतिकारणात्, प्रतिरात्रिदिवसयोर्मध्ये कालावधिविषयकं क्रमिकान्तरं कुर्वती पृथिवी, रात्रिमानात् नियमितकालावधिं दिवसमाने योजयन्ती, रात्रिदिवसयोः समानमानात्मक-महोरत्रं प्राप्नोति। एषा पृथिवी सूर्यं परिक्रमन्ती यत् दीर्घतमं परिक्रमणमार्गात्मकं कालचक्रं निर्माति, तस्मिन् परिक्रमणपरिधौ विषुवदिवसनियामक-विषुवविन्दुतः सूर्यकेन्द्रात् त्रिंशदंशात्मकमार्गगमनकालिकावधिः मासावधिः भवति। तथैव च रात्रिदिवसयोः समानमानात्मकविषुवदिवसात् क्रमशः दिवसं वर्धयन्ती रात्रिञ्च लघुकुर्वती $90^0$ मितं मार्गं यात्वा उत्तरनाभिं प्राप्य पृथिवी स्वोत्तरार्धे वृद्धतमं दिवसं लघुतमां च रात्रिङ्करोति, तद्विपरीतञ्च दक्षिणार्धे। पुनः अग्रे गच्छन्ती दिवसकालमुत्तरार्धे क्रमशः न्यूनं कुर्वती तच्च कालं संलग्नरात्रौ योजयन्ती प्रतिमासं त्रिंशदंशात्मकं मार्गं गच्छन्ती विषुवदिवसात् षड्मासानन्तरमशीत्युत्तरशतमंशात्मकम् 180 मितं मार्गं यात्वा रात्रिदिवसयोः समानमानात्मकं द्वितीयविषुवदिवसं प्राप्नोति। तदेव वदति श्रुतिः **''अवरेषाञ्चैव परेषाञ्चेति ह ब्रूयात्।''** अर्थात् वृद्धदिवसात् दिवसन्यूनीकरणेन रात्रिवर्द्धनेन समरात्रिदिवसकालात्मकं द्वितीयं विषुवमहोरात्रं प्राप्नोति। ततश्चापि नैरन्तर्येण विषुवदिवसनियामकविषुवविन्दुतः अग्रे चलन्ती हीयं पृथिवी दिवसं न्यूनं कुर्वती रात्रिं वर्द्धयन्ती उत्तरार्धे, तद्विपरीतञ्च दक्षिणार्धे दिवसं वर्धयन्ती रात्रिं न्यूनं कुर्वती दक्षिणनाभिं प्राप्नोति। तदा उत्तरार्धे वृद्धिमती रात्रिः लघुतमश्चदिवसः भवति तद्वैपरीत्येन दक्षिणार्धे वृद्धतमः दिवसः लघुतमा च रात्रिः भवति।

एतमेव विषयं स्पष्टार्थं गोपथश्रुतिः वक्ति। **''अपरेषां स्विदितमह्नां परेषामिति, अपरेषाञ्चैव परेषाञ्चेति ब्रूयात्।''** अर्थात् यदा उत्तरार्धे दिवसवर्द्धनावस्थायां रात्रेः स्विदितं च्युतं कालं दिवसे आयाति तस्मिन्नेव समये तेनैवप्रकारेण दक्षिणार्थे रात्रिवर्द्धनप्रक्रियायां तावदेव दिवसस्य स्विदितं च्युतं न्यूनतां प्राप्तकालः रात्रौ संयुज्यते, एवं प्रकारेण क्रमशः न्यूनं वृद्धिं प्राप्नुवत् वृद्धञ्च न्यूनतां प्राप्नुवद् समानमानात्मकं वैषुवतमहोरात्रं भवति। तच्च संवत्सरकालचक्रे अशीत्यधिकशतमंशात्मकसरलकोणात्मकस्थितौ परिक्रमणमार्गे भवति। अर्थात् स्वाक्षोपरिनतिस्थितावेव घूर्णन्त्याः सूर्यं परिक्रमन्त्याश्च पृथिव्याः परिक्रमणमार्गोद्भूतसंवत्सरकालचक्रे पृथिव्याः स्वाभाविकगत्यागत-विषुवविन्दुद्वय-मेलनात्मककाल्पनिकरेखा संवत्सरकालचक्रस्य व्यासरूपाऽस्ति। $360^0$ षष्ट्यधिकत्रिशत-मंशात्मककालचक्रस्य द्वादशविभागाः $360^0/12 = 30^0$ त्रिंशदंशात्मकाः भवन्ति। विषुवतः प्रतित्रिंशदंशात्मकाः द्वादशविभागाः एव मधुमासादि द्वादशवैदिकमासाः। अर्थात् एतत्त्रिंशदंशात्मकपरिक्रमणमार्गे चलन्ती पृथिवीयमहोरात्रात्मकमहोरात्रभागात्मकञ्च समयं नयति तदेव मासावधिः। एवं संवत्सरकालचक्रस्य प्रथमविषुवतः द्वितीयविषुवपर्यन्तं

त्रिंशदंशात्मकाः षड्विभागाः षड्मासरूपाः भवन्ति। पुनश्च तस्मिन्नेव चक्रे द्वितीयविषुवतः प्रथमविषुवपर्यन्तं त्रिंशदंशात्मकाः षड्विभागाः षड्मासरूपाः भवन्ति एवं प्रकारेण द्वादशविभागेन द्वादश मासात्मकः संवत्सरकालचक्रं स्वगत्या पृथिवी निर्माति। तत्र च विषुवतः एव मासानां विभागः अतः श्रुतिः वक्ति —

**"आत्मा वै संवत्सरस्य विषुवानङ्गानि[1] मासाः। यत्र वा आत्मा तदङ्गानि यत्राङ्गानि तदात्मा। न वा आत्माऽङ्गान्यतिरिच्यते, नात्मानमङ्गान्यतिरिच्यन्ते। एवमु हैव तदपरेषां स्विदितमह्नां परेषामित्यपरेषांञ्चैव परेषाञ्चेति ब्रूयात्स वा एष संवत्सरः।[2]"** स्पष्टतरत्वात् न व्याख्येयम्।

पुनश्च उत्तरावर्तदक्षिणावर्तविषयं स्पष्टीकरणाय तत्र च विषुवतः महत्त्व- प्रदर्शनाय महासुपर्णरूपेण संवत्सरकालचक्रं वर्णयति श्रुतिः शतपथे —

**"अथ ह वा महासुपर्ण एव यत् संवत्सरः। तस्य यान् पुरस्ताद्विषुवतः षण्मासानुपयन्ति सोऽन्यतरः पक्षः। अथ यान्षडुपरिष्टात्सोऽन्यतरः। आत्मा विषुवान्। यत्र वा आत्मा तत्पक्षौ यत्र वा पक्षौ तदात्मा। न वा आत्मा पक्षावतिरिच्यते नात्मानम्पक्षावतिरिच्येते। एवमु हैतदवरेषाञ्चैव परेषाञ्च भवति।"[3]**

किञ्चिद् परिवर्तनेन एषा एव श्रुतिः गोपथेऽपि —

**"अथ हैष महासुपर्णस्तस्य यान् पुरस्ताद्विषुवतः षण्मासानुपयन्ति स दक्षिणः पक्षः। अथ यानावृत्तानुपरिष्टात् षडुपयन्ति स उत्तरः पक्षः। आत्मा वै संवत्सरस्य विषुवानङ्गानि पक्षौ। यत्र वा आत्मा तत्पक्षौ यत्र वै पक्षौ तदात्मा। न वा आत्मा पक्षावतिरिच्यते नो पक्षावात्मानमतिरिच्येते। इत्येवमु हैव तदपरेषां स्विदितमह्नां परेषामित्यपरेषाञ्चैव परेषाञ्चेति ब्रूयात्। स वा एष संवत्सरः।"[4]**

अत्रायमर्थः अथ पूर्वज्ञापितकालचक्रं पश्यन्तं प्रति अथेति मङ्गलपदेन श्रुतिः वक्ति यत् पृथिव्याः घूर्णने परिक्रमणे च महान्तरिक्षे उड्डीयमानः एषः संवत्सरकालचक्रं महासुपर्णरूप एव विशालतमगरुडवदित्यर्थः, अस्य संवत्सरकालचक्रात्मकमहासुपर्णस्य यान् पुरस्तात् विषुवतः प्रथमविषुवप्राप्तिपूर्वतः अर्थात् द्वितीयविषुवतः प्रथमविषुवपर्यन्तम् यान् षण्मासानुपयन्ति प्राप्नुवन्ति ते संयुक्तरूपेण गरुडस्यास्य दक्षिणः पक्षः। अथ यान्

---

1. "विषुवान् समरात्रिवासरः" अमर कोषः 1/4/14.
   विषुवत् शब्द एव पुल्लिङ्गे विषुवान् भवति।
2. गो.ब्रा.पूर्व. 4/19.
3. श.ब्रा. 12/2/3/7.
4. गो.ब्रा.पूर्व. 4/18.

आवृत्तान् आ समन्तात् शिष्टार्धवृत्ताकारे स्थितान् उपरिष्टात् उत्तरगोलार्द्धभागात् षडुपयन्ति षड्मासाः प्राप्नुवन्ति ते महागरुडस्यास्य उत्तरः पक्षः। एवं विषुवतः विषुवपर्यन्ता काल्पनिकऋजुरेखा यास्य संवत्सरकालचक्रस्य व्यासात्मिका सा रेखा एवास्य महासुपर्णस्य रीढरज्जुः प्रथमविषुवानेव मुखं तथैव संवत्सरकालचक्रस्य मध्यात्मकः द्वितीयविषुवानस्य मध्यसंचरितप्राणात्मकः पुच्छात्मकश्चास्ति। तदेव वक्ति श्रुतिः **''आत्मा वै संवत्सरस्य विषुवानङ्गानि पक्षौ''** विषुवतः एव मासानां विभागव्यवस्थापनात् उत्तरावर्त्तदक्षिणावर्तौ पक्षौ तदेव शतपथे संवत्सरकालचक्रस्यात्मा विषुवानित्युक्तम्। वै निश्चयेन यत्र आत्मा भवति तत्रैव पक्षौ भवतः यत्र च पक्षौ भवतः तत्रैवात्मा भवति। वै निश्चयेन न कदापि आत्मा शरीरं पक्षावतिक्रम्य गच्छति न च पक्षौ आत्मानं शरीमतिक्रम्य गच्छतः। एवं प्रकारेण हैव निश्चयेनैव स्वाक्षोपरिनतिस्थितावेव घूर्णन्ती सूर्यं परिक्रमन्ती च पृथिवी एकस्मिन् पक्षावर्ते रात्रेः च्युतांशकालेन दिवसं वर्द्धयन्ती तस्मिन्नेव समये चान्यस्मिन् पक्षावर्ते दिवसस्य च्युतांशकालेन रात्रिं वर्द्धयन्ती द्वादशमासान् निर्माति षड्मासात्मकैश्च दक्षिणावर्तोत्तरावर्तपक्षौ निर्माति। तथैव च परिक्रमणचक्रं लम्बवृत्तरूपत्वाच्च दक्षिणपक्षात् च्युतकालांशः उत्तरपक्षे संयुज्यते। उत्तरपक्षे वर्द्धितः कालांशो वा दक्षिणपक्षतः एवायाति। स वा एष संवत्सरकालचक्रं महासुपर्ण इति।

विषुवन्तं संवत्सरस्य प्रारम्भरूपेण मध्यात्मकेन च पश्यन्ती ऐतरेयश्रुतिः संवत्सरं पुरुषरूपेण ज्ञापयति—

**''यथा वै पुरुष एवं विषुवान् । तस्य यथादक्षिणोऽर्ध एवं पूर्वोऽर्ध विषुवतो यथोत्तरोऽर्ध एवमुत्तरोऽर्धो विषुवतस्तस्मादुत्तर इत्याचक्षते। प्रबाहुक्सतः शिर एव विषुवान् । बिदलसंहित इव वै पुरुषस्तद्धापि स्यूमेव मध्ये शीर्ष्णो विज्ञायते।**

**तदाहुर्विषुवस्यैवैतदहः शंसेद्विषुवान् वा एतदुक्थानामुक्थं विषुवान् विषुवानिति ह विषुवन्तो भवन्ति श्रेष्ठतामश्नुवत इति। तत्तन्नादृत्यं संवत्सर एव शंसेद्रेतो वा एतत्संवत्सरं दधतो यन्ति।''**[1]

तत्रैव अग्रे चापि —

**''संवत्सरो ह्येतदहराप्नोति संवत्सरं ह्येतदहराप्नुवन्त्येष ह वै संवत्सरेण पाप्मानमपहतः एष विषुवताङ्गेभ्यो हैव मासैः पाप्मानमपहते शीर्ष्णो विषुवता। अप संवत्सरेण पाप्मानं हतेऽप विषुवता य एवं वेद।''**[2]

---

1. ऐ.ब्रा. 18/8.
2. ऐ.ब्रा. 18/8.

अत्रायं भावार्थः यथा पुरुषः दक्षिणार्द्धाङ्गेनोत्तरार्धाङ्गेन च मध्यतः संयुक्तं भवति। तस्य मध्यभागे अर्द्धाङ्गद्वयसंहितात्मकः मध्यस्थः शिरः भवति। एष शिरः एवाङ्गद्वयस्यावबोधकः भवति। तथैव प्रथमविषुवदिवसः संवत्सरचक्रस्य शिरोऽस्ति मध्यस्थस्य विषुवान् - उत्तरावर्तदक्षिणावर्तसंवत्सराङ्गं योजयति। पुरुषस्य शरीरे यथा शिरसः स्थानमुत्कृष्टमस्ति तथैव संवत्सरकालचक्रे विषुवतः स्थानमुत्कृष्टतमस्ति। विषुवतः एवं मासानां विभागात् - उत्तरावर्त्तदक्षिणावर्तपक्षयोः विभागाच्च संवत्सरात्मकपुरुषस्य शिर एव विषुवान्। अत्र श्रुतिः विविधप्रकारेण संवत्सरकालयक्रे विषुवतः महत्वं दर्शितवती। प्रथमविषुवदिनादेव संवत्रारम्भः भवति, द्वितीयविषुवदिनमेव संवत्रकालचक्रस्य मध्योऽस्ति ततः षमासानन्तरं पुनरागतविषुवानेव संवत्सरस्य पूर्णतास्ति। तत एव पुनः नवसंवत्सरारम्भः।

ऋग्वेदः एतत्संवत्सरमासविज्ञानमुद्घाटयति—

**"वेदा यो वीनां पदमन्तरिक्षेण पतताम्। वेदनावः समुद्रियः वेदमासो धृतव्रतः द्वादश प्रजावतः। वेदा य उपजायते॥[1]"**

अत्रायं भावार्थः यः कश्चिदन्तरिक्षे पततां पक्षिणां मार्गं विजानाति समुद्रे गच्छन्तीं नौकायाः स्थितिं तस्याः मार्गञ्च विजानाति। महासमुद्रे यस्मिन् स्थानात् नौका चलति सा चलन्ती वृत्ताकारं समग्रां पृथिवीं परिक्रम्य पुनः तस्मिन्नेव स्थानं प्राप्नोति। एतादृशरहस्यविद् कश्चिद् विद्वानेव स्वाक्षोपरिभ्रमन्त्याः अहोरात्राणि कुर्वत्याः महासुपर्णवत् सूंर्य परिक्रमन्त्याः विनतापृथिव्याः भ्रमणेन परिक्रमेणन च समुद्भूताः धृतव्रताः नियमबद्धाः आर्तवाः द्वादश मासाः प्रजावतः प्रकृष्टेन पृथिव्यां सर्वं जनयन्तः वेद विजानाति। यं विशिष्टं दिवसं संवत्सरेषु पूर्णाहोरात्रादधिककालयोजनविज्ञानेन प्राप्नोति तमपि विजानाति।

## विषुवतः संवत्सरारम्भः द्वादशमासाः षड्तवश्च

### 1. वसन्तर्तुः

स्वाक्षोपरिनृत्यन्ती पतिं सूर्यं परिक्रमन्ती एषा विनता धरणी एव विषुवन्तमहोरात्रं प्राप्य पत्युः सूर्यस्य तेजसा स्वप्रकृतिमुल्लसन्ती पुरातनं त्यक्त्वा नवकिसलयैः नव नव कुसुमैः नव नवाकृतिभिः भूषिता सज्जिता च मधूकपुष्पैः मधुमासेन मधुरसभरिता नवसंवत्सरारम्भङ्करोति। तदेव गायन्ती वर्तते एषा वेदवाणी ऋषेः निर्मर्लान्तः करणे प्रकासिता मुखात् प्रस्फुटिता च।

**मधुवाता ऋतायते मधुक्षरन्ति सिन्धवः। माध्वीर्न सन्त्वोषधीः॥1॥**
**मधुनक्तमुतोषसो 'मधुमत्पार्थिवं रजः। मधु द्यौरस्तु नः पिता॥2॥**
**मधुमान्नो वनस्पतिर्मधुमाँ2ऽअस्तु सूर्य्यः। माध्वीर्गावो भवन्तु नः॥3॥[2]**

---

1. ऋग्वेदः 1/25/7-8.
2. ऋग्वेदः 1/90/6-9, यजुर्वेदः मा.सं. 13/27-29, तै.सं. 4/2/9/3 तै. आ. 10/10/2, श.ब्रा. 14/9/3/11.

धरण्याः प्रकृतावत्र नववत्सरारम्भे विषुवतः प्रारब्धे मधुमासे मधुवाताः आनन्दात्मककोमलशीतलसुखदस्पर्शेन मधुमन्तः वान्तः वाताः विविधानन्दात्मकः वायुः ऋतायते ऋतस्य चिन्मयशाश्वतसत्यस्य यत्स्वाभाविकमाह्लादमयमानन्दात्मकं मधुतमं माधुर्यं तस्य साम्यमिवाचरति। 'ऋत' प्रातिपादिकादुपमानादाचारेऽर्थे कर्मणि क्यच् प्रत्ययः।[1] निघण्टौ ऋतं सत्यनाम।[2] सिन्धवः स्यन्दमानाः नद्याः सागराश्च वाष्पी भूत्वा वायुं सम्मिल्य मधु क्षरन्ति मधुरसं स्रवन्तीत्यर्थः। हे परमात्मन् ! जलवायुभ्यां पुष्टाः ओषधीः नः अस्मभ्यं माध्वीः सन्तु।

नक्तम् रात्रिः मधु मधुमयी जाता। अयमुषसः प्रारब्धः दिवसः मधुमत् मधुमयमस्ति। किमधिकं पार्थिवं रजः धूलिकणमपि मधुमत् जातमस्ति। नः अस्माकं पिता! पालकप्रकाशरूपपरमपिता परमात्मन्! द्यौः भवतः द्युतिमान् व्यापक-स्वरूपः नः अस्मभ्यं मधु अस्तु।

नः अस्मभ्यं वनस्पतिः औषधिः मधुमानस्तु सूर्यः मधुमानस्तु हे परमात्मन्! नः अस्माकं गावः माध्वीः सन्तु, अर्थात् स्वास्थ्यसम्पनाः अस्माकं गावः दुग्धदधिघृतामिक्षाप्रभृतीनि गव्यानि ददती भवन्तु।

एवं विषुवतः वसन्तर्तोः मधुमासस्य चारम्भः भवति। अतो वक्ति श्रुतिः —

**"यदेव पुरस्ताद् वाति तद् वसन्तस्य रूपम्"।**[3]

**"मुखं वा एतदृतूनां यद्वसन्तः।"**[4]

**"तस्य (संवत्सरस्य) वसन्तः शिरः।"**[5]

**"वसन्तः समिद्धोऽन्यान् ऋतून् समिद्धे।"**[6]

ऐतरेयश्रुत्या यथा प्रकाशितं यत् संवत्सरस्य **"प्रबाहुक्सतः शिर एव विषुवान्।"**[7] अत्र च श्रुतिः वक्ति तस्य संवत्सरस्य वसन्तः शिरोऽस्ति। अनयोः श्रुत्योः स्पष्टं यत् विषुवदिवसात् वसन्तर्तोः मधुमासस्य संवत्सरस्य चारम्भः भवति। तत्र च

1. पा.आ. 3/1/10.
2. निघन्टुः 3/10.
3. श.ब्रा. 2/2/3/4.
4. तै. 1/1/2/6.
5. तै. 3/11/10.
6. श.ब्रा.
7. ऐ.ब्रा. 18/8.

क्रमशः अहोरात्रपरिवर्तनेन मासपरिवर्तनं ऋतुपरिवर्तनं यथा भवति तथा स्वयमेव वक्ति भगवान् वेदः —

**"मधुश्च माधवश्च वासन्तिकावृतू अग्नेरन्तः श्लेषोऽसि कल्पेतां द्यावापृथिवी कल्पन्ताम् आप ओषधयः कल्पन्ताम् अग्नयः पृथङ्मम ज्येष्ठ्याय सव्रताः। ये अग्नयः समनसो द्यावापृथिवी इमे वासन्तिकावृतू अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु तया देवतयाऽङ्गिरस्वद् ध्रुवे सीदतम्।"**[1]

व्याख्या — अग्नेरन्तः श्लेषोऽसि। अग्नेः प्रत्यहोरात्रान्तर्वर्तिऋतुनियामक परिवर्तमानोष्णतायाः यदन्तः श्लेषः औष्ण्यपरिवर्तकं रहस्यमस्ति। स्वाक्षोपरिविनताघूर्णन्ती, अहोरात्रं कुर्वती, सूर्यं परिक्रमन्ती हे गतिमति! ग्मे! धरित्रि! मातः! तत्त्वमसि।

मधुश्च माधवश्च मधुमाधवौ मासौ वासन्तिकावृतू वसन्तर्तोः अङ्गभूतावयवौ द्यावापृथिवी द्यौश्च पृथिवी च तौ। द्यौः नित्यप्रकाशमानः सूर्यः पृथिवी च प्रत्यहोरात्रमनेन परिवर्तमानेन क्रमिकौष्ण्येन वसन्तर्तोः अङ्गभूतौ वसन्तावयवौ मधुमाधवौमासौ वासन्तिकावृतू कल्पेतां सम्पादयताम्।

सव्रताः समानं व्रतं कर्म येषां ते प्रत्यहोरात्रान्तवर्तिनः पृथगौष्ण्यसम्पादका अग्नयः मम कृषिप्रभृतिसत्कर्मसंलग्नस्य जनस्य ज्यैष्ठ्याय उत्कर्षाय आपः आर्तवानि जलानि जलवायवश्च तैः ओषधयः वासन्तिकाः वनस्पतयः धान्यानि च कल्पन्तां संम्पादयन्तु। इमे द्यावापृथिवी निर्मिताः ये समनसोऽन्तराः परिवर्तनसातत्यव्यवस्थितान्तराः अग्नयः ते मधुमाधवौ वासन्तिकावृतू अभिकल्पमानाः सर्वतः सम्पादयन्तः सन्तः संविशन्तु एतत्कर्माश्रयन्तु। यथा देवाः इन्द्रियाणि इन्द्रमात्मानम् - अङ्गिरस्वद् योऽङ्गानां रसः प्राणः तद्वदङ्गाङ्गीवाचरन्ति तथैव तया पृथिव्या देवतया सम्पादितं प्रत्यहोरात्रं परिवर्तिता अग्नयः अहोरात्रान्तर्वर्त्यूष्माः ध्रुवे स्वीये निश्चिते आर्तवस्वरूपे सीदतं वसतम्।

एवमेतद् स्पष्टं यत् प्रथमविषुवतः वसन्तर्तोः प्रारम्भः वसन्तर्तुः विषुवश्च संवत्सरमुखम्। अतः प्रथमविषुवस्य वासन्तिकविषुवसंज्ञा।

## 2. ग्रीष्मर्तुः

**"शुक्रश्च शुचिश्च ग्रैष्मावृतू अग्नेरन्तः श्लेषोऽसि कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः। ये अग्नयः समनसो द्यावापृथिवी इमे ग्रैष्मावृतू अभिकल्पमाना इन्द्रमिव देवा अभि संविशन्तु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतम्।"**[2]

क्रमसातत्येन वसन्तर्तोः पश्चाद्वर्ती ग्रीष्मर्तुः आयाति। शुक्रमासः शुचिमासश्च द्वावेव ग्रीष्मर्तोः अङ्गभूतौ अत एव ग्रैष्मावृतू भवतः। वैदिकमासानां संज्ञापि आर्तवास्ति।

---

1. यजुर्वेदः मा.सं. 13/27.
2. यजुर्वेदः मा.सं.14/6.

शोचतेर्ज्वलतिकर्मणः शुच् धातोः "शुकवल्कोल्काः" इत्युणादिसूत्रेण कक् प्रत्ययेन निपात्यते। शुक्रपदस्यार्तवमर्थं श्रुतिः स्वयं वक्ति — **"तद्वा एष एव शुक्रो य एष (आदित्यः) तपति तद् यदेश तपति तेनैष शुक्रः।"**[1]

पुनश्च—

**"एतौ (शुक्रश्च शुचिश्च) एव ग्रैष्मौ (मासौ) स यदेतयोर्बलिष्ठं तपति तेनौ हेतौ शुक्रश्च शुचिश्च।"**[2] तीव्रातपेनैव वृष्टिरायाति स च प्रारम्भिकरूपेण यस्मिन् मासे आयाति तस्मिन्मासे एव आकाशे स्थितान् धूलिकणान् प्रारम्भिकवृष्ट्या सहैव भूमौ मेलयति आकाशञ्च पवित्रं शुद्धं करोति। तस्य शुक्राज्जातस्य मासस्य शुचिर्नाम। अग्नेरन्तः श्लेषोऽसीत्यादि वसन्तर्तौ यथा व्याख्यातं तथैव स्पष्टम्। इदमप्यत्रावधेयं यत् शुक्रमासस्य समाप्तिदिवसः उत्तरार्धे वृहत्तमः भवति रात्रिश्च लघुतमा तद्विपरीतं दक्षिणार्धे। अत एतदुत्तरनाभिः इतः एव दिवसकाले च्युतिः आरभ्यते स च रात्रौ युज्यते।

## वर्षा-ऋतुः

तथैव क्रमसातत्येन ग्रीष्मर्तोरनुवर्ती वषर्त्तुः प्राप्नोति। यथा वदति वेदः

**"नभश्च नभस्यश्च वार्षिकावृतू अग्नेरन्तः श्लेषोऽसि कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः। ये अग्नयः समनसोऽन्तरा द्यावापृथिवी इमे वार्षिकावृतू अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतम्।"**[3]

नभमासः नभस्यमासश्च द्वावेव वर्षर्तोः अङ्गभूतौ अत एव वार्षिकावृतू भवतः। प्राप्ते वर्षर्तौ घनाच्छादितनभः दृश्यते, कृषकाः आर्तवकृषिसम्पादनाय वर्षार्थं मेघं नभे पश्यन्ति। अत एव वर्षर्तोः प्रथमाङ्गभूतस्य प्रथममासस्य नभमाससंज्ञा कृता वेदेन। तथैव नभमासाज्जातः नभस्यमासः। अग्नेरन्तः श्लेषोऽसीत्यादि यथापूर्वं व्याख्यातं वसन्तर्तौ तद्वदेव।

एवं ऋतुत्रयात्मकः षड्मासात्मकश्चोत्तरावर्तः। यथा वदति श्रुतिः—

**"वसन्तो ग्रीष्मो वर्षाः ते देवा ऋतवः,**
**शरद्धेमन्तः शिशिरास्ते पितरौ।"**[4]

---

1. श.ब्रा. 4/2/1/1.
2. श.ब्रा. 4/3/1/15.
3. यजुर्वेदः मा.सं. 14/15.
4. श.ब्रा. 2/1/3/1.

पुनश्च

"यत्रोदङ्ङावर्तते देवेषु तर्हि भवति। देवाँस्तर्ह्यभिगोपायति। यत्र दक्षिणावर्तते पितृषु तर्हिभवति। पितृंस्तर्ह्यभिगोपायति।[1]

## 4- शारदीयविषुवं शरदृतुश्च।

इदमत्रावधेयं यत् वासन्तिकविषुवतः सूर्यं परिक्रमन्ती स्वाक्षोपरि त्रयोविंशत्यंशा अष्टाविंशतिकलाः ($23^0$ - $28'$) विनता नृत्यन्ती धरणी, प्रत्यहोरात्रं रात्रेः च्युतांशकालाद् दिवसकालं वर्द्धयन्ती, प्रतित्रिंशदंशात्मकं त्रिमासं प्रपूर्य नवत्यंशं ($90^0$) परिक्रमणमार्गं यात्वा वा, शुक्रमासस्य अन्तिमेऽहोरात्रे, स्वोत्तरीगोलार्द्धे, वृहत्तमं दिवसं लघुतमाञ्च रात्रिङ्करोति, तद्विपरीतन्तु दक्षिणीगोलार्द्धे। ततः उत्तरनाभित अग्रे परिक्रमन्ती शुचिमासस्य प्रथमादहोरात्राद् प्रत्यहोरात्रं परिक्रमणगत्यानुप्राप्तं दिवसकालस्य च्युतांशं रात्रिकाले योजयन्ती, उत्तरनाभितः शुचिमासात् प्रतित्रिंशदंशात्मकं त्रिमासं प्रपूर्य, नवत्यंशात्मकं ($90^0$) परिक्रमणमार्गं यात्वा वा, अथवा वासन्तिकविषुवतः षड्मासं प्रपूर्य अशीत्यधिकशतमंशं ($180^0$) यात्वा वा समरात्रिंदिवकालात्मकं नभस्यमासस्य अन्तिमं वैषुवमहोरात्रं करोति विषुवनाभिं प्राप्नोति वा। एतदहोरात्रमेव संवत्सरस्य मध्यं भवति। इत एव शरदृतोः प्रारम्भः। शरदृतोरारम्भकत्वात् शारदीयविषुवमेतत्।

यथा संवत्सरात्मकस्यास्य महासुपर्णस्य वासन्तिकविषुवान् शिरो भवति तथैवास्य महासुपर्णस्य शारदीयविषुवान् पुच्छं भवति। यथा च ऋतूनां मुखं भवति वसन्तः तथैव ऋतूनां पुच्छमस्ति शरद्। तदेव वक्ति श्रुतिः —

**"शरत्पुच्छम् ( संवत्सरस्य )"**[2]

शरदृतुवर्णनञ्च यजुषि—

**इषश्चोर्जश्च शारदावृतू अग्नेरन्तः श्लेषोऽसि कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः। ये अग्नयः समनसोऽन्तरा द्यावापृथिवी इमे शारदावृतू अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतम्।"**[3]

अर्थात् इषमासः ऊर्जमासश्च द्वावेव शरदृतोः अङ्गभूतौ अत एव शारदावृतूभवतः। इष्यते ज्ञायते प्राप्यते येन ज्ञानं धनञ्च सः इषः। इषम् अन्ननाम निघण्टौ[4]। **"अन्नं**

---

1. श.ब्रा. 2/1/3/3.
2. तै. ब्रा. 3/11/10/3.
3. यजुर्वेदः मा.सं. 14/16.
4. निघन्टुः 2/7.

**वा इषम्**"।[1] इषु इच्छायाम्,[2] इष गतौ[3] धातोर्वा कर्मणि "कृतो बहुलमि"ति क्विप् प्रत्ययेन इषशब्दसिद्धिः। उर्जयन्ति सर्वे पदार्थाः यस्मिन् सः बलाऽन्नोत्पादकः ऊर्जमासः। प्राप्तव्या रसा अपि इषपदेनोच्यन्ते। यथा वसन्तर्तोः मधुमासः मधूकपुष्पसम्पन्नः मधुरसभरितः भवति। तथैव समशीतोष्णात्मकः शरदृतोः इषमासोऽपि इक्षुरसेनसम्पन्नः मधुरसभरितः भवति। अग्नेरन्तः श्लेषोऽसीत्यादि यथावसन्तर्तौ व्याख्यातं तद्वत्।

अस्मिन् संवत्सरमध्यतः प्राप्ते शरदर्तौ वर्षर्तोः व्यतीतत्वात् समशीतोष्णप्रकृतौ धवलाकाशः प्राप्नोति। स्वच्छेषु तडागेषु कमलपुष्पाणि विकसन्ति। इक्षुरससपन्ना पृथिवी धान्यान्नपरिपूर्णा भवति। यथा च श्रुतिः —

**"शरदि ह खलु वै भूयिष्ठाः ओषधय पच्यन्ते।"**[4]

**"शरदि हि बर्हिष्ठाः ओषधयो भवन्ति"**।[5] साहित्यिका अपि शरच्चन्द्रे एव अनुरक्ताः दृश्यन्ते। धवलाकाशे धवलचन्द्रिकया सम्पन्नत्वाच्चन्द्रः। जनाः शरदि ऋतौ ऐच्छिकं प्राकृतिकं सुखमवाप्नुवन्ति। शरदि समग्रा एव प्रकृतिः समुल्लसिता भवति। तदा ऋषेः निर्मलान्तः करणे भवति वेदप्रकाशः मुखतः निस्सरति च गानम् —

**"तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत। पश्येम शरदः शतं जीवेम शरदः शतं श्रृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात्।"**[6]

तदिति तद्देवहितं तत् विदुषां हितसम्पादकं शुक्रं शुद्धं तेजोमयं चक्षुः ज्ञाननेत्रं पुरस्ताद् पूर्वतः एव उत् चरत् उदितमस्ति। तेन ज्ञानेन सम्पन्नाः वयं जीवेम शरदः शतम् शतं शरदृतोः आवर्तनं यावद् भवति तावद् शतवर्षपर्यन्तम् जीवामः शतशरदृतोः आवर्तनपर्यन्तं श्रृणुयामः शतशरत्पर्यन्तं वदामः शतशरदावर्तनं यावद् दैन्यरहिताः स्याम भूयः शतशरदावर्तनादधिकोऽपि तथैव सानन्देन भवामः।

## हेमन्तर्तुः

शारदीयविषुवतः अग्रे सूर्यं परिक्रमन्ती धरणी शरदृतुं प्रपूर्य हेमन्तर्तौ प्रविशति यथा वदति वेदः —

**"सहश्च सहस्यश्च हैमन्तिकावृतू अग्नेरन्तः श्लेषोऽसि कल्पेतां द्यावापृथिवी कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः। ये अग्नयः**

1. कौ.ब्रा. 28/5.
2. तुदादिः 6/16 पा.धा.
3. दिवादिः 4/19 पा.धा.
4. जै.उ. 1/35/5.
5. कौ. 3/4.
6. यजुर्वेदः मा.सं. 36/24.

**समनसोऽन्तरा द्यावापृथिवी इमे। हैमन्तिकावृतू अभिकल्पमाना इन्द्रमिव देवाऽभिसंविशन्तु तया देवतयाऽङ्गिरस्वद् ध्रुवे सीदतम्।''**[1]

**अर्थः** — सहमासः सहस्यमासश्च द्वावेव हेमन्तर्तोः अङ्गभूतौ हेमन्तावयवौ अतः हैमन्तिकावृतू भवतः। सहते सह्यतीति वा सहः सह मर्षणे[2] सह चक्यर्थे[3] च धातोरौणादिकोऽसुन् प्रत्ययः तेन सह-शब्द-निष्पत्तिः। शीतसहनकारित्वात् बलकारित्वाच्चास्य नाम सहः। सहः बलनाम निघन्टौ।[4] तथा च श्रुतिः — **''बलं वै सहः।''**[5] सहसि बले भवः सहस्यः। ततो भवार्थे साध्वर्थे वा सहपदाद्यत् कृते सहस्यपदनिष्पत्तिः। **''स यद्धेमन्तः इमाः प्रजाः सहसेव स्वं वशमुपनयते तेनौ हेतोः सहश्च सहस्यश्च।''**[6] सहवासोऽपि ऊष्णतादायकः वलकारी। यथा कपयः अस्मिनृतौ रात्रौ शीतनिवारणाय यूथे समूहे सहैव तिष्ठन्ति। अग्नेरन्तः श्लेषोऽसीत्यादि यथा वसन्तर्तौ व्याख्यातं तद्वत् ।

इदमप्यत्रावधेयं यत् शारदीयविषुवतः स्वाक्षोपरि विनता घूर्णन्ती परिक्रमणमार्गे अग्रे सूर्यं परिक्रमन्ती पृथिवी प्रत्यहोरात्रं परिक्रमणगत्यानुप्राप्तं दिवसकालस्य च्युतांशं रात्रिकाले योजयन्ती दिवसापेक्षया क्रमेण रात्रिं वर्द्धयन्ती प्रतित्रिंशदंशात्मकं त्रिमासं प्रपूर्य नवत्यंशं मार्गं यात्वा सहमासस्य अन्तिमे दिवसे स्वोत्तरीगोलार्धे लघुतमं दिवसं दीर्घतमाञ्च रात्रिङ्करोति। तद्विपरीतञ्च दक्षिणीगोलार्धे। दाक्षिणीगोलार्द्धे दीर्घतमदिवसात् दक्षिणनाभिरेषा। इतोऽग्रे सहस्य मासस्य प्रथमदिवसात् रात्रिकाले च्युतिः प्रारभ्यते सा च च्युतिः स्वभावतया गतिमनुसृत्य दिवसकाले युज्यते। एषा दक्षिणनाभिः वासन्तिकविषुवतः सप्तत्यधिद्विशतमंशात्मकं ($270^0$) परिक्रमणमार्गं यात्वा प्राप्नोति धरणी। उत्तरनाभितश्च अशीत्यधिकशतमंशात्मकं ($180^0$) परिक्रमणमार्गं यात्वा च प्राप्नोति।

## शिशिरर्तुः

हेमन्तर्तुं प्रपूर्य विनता नृत्यन्ती परिक्रमायामग्रे गच्छन्ती धरित्री शिशिरर्तुं निर्माति। यथा वर्णितं यजुषि—

**''तपश्च तपस्यश्च शैशिरावृतू अग्नेरन्तः श्लेषोऽसि कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय**

1. यजुर्वेदः मा.सं. 14/27.
2. पा.धा.स्वादिः 519
   पा.धा. चुरादिः 233 चक्ये तृप्तौ
3. पा.धा. दिवादिः 20.
4. निघन्टुः2/9.
5. श.ब्रा. 6/3/2/14.
6. श.ब्रा. 4/3/1/18.

**सव्रताः। ये अग्नयः समनसोऽन्तरा द्यावापृथिवी इमे शैशिरावृतू अभिकल्पमाना इन्द्रमिवदेवा अभिसंविशन्तु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतम्।"[1]**

व्याख्या — अग्नेरन्तः श्लेषोऽसि प्रतिरात्रि प्रतिदिवसं प्रत्यहोरात्रञ्च अग्नेः उष्णतायाः यदन्तःश्लेषः अन्तःस्थं रहस्यमस्ति हे गतिमति! ग्मे! धरित्रि! तन्नियमेन सम्पादयन्ती त्वमसि। द्यावापृथिवी द्यौश्च पृथिवी च तौ सूर्यप्रकाशो भूमिश्च प्रत्यहोरात्रमनेन परिवर्तमानेन क्रमिकौष्ण्येन शिशिरर्तोः अङ्गभूतौ शिशिरावयवौ तपश्च तपस्यश्च तपतपस्यौ शैशिरावृतू कल्पेतां सम्पादयताम्। सव्रताः समानं व्रतं कर्म येषां ते प्रत्यहोरात्रान्तवर्ति पृथगौष्ण्यसम्पादकाः अग्नयः मम कृषिप्रभृतिसत्कर्मसंलग्नस्य जनस्य ज्यैष्ठ्याय उत्कर्षाय आपः आर्तवानि जलानि जलवायवश्च तैः ओषधयः शैशिराः वनस्पतयः धान्यानि कल्पन्तां सम्पादयन्तु। इमे द्यावापृथिवी निर्मिताः ये समनसोऽन्तराः परिवर्तनसातत्यव्यवस्थितान्तराः अग्नयः ते तपतपस्यौ शैशिरावृतू अभिकल्पमानाः सर्वतः सम्पादयन्तः सन्तः संविशन्तु एतत्कर्माश्रयन्तु। यथा देवाः इन्द्रियाणि इन्द्रम् आत्मानम् - अङ्गिरस्वद् योऽङ्गानां रसः प्राणः तद्वदङ्गाङ्गीवाचरन्ति तथैव तया पृथिव्या देवतया सम्पादितं प्रत्यहोरात्रं परिवर्तिताः अग्नयः अहोरात्रान्तर्वर्त्यूष्माः ध्रुवे निश्चिते स्वीये आर्तवस्वरूपे सीदतं वसतम्।

'तप दाहे'[2] धातोः "सर्वधातुभ्योऽसुन्"[3] इत्यनेन असुन् प्रत्यये। तापयतीति तपः यथा शतपथे—

**"एतौ एव शैशिरौ ( मासौ ) स यदेतयोर्बलिष्ठं श्यायति तेनौ हेतौ तपश्च तपस्यश्च।[4]"**

## ऋतूनामृतुसन्धीनाञ्च प्रभावः तदनुविविधविभागाः

एवं प्रकारेण स्पष्टतया यजुषि आर्तवस्य संवत्सरस्य मासात्मकाः द्वादश विभागाः ऋतुपरकाश्च षट् विभागाः वर्णिताः सन्ति। यथा वर्तमाने कालेऽपि दृश्यते यदृतूनां सन्धौ लोके व्याधीनां बाहुल्यं भवति। तद्विषयेऽपि सावधानेन वक्ति श्रुतिः —

**"ऋतु संधिषु वै व्याधिर्जायते।"[5]**

**"ऋतु संधिषु हि व्याधिर्जायते।"[6]**

वयं पश्यामः यत् समग्रा एव कृषिव्यवस्था आतर्वा अस्ति। न तु कृषिव्यवस्था एव अपितु प्राणिनां प्रजननसामर्थ्यमपि ऋतुनियन्त्रितमेव श्रुतिः तत्सर्वं स्पष्टतया वक्ति।

---

1. यजुर्वेदः मा.सं. 15/57.
2. पा.धा.चु. 242.
3. उ.सू. 4/189.
4. श.ब्रा. 4/3/1/19.
5. ग्रो.ब्रा.उ. 1/19.
6. कौ.ब्रा. 5/1.

तद्यथा —

**"ऋतवः समिद्धाः प्रजाश्च प्रजनयन्त्योषधीश्च पचन्ति।"[1]**

**"ऋतवो वा इदं सर्वमन्नाद्यं पचन्ति।"[2]**

**"तस्माद्यथर्तु वायुः पवते।"[3]**

**"तस्माद्यथर्त्वोषधयः पच्चन्ते।"[4]**

**"सेयं वागृतुषु प्रतिष्ठिता वदति।"[5]**

निगमेषु स्थूलसूक्ष्मदृष्ट्या ऋतूनां विविधविभागाः दृश्यन्ते। प्राथम्येन तु यथा वर्णितं तथा षड्विभागाः तत्रापि मासात्मकाः विभागाः अपि आर्तवा एव तदनु द्वादश मासाः द्वादश ऋतव एव अतिस्थूलदृष्ट्या द्वौ विभागौ क्रमशः उत्तरावर्तदक्षिणावर्तात्मकः।

**1. ग्रीष्मर्तुः –** मधुमाधवशुक्रशुचिनभनभस्येति षण्मासात्मकः वासन्तिकविषुवतः शारदीयविषुवपर्यन्तम्।

**2. शीतर्तुः –** इष-उर्जसहसहस्यतपतपस्येति षण्मासात्मकः शारदीयविषुवतः वासन्तिकविषुवपर्यन्तम्।

पुनश्च ऋतूनां त्रिधा विभागोऽपि दृश्यते। तदेवम्

**1- ग्रीष्मर्तुः –** मधुमाधवशुक्रशुचीति चतुर्मासात्मकः

**2- वर्षा-ऋतुः –** नभनभस्येषोर्जेति चतुर्मासात्मकः

**3- शीतर्तुः –** सहसहस्यतपतपस्येति चतुर्मासात्मकः

तद्यथा श्रुतिः — **"त्रयो वा ऋतवः संवत्सरस्य। संवत्सरसंमिता वै गर्भाः प्रजायन्ते।"[6]**

पुनश्च षडृतवः संवत्सरस्य यथावर्णितं तत्रापि पञ्चर्तवः संवत्सरस्य बाहुल्येन उक्ताः दृश्यन्ते। यथा ऋग्वेदे।

**पञ्चपादं पितरं द्वादशाकृतिं**

**दिव आहुः परे अर्धे पुरीषिणम्।**

---

1. श.ब्रा. 1/3/4/7.
2. श.ब्रा. 4/3/3/12.
3. तां.म.ब्रा. 10/9/2.
4. तां.म.ब्रा. 10/8/1.
5. श.ब्रा. 7/4/2/37.
6. श.ब्रा. 11/5/4/11.

**अथेमे अन्य उपरे विचक्षणं**
**सप्तचक्रे षडर आहुरर्पितम्।।**[1]

मन्त्रस्यास्य दीर्घतमा औचथ्यः ऋषिः, विश्वेदेवा देवताः, जगती छन्दः।

**व्याख्या –** पञ्चपादं पञ्चर्तवः संवत्सरात्मनः कालस्य पादा इव, असौ पादैरिव ऋतुभिरावर्तते। पितरं सर्वेषां पालकत्वात् जनयितृत्वाच्च पितृत्वं तस्य। द्वादशाकृतिं द्वादश मासाः एव द्वादश आकृतयस्तं द्वादशाकृतिं पुरीषिणं पुराणां सहितानां पदार्थानामीषितारं सूर्यं प्रतिप्रत्यक्षं भागं दिवः दिवसः आहुः परे अर्धे घूर्णन्त्याः पृथिव्याः अर्धे पृष्ठभागे (रात्रिः) आहुः कालविदः विद्वांसः।

अथ तमेवान्य इमे उ परे कालविदः विचक्षणं निपुणं सर्वज्ञं सप्तचक्रे सप्तदिवसात्मकसप्तहयरूपेण चक्रे सततं गतिमति कालात्मनि षडरे षड्तुमरा इव अर्पितं निविष्टमित्याहुः। सप्तवर्णात्मिकाः सूर्यस्य रश्मयः ताभिः युक्तः सूर्यबिम्बः चक्रमिव विभाति तस्मिन् कालात्मनि सूर्ये एव अराः इव पड्तवः अर्पिताः सन्ति। मूलतः **"द्वौ द्वौ हि मासावृतुः"**[2] इति ताण्ड्ये स्पष्टं व्याख्यातमस्ति तथैव शतपथेऽपि **"द्वौ हि मासावृतुः"**[3] पञ्चर्तवः षड्तवः वा एतद्विषये स्पष्टमस्ति प्रतिपादितम् ऐतरेये —

**"सप्तदशो वै प्रजापतिः। द्वादश मासाः पञ्चर्तवः हेमन्तशिशिरयोः समासेन। तावान् संवत्सरः। संवत्सरः प्रजापतिः। प्रजापत्यायतनाभिरेवाभी राध्नोति। य एवं वेद।"**[4]

इत्यत्र हेमन्तशिशिरयोः समासेन पञ्चर्तवः भवन्ति इति स्पष्टमस्ति मूलतः षड्तवः एव। वर्तमानसमयेऽपि वयं जानीमः यद्वसन्तर्तुः स्वप्रारम्भकालात् चत्वारिंशद्दिनानि पूर्वमेव स्वस्य आगमनस्य प्रभावं दर्शयति। एवं शिशिरर्तोः चत्वारिंशद्दिनानि वसन्ते एव मिश्रीभवन्ति। अवशिष्टविंशतिदिनानि हिमशीतलत्वैकगुणयोगकृतं हेमन्तर्न्तावन्तर्भवन्ति। एवं एकाधिक शतदिवससंख्याकः वसन्तः अशीतिदिवससंख्याकश्च हेमन्तः इति व्यवस्थाद्वारेण पञ्चर्तवः। मूलतः षड्तवः समासेन पञ्चर्तवः इति सर्वत्र निगेमेषु व्यवहृतम्। तदनुगुणमेव नाक्षत्रचान्द्रमासानुसारिव्यवस्थायामपि माघशुक्लपञ्चमीवसन्तपञ्चमीरूपेण स्वीकृतास्ति। वर्तमानसमये तस्मिन् दिने एव वसन्तोत्सवः भवति।

## चन्द्रमाः चन्द्रकलाश्च

निगमेषु मधुमासादिद्वादशार्तवमासानामेव नामानि सन्ति। तत्तु यथावर्णितं विनतायाः पृथिव्याः स्वाक्षोपरिभ्रमणात् सूर्यपरिक्रमणाच्च विषुवतः परिक्रमणमार्गस्य

---

1. ऋग्वेदः 1/162/12.
2. तां.म. 10/12/8.
3. श.ब्रा. 7/4/2/29.1. श.ब्रा. 1/6/3/16.
4. ऐ.ब्रा. 1/16.

त्रिंशदंशात्मकद्वादशविभागाच्च भवति। तदनुसृत्यैव वसन्तादिका ऋतुव्यवस्था जडजङ्गमानामुत्पत्तिक्रमश्च। लोके प्रतिपदादिचान्द्रतिथीनां व्यवहारः चन्द्रदर्शनमनुसृत्य प्रचलति तथैव पूर्णिमान्तोऽअमान्तो वा चान्द्रमासानामपि च। ज्योतिशशास्त्रे नवग्रहेषु चन्द्रस्य प्रमुखं स्थानं वर्तते। पृथिव्याः उपग्रहोऽस्ति चन्द्रमा इत्यपि च। निगमेषु ब्राह्मणेषु च किमस्ति चन्द्रविषये इत्यत्र स्वाभाविकी जिज्ञासा। अतः तद्विषये किञ्चिद् प्रस्तौमि। एकेन रूपकेण चन्द्रोत्पत्ति-विषयः वर्णितः अस्ति। तदेवम् —

**''तद्वेव खलु हतो वृत्रः, स यथा दृतिर्निष्पीत; एवं संव्लीनः शिश्ये। यथा निर्धूतसक्तुर्भस्त्रा-एवं संव्लीनः शिश्ये। तमिन्द्रोऽभ्यादुद्राव हनिष्यन्।''**[1]

**''स होवाच - मा नु मे प्रहासीः, 'त्वं वै तदेतर्ह्यसि- यदहम् व्येव मा कुरु, मामुया भूवम्' इति। स वै ''मेऽन्नमेधि'' इति। ''तथा'' इति। (इन्द्रः) तं (वृत्रं) द्वेधाऽन्वभिनत्, तस्य यत् सौम्यं न्यक्तमास - तं चन्द्रमसं चकार। अथ यदस्यासुर्यमास- तेनेमाः प्रजाः उदरेणाविध्यत्। तस्मादाहुः - वृत्र एव तर्ह्यन्नाद आसीद् वृत्र एतर्हि' इति। इदं यदसौ आपूर्यते - अस्मादेवैतल्लोकादादाप्यायते। अथ यदिमाः प्रजा; अशनमिच्छन्ते - अस्मा एवैतद् वृत्रायोदराय बलिं हरन्ति। स यो हैवमेतं वृत्रमन्नादं वेद-अन्नादो हैव भवति।''**[2]

**व्याख्या –** तस्य वेव तस्माद् वेव वा तद्वेव वेति-इति वेव व्याप्तः प्रक्षिप्तः जनितो वा ''वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु''[3] धातोः वेव-शब्दनिष्पत्तिः। तस्य इन्द्रस्य सूर्यस्य किरणैः व्याप्तः इन्द्रात् सूर्यात् प्रक्षिप्तः जनितो वा वृत्रः खलु निश्चयेन हतः हत इव। स वृत्रः यथा दृतिर्निष्पीतः जलपानरहितः मत्स्यः एवं तद्वत् संव्लीनः अन्तर्लीनः मूर्च्छितवदित्यर्थः शिश्ये शयानः आसीत् अथवा यथा निर्धूतसक्तुर्भस्त्रा चर्मणावृतः निष्कम्पसक्तुपिण्डवत् संव्लीनः शिष्ये शयानः आसीद्। तं वृत्रं इन्द्रः हनिष्यन् मारितुमिच्छन् अभ्यादुद्राव सर्वतः प्राप्तवान् सः वृत्रः होवाच उक्तवान् मे मम नु 'निश्चयार्थकः अव्ययः मा निषेधार्थकोऽव्ययः प्रहासीः हननमकरोः, त्वं मम हननं न कुरु इत्यर्थः त्वं वै निश्चयेन तदेतर्ह्यसि यदहम्। अर्थात् निश्चयेन यदेतदहममस्मि तत्त्वमेवासि त्वत्तः एव ममोत्पत्तिकारणात्। तवांशभूतत्वात् त्वमेवाहम् व्येव मा कुरु विभक्तं न कुरु अमुया कायया अहं विभक्तः मा भूवम्। तदा सः इन्द्रः सूर्यः उक्तवान् वै निश्चयेन मे मह्यमन्नमेधि वर्धयस्व। तदा वृत्रः ''तथा'' एवमस्तु इत्युक्वान्। तदा इन्द्रः सूर्यः तं वृत्रं द्वेधाऽन्वभिनत् अनुकूलं द्विभागं कृतवान्। तस्य वृत्रस्य यत् सौम्यं न्यक्तं भागमास तं भागं चन्द्रमसं

1. श.ब्रा. 1/6/3/16.
2. श.ब्रा. 1/6/3/17.
3. पा.धा.पाठः अदादिः 41.

चन्द्रं चकार कृतवान्। अथ अस्य वृत्रस्य यो भाग आसुर्यं अधस्तनीयः शिरोवर्जभाग आसीत् तेन अधरेण भागेन इमाः प्रजाः अविध्यत् मुक्ता अभवत् उत्पन्ना वा। (व्यध ताडने धातोर्लङ्। धातोः सम्प्रसारणम्) तस्मादाहुः वृत्र एव तर्ह्यन्नाद आसीदुदरात्मकत्वात् वृत्र एतर्हि भूमिः पृथिवी जगत् , इति। इदं दृश्यं यदसौ चन्द्रः आपूर्यते क्रमश; पूर्णतां प्राप्नोति अस्मात् पृथिवीरूपोदरात् एतदेवलोकात् आप्यायते वृद्धिं प्रापयते। पृथिवीं परिक्रमन् क्रमशः छाया-मुक्तताक्रमेण। अथ यदा इमाः प्रजाः वुभुक्षिताः अशनमिच्छन्ते तदा अस्मा एव एतद् वृत्राय वृत्ररूपाय उदराय एव वलिं हरन्ति। शरीरात्मकपृथिव्यंशस्यैव पोषणं कुर्वन्ति। सः यः विद्वान् निश्चयेन एतं वृत्रं पृथिव्यात्मकशरीरपोषणधर्माणमुदरमन्नादं वेद विजानाति। अन्नादो हैव भवति। शरीरपोषणरहस्यं ज्ञात्वा शरीरपोषणे सक्षमः भवति।

सूर्य एव इन्द्रः, चन्द्र एवं वृत्रः इति स्वयमेव स्पष्टङ्करोति श्रुति :—

**"तद्वा एष एवेन्द्रो य एष तपति। अथैष एव वृत्रो यच्चन्द्रमाः"।**[1] स्पष्टमस्ति।

निगमेषु इदमपि निगमितमस्ति यच्चन्द्रमसि स्वयंप्रकाशः नास्ति। अपितु सूर्यप्रकाशेन प्रकाशितो भवति चन्द्रमाः। यथा यजुषि

**"सुषुम्णः सूर्यरश्मिश्चन्द्रमाः।"**[2]

अस्य मन्त्रस्य व्याख्यानं शतपथे एवमस्ति —

**"सुषुम्णः इति। सुयज्ञियः इत्येतत्। सूर्यरश्मिः इति। सूर्यस्यैव हि चन्द्रमसो रश्मयः।"**[3]

चन्द्रोत्पत्ति- विषये डारविनमहोदयेनापि शतपथरूपकोक्तं सत्यमेव दृष्टम्। तेन कथितं यत् पुरा चन्द्रः पृथिव्या एव एको भाग आसीत्। तदा तापक्रमोऽत्युच्च आसीत् पिण्डश्च द्रवीभूतपदार्थमयः। शनैः शनैरक्षभ्रमणवेगात् पिण्डो दीर्घवृत्ताकारत्वं प्राप्तवान्। सूर्याकर्षणादस्मिन् पिण्डेऽत्युच्चाप्लावाः अजायन्त एतैरुच्चालावैः दीर्घवृत्ताकारपिण्डेऽस्मिन् सूर्यस्य दिशायां दीर्घपिण्डस्य शिरोभागवत् गोलाकृतिं प्राप्य सूर्याकर्षणाधिक्यात् पृथक् जातम्। तत् सूर्याकर्षणात् पृथक्जातं नूतनः पिण्डः एव चन्द्रः। अवशिष्टः मूलबृहद् पिण्डः पृथिवी अधरोदरात्मिका।

## चन्द्रः पृथिवीं सूर्यञ्च परिक्रमति

अत्रास्मिन् खगोले यः पिण्डः यस्मात् पिण्डात् निसृतः सः स्वमूलपिण्डं परिक्रमति। वृहद्भागात्मके मूलपिण्डे गुरुत्वाकर्षणबलाधिक्यात्। अत एव सूर्यात् निसृताः

---

1. श.ब्रा. 1/6/4/18.
2. यजुर्वेदः म.सं. 18/40.
3. श.ब्रा. 9/4/1/9.

पिण्डाः सूर्यं परिक्रमन्ति। अस्मात् कारणात् सूर्यात् निसृताः पिण्डाः सूर्यस्य ग्रहाः सन्ति सूर्यश्च ग्रही अस्ति। चन्द्रः पृथिव्याः पृथक् जातः पृथिव्याः एव एकोभागोऽस्ति। अतो चन्द्रः पृथिवीं परिक्रमति पृथिवी च सूर्यं परिक्रमति। अतश्चन्द्रः पृथिवीं परिक्रमन् सूर्यमपि परिक्रमति। एवं प्रकारेण सूर्यस्य पृथिवीग्रहः। चन्द्रश्च पृथिवीग्रहस्य ग्रहः अतः चन्द्रः सूर्यस्य उपग्रहः। एवं ग्रही सूर्यस्य बुधशुक्रपृथिवीमंगलवृहस्पतिशनैश्चराः ग्रहाः। एतेषां ग्रहाणां ग्रहाः उपग्रहाः किन्तु ते उपग्रहाः अपि यस्मात् ग्रहाज्जाताः तस्य ग्रहस्य ग्रहाः एव। एवं चन्द्रः पृथिव्याः ग्रहः एव। अन्येषां ग्रहाणामपेक्षया स्वग्रहस्य प्रभावोऽधिकः भवति ग्रहीग्रहं प्रति। अनेनैव कारणात् चन्द्रस्य प्रभावः अधिकोऽस्ति पृथिवीं प्रति।

## चन्द्रस्य स्वाक्षोपरिभ्रमणम्

यथा पृथिवी स्वाक्षोपरि प्रत्यहोरात्रं एकवारं भ्रमति चन्द्रः तथा स्वाक्षोपरि न भ्रमति। अपितु चन्द्रस्य यद्भागः पृथिवीं प्रति प्रत्यक्षम् ऋजुरस्ति। स एव भागः सदैव पृथिव्याः प्रत्यक्षम् ऋजुः तिष्ठति। चन्द्रेण निष्पाद्यमानायां पृथिव्याः परिक्रमायां तस्यां स्थितौ किमपि परिवर्तनं न भवति। एवं प्रकारेण पृथिवीं परिक्रमन् चन्द्रः एकस्मिन् परिक्रमणे स्वाभाविकरूपेण एकमेव चक्रं भ्रमति।

## चन्द्रकलाः, ताभिश्च चन्द्रमासोत्पत्तिः

चन्द्रः पृथिवीमभितः परिक्रमणं प्रायः सार्धनवविंशत्यहोरात्रेषु करोति। यथा वेदः वक्ति चन्द्रे स्वप्रकाशः नास्ति अपितु "**सूर्यरश्मिश्चन्द्रमाः**"[1] अर्थात् ये चन्द्रमसः रश्मयः कथ्यन्ते ते केवलं चन्द्रे पतित्वा ततः परावृत्ताः सूर्यरश्मयः एव तदेव वक्ति शतपथश्रुतिः- "**सूर्यस्यैव हि चन्द्रमसो रश्मयः।**"[2] अतः भास्वरत्वविहीनत्वाच्चन्द्रस्तदैव दृश्यते यदा तस्य पृथिवीं प्रति ऋजुगोलार्धः पूर्णतोऽथवांशतोऽपि वा सूर्यरश्मिभिः प्रकाशितो भवति। इदमप्यत्रावधेयं यत् सूर्याकर्षणशक्त्या पृथिव्याः त्रुटितो भागः दूरंगतः चन्द्रत्वेन तिष्ठति तत्र पृथिवीतः खण्डितः उत्पाटितो वा भाग एव पृथिव्याः प्रत्यक्षं ऋजुरस्ति। तत्रोच्छेदकाले त्रुटितांशे स्वाभाविकमुच्चावचं जातम्। पृथिवीतः प्रत्यक्षचन्द्रस्य गोलार्द्धे सः त्रुटितांशात्मकः उच्चावचो भागः पूर्णिमायां तिथौ पूर्णचन्द्रदर्शने कृष्णत्वेन दृश्यते। तदेव वक्ति श्रुतिः —

**"एतद्वा इयम् (भूमिः) अमुष्यां (दिवि) देवयजनमदधात् यदेतच्चन्द्रमसि कृष्णमिव।"**[3]

---

1. यजुर्वेदः मा.सं. 18/40.
2. श.ब्रा. 9/4/1/9.
3. ऐ.ब्रा. 4/27.

**"स यदस्यै पृथिव्या अनामृतं देवयजनमासीत् तच्चन्द्रमसि न्यदधत तदेतच्चन्द्रमसि कृष्णम्।"[1]**

**"सदस्याः (पृथिव्याः) यज्ञीयमासीत्तदमुष्यां (दिवि) अदधात् तददश्चन्द्रमसि कृष्णत्वम्।"[2]**

**"यददश्चन्द्रमसि कृष्णं पृथिव्या हृदयं श्रितम्।"[3]**

पृथिव्याः प्रत्यक्षं ऋजुः त्रुटितांशयुक्तः चन्द्रस्य प्रकाशितगोलार्द्धोऽयं पृथिवीं परितः चन्द्रस्य भ्रमणशीलत्वात् विभिन्नेषु कोणान्तरेषु विभिन्नमात्रया अवलोक्यते। सः क्रमशः प्रतिरात्रं शनैः शनैः बृद्धिं प्राप्नुवन् पूर्णतां प्राप्नोति। ततः पुनश्च शनैः शनैः क्षीणतां प्राप्नुवन् पूर्णतया तिरोहितो भवति।

यदा चन्द्रः भूमिं परिक्रमंन् भूसूर्ययोर्मध्ये प्राप्नोति तदा पृथिव्याः प्रत्यक्षम् ऋजोः चन्द्रस्य गोलार्द्धः सूर्यसम्मुखगोलार्द्धस्य पृष्ठभागः भवति अतः अन्धकाराच्छन्नः भवति सूर्यस्य सम्मुखचन्द्रगोलार्द्धस्य पृष्ठवर्तिगोलार्द्धत्वात्। सूर्यरश्मयः ऋजुरेखायां चलन्ति अत एव स्वसमक्षं गोलार्द्धमेव प्रकाशयन्ति। तद्विपरीतं गोलार्द्धे निशा भवति। अतः अस्यां स्थितौ चन्द्रः न दृश्यते। चन्द्रः सूर्यस्य समीपे भवति अत एव एषा स्थितिः अमावस्या इति कथ्यते। तथा च वक्ति श्रुतिः —

**"चन्द्रमा वा अमावास्यायामादित्यमनुप्रविशति।"[4]**

**"अमावास्यायां सः (चन्द्रमाः) अस्य (सूर्यस्य) व्यात्तमापद्यते। (सूर्यः) तं (चन्द्रमसं) ग्रसित्वा उदेति। स (चन्द्रमाः) न पुरस्तान्न न पश्चाद्ददृशे।"[5]**

ज्योतिषशास्त्रे वृत्तस्य केन्द्रात् षष्ठ्यधिकत्रिशततमाः कोणात्मकाः समभागाः प्रत्येकमंशपदेन उच्यन्ते। पुनश्च एकस्मिन् अंशे षष्टिर्कलाः भवन्ति। एकस्मिन् कलायाञ्च षष्टिर्विकलाः भवन्ति।

**तदङ्केषु एवं बोध्यम् –**

1 वृत्तं = $360^0$ अंशाः

1 अंशः = $60'$ कलाः

1. श.ब्रा. 1/2/5/18.
2. तै.ब्रा. 1/1/3/3.
3. मं.ब्रा. 1/5/13.
4. ऐ.ब्रा. 8/28.
5. श.ब्रा. 1/6/4/18-19.

1 कला = 60'' विकलाः

1 राशिः = $30^0$ अंशाः

यथोक्तं चन्द्रः पृथिवीमभितः प्रायः 29-1/2 सार्धनवविंशत्यहोरात्रेषु एकबारं परिक्रमति। यदा चन्द्रः भूसूर्ययोर्मध्ये भवति तदा अमावस्या भवति। चन्द्रः प्रत्यहोरात्रं प्रायः एककलासहद्वादशांशात्मकं मार्गं चलति। द्वादशांशगमनेन चन्द्रस्य एका तिथिर्भवति। चन्द्रपरिक्रमणमार्गस्य द्वादशांशात्मकाः त्रिंशद् विभागाः भवन्ति। अमावस्यातः अग्रिमायां निशायां चन्द्रः भुवं परिक्रमन् द्वादशांशमग्रे सूर्यस्य पूर्वदिशायां तिष्ठति तथापि अत्यल्पतिर्यक्प्रकाशकिरणस्पर्शितचन्द्रांशस्य दर्शनं न भवति सूर्यास्तकालानुवर्ति तदंशस्यापि झटिति अस्तंगतत्वात् एषा प्रतिपदा तिथिः। अमावस्यातः द्वितीयायां निशायां चन्द्रः भूसूर्ययोः मध्यवर्तीकाल्पनिकजुरेखातः चतुर्विंशत्यंशमग्रे गच्छति तदा तस्यां रात्रौ सम्मुखचन्द्रगोलार्धस्य खण्डितवृत्ताकृतिः वृत्तस्य सप्तमांशः यावत् तिर्यक् सूर्यरश्मिभिः सूर्यदिशि पश्चिमदिशायां प्रकाशते। पुनश्च पृथिव्याः दैनिकगतिकारणतः पृथिवीसूर्ययोः मध्यवर्ती, ऋजुरेखातः नातिदूरे तिष्ठन् झटिति एव अस्तंगच्छति। एवं प्रत्येकं रात्रौ चन्द्रः द्वादशांशं पूर्वं तिष्ठति कोणान्तरं वर्धते तदनु पृथिव्याः सम्मुखस्थः चन्द्रस्य, गोलार्द्धः क्रमशः प्रतिरात्रमधिकाधिकं प्रकाशते। सप्तम्यामष्टम्यां वा तिथौ यदा कोणान्तरं नवत्यंशं भवति तदा पृथिव्या सम्मुखस्थः चन्द्रगोलार्धस्य अर्धभागः पश्चिमदिशि प्रकाशते। पुनश्च प्रत्येकं रात्रौ क्रमशः वृद्धिं प्राप्नुवन् यदा अमातः कोणान्तरं $180^0$ मितं भवति तदा पृथिव्याः सम्मुखस्थः चन्द्रगोलार्धः ऋजुरेखायामागतप्रत्यक्षसूर्यरश्मिभिः पूर्णतया समग्रमेव प्रकाशते। एषा चन्द्रस्य पूर्णा कला पूर्णमासी।

ततः प्रतिरात्रौ $12^0$ मितं कोणान्तरं क्षीयते चन्द्रः सूर्यस्य पश्चिमे तिष्ठति तदनु चन्द्रस्य कला अपि क्षीयते। पृथिव्याः सम्मुखस्थस्य चन्द्रगोलार्धस्य 1/14 मितांशः पश्चिमदिक् न प्रकाशते प्रत्येकं रात्रौ तथैव क्रमशः कोणान्तरं क्षीयते तथैव पश्चिमतः प्रकाशितभागः क्षीयते चन्द्रोदयश्च क्रमशः प्रत्येकं रात्रौ विलम्बेन जायते। यदा कोणान्तरं नवत्यंशं यावत्क्षीयते चन्द्रोदयोऽपि अर्द्धरात्रौ भवति चन्द्रश्च पश्चिमदिशि अर्धक्षीणः पूर्वदिशि अर्धः दृश्यते। शनैः शनैः क्रमशः क्षयं प्राप्नुवन् कृष्णचतुर्दश्यां तिथौ प्रातः काले वृत्तस्य खण्डाकृतिः अष्टमांशं यावत् पूर्वदिशि प्रकाशते। उदये च सूर्ये स्वाभाविकरूपेण न दृश्यते पुनश्च अग्रिमरात्रौ षोडशी कला अमा भवति। तथा च वक्ति श्रुतिः —

**"अथो चन्द्रमा वै भान्तः पञ्चदशः स च पञ्चदशाहान्यापूर्यते पञ्चदशापक्षीयते तद्यत्तमाह भान्त इति भाति हि चन्द्रमाः।"**[1]

---

1. श.ब्रा. 8/4/1/10.

"चन्द्रमा वै पञ्चदशः । एष हि पञ्चदश्यामपक्षीयते पञ्चदश्यामापूर्यते।"[1]

"षोडशकलो वै चन्द्रमाः।'[2]

"चन्द्रमा वै जायते पुनः।"[3]

"चन्द्रमा द्विपात्तस्य पूर्वपक्षापरपक्षौ पादौ।"[4]

"रात्रिर्वै चंन्द्रमाः।"[5]

एवं प्रकारेण अमातः अमापर्यन्तं पूर्णिमातः पूर्णिमापर्यन्तं वा चन्द्रेण कृतायाः पृथिव्याः एकस्याः पूर्णपरिक्रमायाः कालः एकः चान्द्रमासः भवति। स च प्रायः सार्धनवविंशतिदिनात्मकः।

## ग्रहाः नक्षत्राणि च

रात्रौ यावदाकाशस्यावलोकनं क्रियते तावदनन्तेऽस्मिन् अनन्तप्रकाशबिन्दवो दृश्यन्ते सामान्यजनैः तानि नक्षत्राणीत्युच्यन्ते किन्तु न ते तथा। सर्वे प्रकाशबिन्दवः नक्षत्राणि न भवन्ति। नक्षत्राणां मध्ये ग्रहा अपि वर्तन्ते। ऋषिभिःज्योतिर्विद्भिश्च ग्रहनक्षत्रयोः भेदकाः विज्ञापिताः। तदेवम् —

1- यं न क्षीयते तं नक्षत्रं तानि नक्षत्राणि। णक्षगतौ[6] धातोः "अमिनक्षियजिवधिपतिभ्योऽत्रन्"[7] सूत्रेण अत्रन् प्रत्ययः । न क्षीयते क्षरते इति वा नक्षत्रम् इति विग्रहे नञ् क्षत्र पदयोः समासे "न भ्राण्नपान्नवेदा ......।"[8] सूत्रेण नञः प्रकृतिभावः। नक्षत्राणि नक्षतेर्गतिकर्मणः।[9] तथा च श्रुतिः

"तन्नक्षत्राणां नक्षत्रत्वं यन्न क्षियन्ति।"[10]

"न वै तानि क्षत्राणि अभूवन्निति। तद्वै नक्षत्राणां नक्षत्रत्वम्।"[11]

1. तै.ब्रा. 1/5/10/5.
2. षड्.ब्रा. 4/6.
3. तै.ब्रा. 3/9/5/4.
4. गो.ब्रा.पू. 2/8.
5. श.ब्रा. 12/4/7/7.
6. पा.धा.भ्वा. 442.
7. उणादिः 3/105.
8. पा.अ. 6/3/75.
9. निरुक्तम् 3/20.
10. गो.उ. 1/8.
11. श.ब्रा. 2/2/2/19.

ग्रह उपादाने धातोः "**घञर्थे कविधानम्**" इति कः प्रत्ययः। गृहीताः इति ग्रहाः येन ग्रहीताः सः ग्रही स्वाकर्षणशक्त्या सूर्येण बुधशुक्रपृथिवीमङ्गलगुरुशनिप्रभृतीनि पिण्डानि गृहीतानि सूर्यं परिक्रमन्ति, चन्द्रश्च पृथिव्या गृहीतोऽपि पृथिव्या सह सूर्येण गृहीतः पृथिवीं परिक्रमन् पृथिव्या सहैव सूर्यमपि परिक्रमति। अतो बुधादयः सूर्यस्य ग्रहाः सूर्यश्च ग्रही। चन्द्रश्च पृथिव्याः ग्रहः सूर्यस्य उपग्रहोऽस्ति। एते ग्रहाः सूर्यादेव क्षरिताः अतो न नक्षत्राणि।

2- एते ग्रहाश्चलाः प्रकाशबिन्दवः सूर्यं परिक्रमन्तः। नक्षत्राणि चाचलानि। अतः तानि ग्रहाणां गतिज्ञापकानि।

3- नक्षत्राणि सूर्य इव स्वतन्त्रपिण्डानि तानि प्रायेण सूर्यसमानि, सूर्यादपि विशालानि वा। यथा श्रुतिः —

"**यथैवासौ सूर्य एवम् (नक्षत्रम्) तेषां (नक्षत्राणाम्) एष उद्यन्नेव वीर्यं क्षत्रमादत्त।**"[1]

ग्रहाश्च सूर्यमण्डलस्याङ्गरूपाः सूर्याद् अल्पपरिमाणकाः सूर्याधीनाश्च। यथा वक्ति श्रुतिः —

"**अङ्गानि वै ग्रहाः।**"[2]

4- नक्षत्राणि सूर्य इव स्वयंप्रकाशरूपाणि। यथा वक्ति श्रुतिः —

"**भाकुरयो ह नामैते भाँ हि नक्षत्राणि कुर्वन्ति।**"[3]

"**नक्षत्राणि वै रोचना दिवि।**"[4]

ग्रहाश्च चन्द्र इव प्रकाशहीनपिण्डानि। ग्रहाणामुपरि ये सूर्यरश्मयः पतन्ति ते एव तान् प्रकाशयन्ति ततः प्रत्यावर्तिताः ते रश्मयः एव अस्मान् प्रति तान् ग्रहान् प्रदर्शयन्ति च। यथा च श्रुतिः—

"**सूर्यस्यैव हि चन्द्रमसो रश्मयः।**"[5]

5- नक्षत्राणि सूर्य इव ज्वलनशीलपिण्डानि तथा वक्ति श्रुतिः —

"**नक्षत्राणां वा एतद्रूपं यल्लाजाः।**"[6]

---

1. श.ब्रा. 2/1/2/18.
2. श.ब्रा. 4/5/9/11.
3. श.ब्रा. 9/4/1/9.
4. यजुर्वेदः मा.सं., 23/5; तै. 3/9/4/2.
5. श.ब्रा. 9/4/1/9.
6. श.ब्रा. 13/2/1/5.

किन्तु ग्रहाः उष्णत्वहीनाः। शीतलता च सूर्यात् दूरत्वक्रमेण। तेषु यत्किञ्चिदौष्ण्यं लभ्यते तत्सूर्यात् तैः प्राप्तम्।

6- ग्रहाणां प्रकाशः स्थिरौज्ज्वल्येन भाति। परन्तु स्वयं ज्वलतः नक्षत्राणि कम्पप्रभया प्रकाशन्ते। **"ज्योतिर्वै नक्षत्राणि"**[1] इति श्रुतिः।

एतत्सर्वं श्रुतिप्रतिपादितं सत्यमाधुनिकैः वैज्ञानिकैः ज्योतिर्विद्भिः विविधैः यन्त्रैः सूक्ष्मदर्शकैः प्रत्यक्षं दृष्टम्।

## नाडीवृत्तं विषुववृत्तं कालवृत्तं वा

पृथिव्याः स्वाक्षोपरिभ्रमणकारणतः अन्तरिक्षे खगोले वा प्रायेण नक्षत्राणि प्रतिदिनं पूर्वतः पश्चिमदिशि गच्छन्तः दृश्यन्ते। तेषां मार्गाश्च वृत्ताकाराः दृश्यन्ते। ध्रुवसमीपवर्तिनक्षत्राणि मन्दगत्या चलन्तः दृश्यन्ते। मध्याकाशे स्थितानि नक्षत्राणि तीव्रगत्या गच्छन्तः दृश्यन्ते। नक्षत्राणां भ्रमणदृष्ट्या नभोमण्डले खगोले वा कल्पितं तत्पूर्वापरवृत्तं येन खगोलस्य मध्यतः उत्तरीगोलार्धदक्षिणीगोलार्धरूपभागद्वयं भवति। नाडीवृत्तं विषुववृत्तं कालवृत्तं वा ज्योतिर्विद्भिः कथ्यते। एतद्वृत्तं ध्रुवस्थानात् नवत्यंशमितत्रिज्यया खगोले कल्पितं भवति।

## क्रान्तिवृत्तं, वासन्तिक विषुवसंपातः, शारदीयविषुवसंपातः उत्तरनाभिः दक्षिणनाभिश्च।

स्वाक्षोपरि $23^{0}$- 28 कला विनता पृथिवी स्वाक्षोपरि भ्रमन्ती अहोरात्राणि कुर्वती सूर्यं परिक्रमन्ती संवत्सरमार्तवं वर्षं वा निर्माति। पृथिव्याः अनया वार्षिकपरिक्रमणगतिकारणतः विषुववृत्तसमीपवर्तिनक्षत्राणां क्रमिकदर्शनपूर्विका सूर्यस्य चापि ऋतुपरिवर्तनपूर्विका प्रतीयमाना वार्षिकगतिरपि दृश्यते। खगोले नभोमण्डले वा पृथिव्याः अनया गत्या नक्षत्राणां सूर्यस्य मार्गात्मकं वृत्तं परिकल्प्यते। एतद् वृत्तं नाडीवृत्ताद् विषुववृत्ताद् वा $23^{0}$ - 28 कलात्मकं प्रवणतां भजते। पृथिव्याः नतिकारणात् एतत्कल्पितं वृत्तमेव क्रान्तिवृत्तमित्युच्यते। परिक्रमन्त्याः पृथिव्याः अस्मिन् वृत्ते चलन् इव प्रतीयमानः सूर्य उत्तरं गच्छन् यत्र विषुववृत्तमुल्लङ्घयति तत्रेदं सूर्येण विषुववृत्तसंक्रमणबिन्दुरेव वासन्तिकविषुवसंपात उच्यते। अस्यां स्थितौ सूर्यं परिक्रमन्त्याः स्वाक्षोपरि घूर्णन्त्याः पृथिव्याः मध्यभागे सूर्यरश्मयः ऋजु पतन्ति। अत एव समग्र पृथिव्यां तस्मिन् अहोरात्रे रात्रिदिवसयोः समं कालमानं भवति। वेदेषु एषः दिवसः वासन्तिकविषुवानिति प्रसिद्धः। एनं दिवसं मध्यकालीनाः ज्योतिर्विदः मेषसंपातशब्देन वदन्ति स्म। वैदिकास्तु वासन्तिकविषुवशब्देनैव।

तथैव च पृथिव्याः द्विविधगतिकारणतः उत्तरनाभिं प्राप्य उत्तरतः दक्षिणं गच्छन्निव सूर्यः $180^{0}$ मितं क्रान्तिवृत्तीयमार्गं प्रपूर्य यत्र विषुववृत्तमुल्लङ्घयति तत्रेदं सूर्येण

1. कौ.ब्रा. 27/6.

विषुववृत्तसंक्रमणविन्दुरेव शारदीय विषुवसंपातः उच्यते। षण्मासानन्तरं पुनरस्यां स्थितौ पृथिव्याः मध्यभागे सूर्यरश्मयः ऋजु पतन्ति तस्मात् समग्रां पृथिव्यां तस्मिन् दिने समरात्रिन्दिवः कालःभवति। वेदेषु एषः दिवसः शारदीयविषुवानिति प्रसिद्धः। यथा पूर्वमेव व्याख्यातम्। एनां घटनां मध्यकालीनाः ज्योतिर्विदः तुलासंपातशब्देन वदन्ति स्म।

नाडीवृत्ताद् विषुववृत्ताद्वा उत्तरदिशि दूरतमस्थाने उत्तरनाभिमेव मध्यकालीनाः ज्योतिर्विदः कर्कसंपातशब्देन वदन्ति स्म। तथैव विषुववृत्ताद् दक्षिणदिशि दूरतमस्थाने दक्षिणनाभिं मध्यकालीनाः ज्योतिर्विदः मकरसंपातशब्देन वदन्ति स्म वर्तमानसमयेऽपि कर्कसंपातमकरसंपातशब्दयोः प्रयोगः मध्यकालवत् प्रचलति। वेदेषु मेषादिशब्दानां प्रयोगः नास्ति।

## वेदेषु नक्षत्राणां ज्ञानं भगणविज्ञानं वा

कालचक्रस्थविज्ञान-विषयकः मूलाधारः नक्षत्राणां विज्ञानमस्ति। ऋग्वेदे विविधेषु स्थलेषु नक्षत्राणां नामानि उल्लिखितानि सन्ति। नक्षत्राणां माध्यमेनैव स्वाक्षोपरि भ्रमन्त्याः सूर्यं परिक्रमन्त्याः पृथिव्याः गतिविषयकं ज्ञानमपि भवति। यथा यजुर्वेदे स्पष्टमस्ति

**"प्रज्ञानाय नक्षत्रदर्शम्"**[1]

**"दिवे खलतिम्"**[2]

**"सूर्याय हर्यक्षम्"**[3]

**"नक्षत्रेभ्यः किर्मिरम्"**[4]

**"चन्द्रमसे किलासम्"**[5]

अर्थात् कालचक्रस्य प्रकृष्टज्ञानाय राष्ट्रव्यवस्थायां राजा राष्ट्राध्यक्षः नक्षत्रदर्शमालभते नियोजयति। ज्योतिर्विज्ञानाय विविध-ग्रहाणां गतिज्ञानाय नक्षत्राणां द्रष्टारं संनियोजयेत् राष्ट्राध्यक्षः। एभिः मन्त्रैः स्पष्टमस्ति यद् वैदिके काले आकाशीयपिण्डानां स्थितिज्ञानाय राष्ट्रव्यवस्था स्थापनार्थं नक्षत्रदर्शि-विदुषां नियुक्तिः भवति स्म। दिवे दैनिकार्तवतापविज्ञानाय ख-गतिम् खगोलविज्ञानिनमालभते सर्वतः प्राप्नोति। प्रतिभापरीक्षणेन राष्ट्राध्यक्षः राष्ट्रव्यवस्थायां संनियोजयेत् इत्यर्थः सूर्याय सूर्यविज्ञानाय हर्यक्षं सूर्यकिरणदोषप्रतिरोधकेन हरितवर्णेनाक्षरक्षकयन्त्रेण सह सूर्यविज्ञानवेत्तारं राष्ट्राध्यक्षः राजा

1. यजुर्वेदः 30/10.
2. यजुर्वेदः 30/21.
3. यजुर्वेदः 30/21.
4. यजुर्वेदः 30/21.
5. यजुर्वेदः 30/21.

आलभते सर्वतः प्राप्नोति राष्ट्रव्यवस्थायां संनियोजयेत् इत्यर्थः। नक्षत्रेभ्यः नक्षत्राणां ज्ञानाय किर्मिरं किरणवर्णानां ज्ञातारम् आलभते राष्ट्राध्यक्षः राजा सर्वतः प्राप्नोति, अर्थात्तदपेक्षितप्रतिभापरीक्षणेन नक्षत्रवेधयन्त्रेण सह राष्ट्रव्यवस्थायां संनियोजयेदित्यर्थः।

चन्द्रमसे चन्द्रस्थितिज्ञानाय, चान्द्रतिथिज्ञानाय, चन्द्रसूर्यग्रहणज्ञानाय किलासं निश्चयेन चन्द्रविज्ञानवेत्तारम्— आलभते सर्वतः प्राप्नोति अपेक्षितप्रतिभापरीक्षणेन राष्ट्राध्यक्षः राजा राष्ट्रव्यवस्थायां चन्द्रवेधकार्ये संनियोजयेदित्यर्थः।

अनन्ताकाशे अनन्तानि नक्षत्राणि सन्ति यथा वक्ति श्रुतिः —

**''यावन्त्येतानि नक्षत्राणि तावन्तो लोमगर्ता यावन्तो लोमगर्तास्तावन्तः सहस्रसंवत्सरस्य मुहूर्ताः।''**[1]

पृथिव्याः द्विविधगत्या सूर्यस्य स्थितिज्ञानानार्थं तथैव खगोले ग्रहोपग्रहाणां स्थितिज्ञानार्थं गतिज्ञानार्थञ्च सर्वेषां नक्षत्राणां ज्ञानस्यावश्यकता न भवति। पृथिव्याः नति-कारणतः सूर्यः खगोले क्रान्तिवृत्ताकारे पथि एव चलन् प्रतीयते। सूर्यं परिक्रमन् ग्रहोपग्रहाः क्रान्तिवृत्तस्योभयतः अष्टांशं दूरान्तरे भ्रमन्तः दृश्यन्ते। तस्माद् ग्रहाणां स्थितिविज्ञानाय चन्द्रसूर्ययोश्च स्थितिज्ञानाय कालचक्रस्य सम्यक् ज्ञानाय वा अस्याः षोडशांशव्यापिमेखलायां दृश्यमाननक्षत्राणामेव ज्ञानस्यावश्यकता भवति। एषा मेखला एव नक्षत्रमण्डलं भचक्रं राशिचक्रं वा।

वेदेषु अस्य भचक्रस्य नक्षत्रमण्डलस्य वा सप्तविंशतिविभागाः कोणात्मकसमानान्तरीयाः ज्ञापिताः सन्ति। एतेषां सप्तविंशतीनां समविभागानां नामानि तत्र स्थितनक्षत्रैः प्रतीयमानाकृत्यानुसारीणि वेदोक्तानि सन्ति। एताः योगताराणां सप्तविंशत्याकृतयः एव सप्तविंशतिनक्षत्राणि उक्तानि श्रुतौ तद्यथा —

**''सप्तविंशतिर्नक्षत्राणि।''**[2]

**''तानि वा एतानि सप्तविंशतिर्नक्षत्राणि।''**[3]

आकाशस्येदं सप्तविंशतिनक्षत्रेषु त्रिभाजनं पूर्णतया वैदिकव्यवस्था वेदेषु नक्षत्राणां निम्ननामानि दृश्यन्ते — कृत्तिका, रोहिणी, मृगशीर्षम् (इन्वका), आर्द्रा (बाहू), पुनर्वसुः तिष्यः, आश्लेषा, मघा, (पूर्वा) फल्गुनी, (उत्तरा) फल्गुनी, हस्तः, चित्रा, स्वाती (निष्ट्या), विशाखा, अनुराधा, (रोहिणी), ज्येष्ठा, मूलः (विचृतौ, मूलबर्हिणी वा), अषाढा (पूर्वाषाढा), अषाढा (उत्तराषाढा), अभिजित्, श्रोणा, श्रविष्ठा, शतभिषक्, प्रोष्ठपदा, रेवती, अश्वयुज्, अपभरणी।

---

1. श.ब्रा. 10/4/4/2.
2. ता.म.ब्रा. 23/23/3;
3. श.ब्रा. 10/5/4/5.

नक्षत्राणां स्पष्टवर्णनं तैत्तिरीयसंहितायामपि विद्यते। तदेवम्[1] —

"कृत्तिका नक्षत्रमग्निर्देवताऽग्ने रुचः स्थ प्रजापतेर्धातुः सोमस्यर्चे त्वा रुचे त्वा द्युते त्वा भासे त्वा ज्योतिषे त्वा। रोहिणी नक्षत्रं प्रजापतिर्देवता। मृगशीर्षं नक्षत्रं सोमो देवता। आर्द्रा नक्षत्रं रुद्रो देवता। पुनर्वसू नक्षत्रमदितिर्देवता। तिष्यो नक्षत्रं बृहस्पतिर्देवता। आश्लेषा नक्षत्रं सर्पा देवता। मघा नक्षत्रं पितरो देवता। हस्तो नक्षत्रं सविता देवता। चित्रा नक्षत्रमिन्द्रो देवता। स्वाती नक्षत्रं वायुर्देवता। विशाखे नक्षत्रमिद्राग्नी देवता। अनुराधा नक्षत्रं मित्रो देवता। रोहिणी नक्षत्रमिन्द्रो देवता। विचृतौ नक्षत्रं पितरो देवता। अषाढा नक्षत्रमापो देवता। अषाढा नक्षत्रं विश्वेदेवा देवता। श्रोणा नक्षत्रं विष्णुर्देवता। श्रविष्ठा नक्षत्रं वसवो देवता। शतभिषङ्नक्षत्रमिन्द्रो देवता। प्रोष्ठपदा नक्षत्रमज एकपाद्देवता। प्रोष्ठपदा नक्षत्रमहिर्बुध्नियो देवता। रेवती नक्षत्रं पूषा देवता। अश्वयुजौ नक्षत्रमश्विनौ देवता। अपभरणी नक्षत्रं यमो देवता। पूर्णापश्चाद्यन्ते देवा अदधुः।"

वेदाङ्गज्योतिषि नक्षत्रज्ञापकसूत्रमप्यस्ति-

"जौ द्रागः रवे श्वे ही रोषा चिन्मूषक्ण्यः सूमाधानः। रे मृ घा स्वा पो जः कृप्योह ज्येष्ठा इत्यृक्षालिङ्गैः।"

## ग्रहाणां गति ज्ञानाय नक्षत्रमण्डलस्य भचक्रस्य वा विविधं विभाजनम्

वृत्ताकारं $360^0$ मितं भमण्डलं भचक्रं वा भवति। तत्र सप्तविंशति-समविभागात्मकानि सप्तविंशतिनक्षत्राणि सन्ति। अतः प्रत्येकं नक्षत्रे $13^0 - 20'$ कलाः भवन्ति। पुनश्च एकस्य नक्षत्रस्य चतुश्चरणानि भवन्ति। एवं भमण्डलस्य भचक्रस्य वा अष्टोत्तरशतचरणानि भवन्ति। प्रत्येकं चरणञ्च $3^0 - 20'$ कलात्मकं भवति। एष एव भमण्डलं द्वादश विभागेषु विभक्तः प्रत्येकः विभागः राशिपदेन कथ्यते। त्रिंशदंशात्मिका राशिः। मध्यकालीनैः ज्योतिर्विद्भिः राशिस्थितनक्षत्रैः तत्कालीनप्रतीयमानाकृतिभिः राशीनामपि द्वादश नामानि परिकल्पितानि। तच्चैवम् — मेषः, वृषः, मिथुनम्, कर्कः, सिंहः, कन्या,

1. तै.सं. 4/4/10.

तुला, वृश्चिकः, धनुः, मकरः, कुम्भम्, मीनः। किन्तु वेदेषु राशीनामेतन्नामानि न हि दृश्यन्ते। यद्यपि वेदे पृथिव्याः परिक्रमणगतिमनुसृत्य अस्य भचक्रस्य क्रान्तिवृत्तस्य वा वासन्तिकविषुवसंपातात् त्रिंशदंशात्मकाः द्वादशविभागाः वर्णिताः सन्ति। किन्तु तत्र आर्तववर्षनियामकानि पृथिव्याः वायुमण्डले सूर्यप्रभावज्ञापकानि खगोले दृश्यमानसूर्यस्थितिज्ञापकानि वा वर्णितानि मधुमासादिद्वादशनामान्येव सन्ति। एवमार्तव सौरमासात्मकनक्षत्रराशौ भचक्रस्य द्वादशविभागात्मकराशौ वा 108/12 = 9 नव नक्षत्रचरणानि भवन्ति। अर्थात् नक्षत्राणां (9) नवचरणात्मकं मासः भवति, नवचरणात्मिका वा नाक्षत्रराशिः भचक्रस्य द्वादशविभागात्मिका।

## वेदेषु भचक्रस्य राशीनां मेषादिनामाकरणेकारणम्

नक्षत्राणि अतिदूरत्वात् अचलमिव प्रतिभान्ति किन्तु मूलतः ते पूर्णतयाचलानि न सन्ति। अतिदूरत्वात् तेषां गतिः स्थितिश्च सहस्राधिकवर्षेषु न लक्षितुं शक्यते तथापि दीर्घकालावधौ तेषामपि दृश्यमानस्थितौ गतिकारणतः परिवर्तनं भविष्यति। तदा राशीस्थानां नक्षत्राणां परिवर्तितस्थितौ विकृताकृतिः आर्तवसंवत्सरव्यवस्थायां भ्रान्त्युत्पादिका न भवतु। एषः विषयः स्पष्टार्थं कालचक्रात्मकक्रान्तिवृत्तस्य वासन्तिकविषुवसंपातात् त्रिंशदंशात्मकद्वादशविभागानां मधुमासादिद्वादशार्तवनामानि कृतानि। न तु तत्र दृश्यमाननक्षत्रैः परिकल्पिताकृतिविशेषाधारितनामानि संवत्सरव्यवस्थायाम् ऋतूणामेव प्रामुख्यात्। नक्षत्राणां चलत्वमाधुनिकैः वैज्ञानिकैरपि ज्ञातम्।

## ग्रहाणां नाक्षत्रकालः

वासन्तिकविषुवसंपातात् चन्द्रपृथिव्यादिग्रहाणां $13^0$ - 20 कलामितं नक्षत्रात्मकमार्गे सूर्यं प्रति परिक्रमणमार्गीयकालावधिः। तत्तद्ग्रहाणां नक्षत्रभोगकालः भवति। एतेषां गगनचारीपिण्डानां गतिः सूर्यात् दूरत्वक्रमेण भिन्ना भिन्ना भवति तस्मात् सर्वेषां ग्रहाणां नक्षत्रभोगकालोऽपि भिन्नो भिन्नः भवति। पृथिव्याः गतिकारणतः पृथिवीतः सर्वेषां ग्रहाणां गतिः पृथिव्याः गत्यापेक्षया तीव्रा मन्दा विपरीता च दृश्यते तदनु एव नक्षत्राणां पार्श्वे ग्रहाणां दर्शनं भवति। अतः नक्षत्राणां गतिगणना पृथिव्याः गतिसापेक्षतयैव क्रियते, पञ्चाङ्गनिर्माणव्यवस्थायां पञ्चाङ्गनिर्मातृभिः।

## चान्द्रमासाः तेषां नाक्षत्रनामानि च

स्थिरनक्षत्राणां विषये यस्मात् नक्षत्रात् गणनारब्धा तस्यैव नक्षत्रस्य पुनरावर्तनपर्यन्तं चन्द्रेण कृता पृथिव्याः परिक्रमायाः कालः चन्द्रमसः भगणकाल उच्यते। तस्य मानं 27 दिनम् 7 घण्टा 43 मिनिट्स 11 सेकिण्ड् मितं भवति। यद्यपि सूर्यविषये चन्द्रेण कृता पृथिव्याः एकस्याः पूर्णपरिक्रमायाः अमातः अमापर्यन्तायाः पूर्णिमातः पूर्णिमापर्यन्ताया वा कालमानं 29 दिनम् 12 घण्टा 36 मिनिट्स 3 सेकिण्ड मितं

भवति। तदेवममायां पूर्णिमायां वा यस्मिन् नक्षत्रे चन्द्रः भवति पृथिवीं परिक्रमन् तं नक्षत्रं यावत् पुनश्चन्द्रः प्राप्नोति तावत्सूर्यं परिक्रमन्ती पृथिवी स्वकक्षायां त्रिशदंशप्रायं मार्गमग्रे गच्छति। तस्मादमायाः पूर्णिमायाः वा पूर्वस्थितिप्राप्तौ 2 दिनम् 4 घण्टा 52 मिनिट्स 52 सेकिण्ड् मितः कालोऽधिको भवति। एवं यस्मिन्नक्षत्रे एका पूर्णिमा कला भवति, अग्रिमा पूर्णिमा कला तद्भगणं प्रपूर्य चन्द्रः यदा नवनाक्षत्रपादात्मकप्रायमेकं नाक्षत्रराशिमग्रे गच्छति तदा भवति। यथा चित्रानक्षत्रस्य प्रथमे चरणे पूर्णिमा कला सत्वे चन्द्रः पृथिवीं परिक्रमन् भचक्रे भ्रमन् भगणं प्रपूर्य अर्थात् पुनः चित्रा नक्षत्रस्य प्रथमं चरणं प्राप्य तत अग्रेचरन् चित्रानक्षत्रस्य अवशिष्टं चरणत्रयं प्रपूर्य स्वातीनक्षत्रमपि चलित्वा विशाखानक्षत्रस्यापि प्रथमं चरणं यात्वा द्वितीयं चरणं यदा प्राप्नोति तदा अग्रिमा पूर्णिमा कला भवति।

इदमप्यत्रावधेयं पृथिवी दीर्घवृत्तकक्षायां सूर्यं परिक्रमति। अतः वासन्तिकविषुवसंपातात् स्वदीर्घवृत्तकक्षायां सूर्यं क्रमशः दूरात् दूरे परिक्रमन्ती पृथिवी त्रिंशदंशात्मकमार्गस्य क्रमशः वृद्धिकारणात् तं त्रिंशदंशात्मकमार्गगमने अधिकं कालं यापयति। तद्यथा दूरतमकक्षायाः जातौ शुक्रशुचिमासौ क्रमशः दिनादिः 31 दिनम् 11 घण्टा 4 मिनिट्स 26 सेकिण्ड् तथा 31 दिनम् 15 घण्टा 17 मिनिट्स 14 सेकिण्ड मितौ कालात्मकौ भवतः। तथैव शारदीयविषुवसंपातात् स्वलघुकक्षायां सूर्यं समीपात् समीपे परिक्रमन्ती पृथिवी त्रिंशदंशात्मकमार्गस्य क्रमशः संकुचनकारणात् तं मार्गम् अल्पे काले गच्छति। तद्यथा समीपतमकक्षातः जातौ सहसहस्यमासौ क्रमशः दिनादिः 29 दिनम् 10 घण्टा 52 मिनिट्स 50 सेकिण्ड् तथा 29 दिनम् 7 घण्टा 14 मिनिट्स 14 सेकिण्ड् मितौ कालात्मकौ भवतः। एवं वासन्तिकविषुवतः एकस्मिन्नक्षत्रे सूर्यस्य दर्शनकालावधिवर्धनात् चन्द्रस्य च भगणं प्रपूर्य पूर्णिमाकला प्राप्तिगतिस्तु सामान्यात् तत्र पूर्णिमातः पूर्णिमापर्यन्तमन्तरं सूर्यस्य नाक्षत्रनवचरणात्मकराशितः न्यूनत्वात् चित्रा पूर्णिमातः क्रमशः श्रवणपूर्णिमापर्यन्तमेकस्यैव नक्षत्रान्तरेण पञ्चपूर्णिमाकलाः भवन्ति। ताश्च क्रमशः चित्राविशाखाज्येष्ठाषाढ़ाश्रवणनक्षत्राणामुपरि भवन्ति। ततश्च नक्षत्रद्वयमतीत्य भाद्रपदनक्षत्रे पूर्णिमा कला भवति। एवमुक्तव्यवस्थाद्वारेण क्रमशः अश्विनी-कृत्तिका-मृगशिरा-पुष्य-मघा-फल्गुनीनक्षत्रेषु चन्द्रप्राप्तौ पूर्णिमा कला भवति।

पुनश्च यदा वासन्तिकविषुवसंपातिके अहोरात्रे फल्गुनीनक्षत्रेपूर्णिमा कला भवति तदा भाद्रपदनक्षत्रे सूर्यो भवति। नाक्षत्रमण्डले भचक्रे वा परस्परं विपरीतदिशायां सम्मुखस्थौ फल्गुनीभाद्रपदनक्षत्रौ स्तः। तत्र यदा चन्द्रः पृथिवीं परिक्रमन् स्वसूर्ययोर्मध्ये पृथिवीं करोति। पृथिव्याः उभयतः सूर्यचन्द्रौ $180^0$ ऋजुकोणे भवतः तदैव पूर्णिमाकला। अतः फाल्गुनीनक्षत्रे पूर्णिमा चेत्सूर्यः भाद्रपदनक्षत्रे एव।

## अधिकचान्द्रमासव्यवस्था

अत्र वासन्तिकविषुवसंपाते फल्गुनीनक्षत्रे पूर्णिमाकला प्राप्तिः ततः आगामिघटनाक्रमः विमृश्यते। स्थिरनक्षत्राणां विषये सूर्यं परिक्रमन्ती पृथिवी यस्मान्नक्षत्रात् चलित्वा पुनः तमेव नक्षत्रं प्राप्नोति तावत्कालमेकः नाक्षत्रवर्षः कथ्यते। तस्य मानं दिनादिः 365 दिनम् 6 घण्टा 12 मिनिट् 36 सेकिण्ड् मितं भवति। एतस्मिन्काले पृथिवी भाद्रपदनक्षत्रात् सूर्यं परिक्रमन्ती पुनः भाद्रपदनक्षत्रमेव प्राप्नोति। चन्द्रश्च ततः एव पृथिवीं परिक्रमन् द्वादशपरिक्रमां प्रपूर्य त्रयोदश्यां परिक्रमायां भवति किन्तु तत्र चन्द्रस्य पूर्णिमा कला न भवति। तदेवं चन्द्रस्य द्वादशमासात्मिकायाः द्वादशपरिक्रमायाः कालः दिनादि 354 दिनम् 8 घण्टा 48 मिनिट 38 सेकिण्ड् मितं भवति। तच्च उपर्युक्त नाक्षत्रवर्षकालाद् 10 दिनम् 22 घण्टा 33 मिनिट 36 सेकिण्ड् मितं न्यूनं भवति। एवं द्वादशी फल्गुनी पूर्णिमाकला नाक्षत्रवर्षादस्याः कालावधेः पूर्वमेव प्राप्ता। त्रयोदशी चित्रापूर्णिमाकला च 18 दिनम् 14 घण्टा 2 मिनिट 27 सेकिण्ड् मिते कालान्तरे नाक्षत्रवर्षात् भविष्यति। एष एव द्वितीयनाक्षत्रवर्षस्य प्रथमा पूर्णिमाकला। द्वितीये नाक्षत्रवर्षे च फल्गुनी पूर्णिमा 21 दिनम् 21 घण्टा 7 मिनिट 12 सेकिण्ड् मितं कालं वर्षपूर्तितः पूर्वमेव भविष्यति। चित्रा पूर्णिमा च 7 दिनम् 15 घण्टा 28 मिनिट 51 सेकिण्ड् वर्षपूर्त्यनन्तरं भविष्यति। स्पष्टमस्ति तृतीये नाक्षत्रसौरवर्षे एका अधिका पूर्णिमा कला भविष्यति। अस्मिन् तृतीये वर्षे एषाधिकापूर्णिमा कला योगेनापि वर्षस्य त्रयोदशी पूर्णिमा कला 3 दिनम् 7 घण्टा 4 मिनिट 45 सेकिण्ड् मितं वर्षपूर्तितः पूर्वमेवायास्यति। अतः एषाधिका वर्षस्य प्रथमचरणे एव काचिद् न तु अन्तिमे।

इदमप्यत्रावधेयं यदेषा एकाधिका पूर्णिमाकला निर्धारितचित्रादिनक्षत्राणामुपरि भवितुं नार्हति। भचक्रस्य पृथिव्याः परिक्रमणदृष्ट्या त्रिंशदंशात्मकद्वादशविभागादेव नाक्षत्रसौरमासानां व्यवस्था। सूर्यं परिक्रमन्ती पृथिवी, पृथिवीं परिक्रमतश्च चन्द्रोऽनयोः गत्या पृथिव्याः उभयतः यदा सूर्याचन्द्रमसौ ऋजुकोणे भवतः तदैव पूर्णिमा कला भवति। पृथिव्याश्चन्द्रेण कृता द्वादशपरिक्रमायां फाल्गुन्याद्युपरोक्तद्वादशनक्षत्रेषु एतादृशी स्थितिः नाक्षत्रवर्षे द्वादशवारं सूर्य चन्द्रमसोः परस्परविपरीतदशायां भचक्रे सम्मुखस्थनक्षत्राणामुपरि दृश्यमाने भवति। द्वादशपरिक्रमारूपद्वादशचान्द्रमासानां कालः नाक्षत्रसौरवर्षाद् उक्तावधिकः न्यूनत्वात् तृतीये वर्षे एषा एकाधिका पूर्णिमा कला भवति। अस्मिन् गणिते तृतीये वर्षे अनयाधिकपूर्णिमाकलया यदा चान्द्रवर्षः नाक्षत्रसौरवर्षतः साम्यं प्राप्स्यति तदा जाता एषाधिका पूर्णिमाकला निर्धारितद्वादशनक्षत्रेषु प्राप्तव्यविशाखानक्षत्रात् पूर्वं स्वातीनक्षत्रे एव चन्द्रे भविष्यति। अग्रिमा पूर्णिमाकला च स्वत एव विशाखानक्षत्रे आयास्यति। एतत्सर्वं विज्ञानं प्राकृतिकं मनसि निधाय ऋषिभिः चान्द्रमासानां द्वादशनामानि निर्धारित-

फल्गुन्यादिद्वादशनक्षत्राणामुपरि चन्द्रस्य पूर्णिमाकलाद्वारेण कृतम्। निर्धारितद्वादशनक्षत्रेषु पूर्णिमाकला अप्राप्तौ अधिकचान्द्रमासेन चान्द्रवर्षः नाक्षत्रवर्षे परिणमते।

## चान्द्रक्षयमासव्यवस्था

पुनश्चः शारदीयविषुवसंपातात् स्वलघुवृत्तकक्षायां सूर्यं समीपात् समीपे परिक्रमन्ती पृथिवी त्रिंशदंशात्मकमार्गस्य क्रमशः सङ्कुचनकारणात् हेमन्तर्तौ लघुतमकालावधिकाः सहसहस्यतपमासाः यदा भावयति तदा ततः सद्यः एव पूर्वप्राप्तेऽधिकमासे एतेषां नाक्षत्रसौरमासानां चान्द्रमासात् न्यूनकालावधिकत्वात् निर्धारितनक्षत्रमतीत्य पूर्णिमाकला भवति। तदा तस्य चान्द्रमासस्य क्षयमासः क्रियते। यथा यस्मिन् वर्षे हेमन्तर्तौ अधिकमासानन्तरं चान्द्रक्षयमासः भवति तदा पुनः तस्मिन् वर्षाभ्यन्तरे एव अधिकमासः भवति। एवं प्रकारेण चान्द्रमासानां व्यवस्थितनाम्नैव अधिकमासक्षयमासयोः व्यवस्था, चान्द्रवर्षस्य नाक्षत्रसौरवर्षे परिणतिश्च भवति।

## अयनगतिः, तस्याः कारणञ्च

यथा पूर्वमेवोक्तं यत् स्थिरनक्षत्राणां विषये सूर्यं परिक्रमन्ती पृथिवी यस्मात् नक्षत्रात् गणनारब्धा पुनः तमेव नक्षत्रं यावत्काले प्राप्नोति तावत्कालमेकः नाक्षत्रवर्षः कथ्यते, तस्य मानं 365 दिनम् 6 घण्टा, 12 मिनिट्स 36 सेकिण्ड् मितं भवति। किन्तु वेदेषु निर्धारित आर्तववर्षः सावनवर्षो वा वासन्तिकविषुवसंपातादारभ्य वासन्तिकविषुवसंपातस्यैव पुनरावर्तनपर्यन्तं भवति, यथा मन्त्रानुद्धृत्य पूर्वमेव व्याख्यातम्। तस्य मानं 365 दिनम् 5 घण्टा 48 मिनिट्स 46 सेकिण्ड् मितं भवति। तदेवं यस्मिन्नक्षत्रे यस्मिन् बिन्दौ वासन्तिकविषुवसंपातः शारदीयविषुवसंपातो वा घटितः पुनरावर्त्य वासन्तिकविषुवसंपातस्य शारदीयविषुवसंपातस्य वा घटनापश्चात् 23 मिनिट्स 50 सेकिण्ड् मितं कालानन्तरं तस्य नक्षत्रस्य तद्बिन्दुरायाति। एवमेष विषुवसंपातः स्थिरनक्षत्राणां विषये प्रतिवर्षं पूर्वतः पश्चिमं किञ्चिच्चलति। एतद्विचलनमेव अयनगतिः।

यद्यपि ग्रहाणां दृष्टिकोणेन सूर्योऽचलः तस्य दैनिकगतिः वार्षिकीगतिश्च पृथिव्याः द्विविधगत्या एव दृश्यते। तथापि एका तृतीया खगतिः सूर्ये विद्यते। मूलतः एष सूर्यः स्वीयेन समग्रेण सौरमण्डलेन सहैव महद्वृत्ताकारे पूर्वतः पश्चिमं गच्छन्नस्ति। सूर्यस्यातिदूरत्वादेषा गतिर्न लक्ष्यते। किन्तु नक्षत्राणां ततोऽप्यत्यन्त-दूरत्वादेषा गतिः किञ्चिद् विषुवविचलनात्मिका लक्ष्यते। सूर्यस्य सर्वे ग्रहाः सूर्यं पश्चिमतः पूर्वदिशि परिक्रमन्ति। अतः एकस्मिन् विषुवसंपातघटनाकाले दृश्यमाननक्षत्रबिन्दुतः सूर्यं पश्चिमतः पूर्वं वामतः परिक्रमन्ती पृथिवी पुनरावर्त्य यावत् तं नाक्षत्रबिन्दुं प्राप्नोति, ततः किञ्चिद् पूर्वमेव स्वखगतौ सूर्यस्य पूर्वतः पश्चिमगमनात् तद् विषुवसंपातः घटते। एवं सूर्यस्य खगतिरेव अयनगतेः कारणम्।

केचन विद्वांसः पृथिव्या एव तृतीया गतिः अयनगतिरिति चिन्तयन्ति। तेषां मते $23^0$ - 28' कला स्वाक्षोपरि विनता घूर्णन्ती सूर्यं परिक्रमन्ती पृथिवी एका तृतीया गतिरपि करोति। अस्यां गत्यां पृथिव्या अक्षस्तु सदैवं ऊर्ध्वाधर रेखातः $23^0$-28' कला मितां प्रवणतां तु भजते एव, परन्तु उर्ध्वस्था पार्थिवाक्षकोटिः सुमेरुः वृत्ताकारे भ्रमति यद्यपि अधस्था पार्थिवाक्षकोटिः कुमेरुः अक्षकेन्द्रे एव नृत्यति। यथा घूर्ण्यमानस्य भ्रमरकस्य (लट्टूनामक्रीडनकविशेषस्य) भ्रमरकाक्षस्य भूस्थिता कोटिस्तु भुवि एकस्मिन्नेव बिन्दौ भवति परन्तु अपरा ऊर्ध्वस्था कोटिरेकस्मिन् वृत्ते परिभ्रमति। तथैव पृथिव्याः ऊर्ध्वस्था सुमेरुः वृत्ताकारे भ्रमति। तदनुसारं भ्रूमध्य-सुमेरु-लग्नरेखा-खगोलं यत्र स्पृशति स काल्पनिक- बिन्दुरपि परिभ्रमति। अस्य काल्पनिकबिन्दो समीपतमं नक्षत्रं ध्रुवः उच्यते। ध्रुवस्य परिक्रमणकालः 25800 वर्षमितोऽस्ति। यतो ध्रुवपरिभ्रमणात् विषुवसंपातोऽपि भ्रमति। अतो विषुव संपातस्य नाडीवृत्ते पूर्णपरिक्रमणं 25800 वर्षे भवति। मध्यकाले कस्मिश्चिद् समये विषुवसंपातः अश्विनीनक्षत्रे आसीत्। अधुना विषुवसंपातस्य अश्विनीनक्षत्रादन्तरं प्रायः $24^0$-18' कला मितमस्ति। इदमन्तरं वर्तमानकालीनैः भारतीयज्योतिर्विद्भिः अयनांशः इति कथ्यते अत्र गणितेन $\frac{25800 \times 24}{360}$ = 1720 वर्षाणि + 18' कलायाः 21 बर्षाणि योगः 1741 वर्षाणि पूर्वमश्विनीनक्षत्रे वासन्तिकविषुवसंपात आसीत् ।

## आर्तववैदिकवर्षनाक्षत्रवर्षयोर्भेदः

प्राकृतिकार्तववैदिकवर्षारम्भः वासन्तिकविषुवतः भवति। अस्य गणना वासन्तिकविषुवादारभ्य वासन्तिकविषुवपर्यन्तमेव क्रियते। एतस्य मानं दिनादिः 365 दिनम् 5 घण्टा 48 मिनिट्स 46 सेकिण्ड् मितमस्ति।

नाक्षत्रसौरवर्षस्य गणना कस्मिंश्चित् काले वासन्तिकविषुवसंपातः अश्विनीनक्षत्रे प्राप्ते मध्यकालीनैर्ज्योतिर्विद्भिः प्रारब्धा। तैः अश्विनीनक्षत्रादारभ्य अश्विनीनक्षत्रपर्यन्तं समग्रस्य भचक्रस्य द्वादशविभागाः कृताः त्रिंशदंशात्मकाः। तत्र त्रिंशत् त्रिंशदंशेषु स्थितनक्षत्रराशिभिः प्रतीयमानया आकृत्या तैः तेषां द्वादशराशिनामानि मेषवृषमिथुनकर्कसिंहकन्यातुला-वृश्चिकधनुमकरकुम्भमीनानि कृतानि। एवं वेदे सप्तविंशतिनक्षत्रेषु विभक्तभमण्डलस्य द्वादश-राशिनामान्यपि जातानि। एकराशितः द्वितीयराशिं प्रति सूर्यस्य संक्रमणं संक्रान्ति-पदेनोक्तम्। तदेवमश्विनीनक्षत्रे तस्मिन् समये वासन्तिकविषुवसंपातः वासन्तिकविषुवक्रान्तिपातो वा मेषसंक्रान्तिपदेन मेषसंपातपदेन चोक्तम्। तथैव शारदीयविषुवं तुलासंक्रातिपदेन तुलासम्पातपदेन च। एवं मेषसंक्रान्तितः मेषसंक्रान्तिपर्यन्तमेकं नाक्षत्रवर्षं 365 दिनम् 6 घण्टा 12 मिनिट्स 36 सेकिण्ड् मितं भवति। अस्य मानं

विषुवक्रान्तिपातिकार्तववैदिकवर्षात् अयनगतिकारणात् 23 मिनिट्स 50 सेकिण्ड् मितमधिकं भवति। अधुना विषुवसंपातस्य अश्विनीनाक्षत्रात् मेषसंपाताद्वा अन्तरं $24^0$/ 18 कलामितं जातममस्ति। अतः वासन्तिकविषुवसंपातात् पञ्चविशतितमे दिवसे अश्विनीनक्षत्रे सूर्यः दृश्यते मेषसंक्रान्तिर्वा भवति। पूर्वोक्तगणनया 3370 तमे कलियुगाब्दे वासन्तिकविषुवसंपातः अश्विनीनक्षत्रे मेषसंक्रान्तौ वा जातः आसीत्। अतः एवमपि भवितुं शक्नोति यत् यदा अश्विनीनक्षत्रे सूर्यसंक्रान्तौ वासन्तिकविषुवप्राप्तं ततः वर्तमानपञ्चाङ्गव्यवस्था संक्रान्तिप्रधाना चान्द्रमासप्रमुखा प्रारब्धा। प्रारम्भिकशताव्द्यां वैदिकार्तव वर्षात् नाक्षत्रवर्षे स्वल्पान्तरत्वात् सामान्यत्वात् तत्र ध्यानं न दत्तं विद्वभिः। किन्तु वर्तमानसमये तदन्तरं चतुर्विंशतिदिनात्मकं जातमस्ति। एवं वैदिकवैज्ञानिक- व्यवस्थानुकूल्यं न भजते एषा नाक्षत्रवर्षव्यस्था। ऋतुनियमाच्च भ्रष्टा अतो पुनर्विमर्शनीया।

वेदेषु समरात्रिन्दिवकालात्मकविषुवदिवसान्नववर्षारम्भणात् पूर्णतया दोषाभावः। वैज्ञानिकं शुद्धत्वं सदैव आसीत्, अस्ति, स्थास्यति च।

## वैदिकार्तवमासचान्द्रमासयोर्भेदः

वेदमन्त्राणां व्याख्यानपूर्वकं यथा स्पष्टं यत् कालचक्रस्य विषुवतः द्वादश-समविभागेन आर्तवमासव्यवस्थास्ति वेदे। मधुमासादयः तत्र द्वादशार्तवनामानि प्रकृतिपराणि वैज्ञानिकानि।

चान्द्रमासानां नामानि तु द्वादशनक्षत्राणामुपरि द्वादशपूर्णिमाकलाश्रितानि तृतीये वर्षे अधिमासयुतानि। दीर्घकालावधौ यदा कदा क्षयमासयुतान्यपि च। नाक्षत्रपूर्णिमया नाक्षत्रवर्षपराणि न च आर्तवानि आर्तववर्षपराणि वा।

अर्वाचीनेषु चान्द्रमासानां पर्यायवाचित्वेन वैदिकार्तवमासानां कथनं पूर्णतया हास्यास्पदमवैज्ञानिकञ्च। यस्मिन्नक्षत्रे सूर्यः भचक्रे दृश्यते तस्य सम्मुखस्थविपक्ष-स्थित-नक्षत्रे एव चान्द्रपूर्णिमा कला भवति। अत चान्द्रमासैः सूर्यसम्बन्धिवैदिकार्तवमासानां कथनमवैज्ञानिकम्।

वेदेषु ब्राह्मणेष्वपि च कुत्रापि चान्द्रमासैः वर्षारम्भणं न दृश्यते। अपितु वर्षारम्भे रात्रिं वसति दीक्षायां यत्र चान्द्रपूर्णिमायाः आह्लदकत्वेन महत्वमुक्तं तत्रैव इदमपि स्पष्टमुक्तं यत् विषुवदिवसानन्तरप्रथमप्राप्तपूर्णिमा एव ग्राह्या न तु चान्द्रमासप्रामुख्येन तद्यथा तैत्तिरीयसंहितायाम् – "**संवत्सराय दीक्षिष्यमाणा एकाष्टकायां दीक्षेरन्नेषा वै संवत्सरस्य पत्नी यदेकाष्टका। एतस्या वा एष एतां रात्रिं वसति ............ फल्गुनीपूर्णमासे दीक्षेरन्। मुखं वा एतत्संवरस्य यत् फल्गुनी पूर्णमासः। मुखत एव संवत्सरमारभ्य दीक्षन्ते। तस्यैकैव निर्या यत्साम्मेध्ये विषुवान्त्संपद्यते। चित्रापूर्णमासे दीक्षेरन् , मुखं वा एतत्संवरस्य यच्चित्रापूर्णमासो मुखत एव**

**संवत्सरमारभ्य दीक्षन्ते तस्य न काचन निर्या भवति।"[1]**

उद्धृतमन्त्रे स्पष्टमुक्तमस्ति यत् रात्रिप्रमुखदीक्षायां संवत्सरारम्भस्य पूर्णिमा ग्राह्या। संवत्सरारम्भे फल्गुनी पूर्णिमा अस्ति चेत् सा ग्राह्या। किन्तु फल्गुनी पूर्णिमा पश्चात् सम्वत्सरारम्भकः वासन्तिकः विषुवानस्ति चेत् सा वर्षारम्भस्य प्रथमा पूर्णिमा न अतो निन्द्या, अर्थात् संवत्सरयागे न ग्राह्या। अपितु तस्यां स्थितौ विषुवदिवसानन्तरप्राप्ता चित्रापूर्णिमा ग्राह्या। कारणमत्र समरात्रिन्दिवकालात्मकः वासन्तिकः विषुवान् भवति। वासन्तिकविषुवत एव संवत्सराम्भणात् न तु चान्द्रमासात्। अतो वासन्तिकविषुवतः प्राप्त-पूर्णिमाकलायुक्तः प्रथमपूर्णचन्द्रः संवत्सरस्य मुखवदस्ति।

इदमप्यत्रावधेयं यदत्र फल्गुनीपूर्णिमायुक्तः चित्रापूर्णिमायुक्तो वा चान्द्रमासो मधुमासत्वेन नोक्तः, कारणमत्र मधुमासस्तु वासन्तिकविषुवत एव प्रारभ्यते तत्र शङ्काया अवकाश एव नास्ति। अर्थात् मधुमासे या प्रथमा पूर्णिमा कला भवति चन्द्रस्य सा फल्गुनीपूर्णमासस्य चित्रापूर्णमासस्य वा भवतु। सा एव पूर्णिमा कला संवत्सरसत्रयागे ग्राह्या। अस्मिन् यागसत्रे रात्रौ दीक्षा ग्राह्यत्वात् पूर्णिमाकलायाः अपेक्षा। **"रात्रिर्वै चन्द्रमाः"[2]** इति स्पष्टमुक्तत्वात् ।

रात्रौ चान्द्रमासानां पूर्णिमाकलायाश्च महत्त्वं बाहुल्येन दृश्यते। तत्र विषुवदिवसानन्तरप्राप्तप्रथमपूर्णिमायाः रात्रिः संवत्सरस्य मुखस्वरूपा स्वीकृता दृश्यते। तद्यथा शतपथेऽपि —

**"एषा ह वै संव्वत्सरस्य प्रथमा रात्रिर्यत्फाल्गुनी पौर्णमासी योत्तरैषोत्तमा या पूर्व्वा मुखत एव तत्संवत्सरमालभते।"[3]**

अत्र वैदिकमन्त्राणां विमर्शात् स्पष्टं यत् मधुमासादिः आर्तवमासव्यवस्था प्रकृतेः आर्तवसंवत्सरस्वरूपज्ञापिका दिवसप्रधाना वैदिककालचक्रविज्ञानस्य प्रथमा मुख्या व्यवस्था।

चैत्रादिव्यवस्था तु रात्रौ आह्लादकारि-चन्द्रकलायाः ज्ञापिका पूर्णिमाकलाप्रधाना अपरा द्वितीया वैज्ञानिकी व्यवस्था। एषा द्विविधव्यवस्था सहचरी व्यवस्थापि दिवारात्रिवद् भिन्ना भिन्ना। इति स्पष्टतया ज्ञातव्यम् ।

मध्यकालाद् प्रामुख्येन प्राप्ते चान्द्रमासे वैदिकार्तवसंवत्सरव्यवस्थाविज्ञानं लुप्तप्रायं जातम्। मध्यकालाद् वर्तमानकालपर्यन्तं वेदभाष्यकाराः मधुमासादिवैदिकार्तवमासानां भाष्ये चैत्रादिचान्द्रनाक्षत्रमासानामेव प्रयोगं कृतवन्तः तत्तु

1. तै.सं. 7/4/8.
2. श.ब्रा. 6/2/2/18.
3. श.ब्रा. 6/2/2/18.

असावधानतावशात् मध्यकालिकज्योतिषप्रभावाच्च। तदर्थं मन्त्राणां सूक्ष्मानुशीलनस्य यदपेक्षा आसीत् तस्याः अभावः दृश्यते। महद्वेदविज्ञानरत्नाकरे प्रविश्य स्वसामर्थ्यानुसारं किञ्चित् प्राप्तम्, ततः एव किञ्चित् प्रस्तुतेः अस्त्येषः प्रयासः।

चन्द्रकलाभिः समुद्भूतचान्द्रमासस्य चन्द्रकलानामुत्पत्तिक्रमेण सम्यक् विमर्शः जातः। वैदिकार्तवमासानां उत्पत्तिक्रमोऽपि मन्त्राणां व्याख्यानपूर्वकं विमर्शितम् । अधुना वैदिककालचक्रेण प्रदर्शितमध्वादिमासानां कालविभागः क्रियते।

## वैदिककालचक्रमनुसृत्य आर्तवमासानां कालः

**द्वादश प्रधयश्चक्रमेकं त्रीणि नभ्यानि क उ तच्चिकेत।**
**तस्मिन्त्साकं त्रिशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः॥**

इत्येतस्य कालचक्रनियामकमन्त्रस्य व्याख्याने ब्राह्मणानामपि व्याख्यानपूर्वकं यथा स्पष्टं कृतं यत् स्वाक्षोपरि घूर्णन्ती $23^0$-28' कला विनता पृथिवी दिवारात्रं कुर्वती सूर्यं परिक्रमन्ती चक्रमेकं स्वदीर्घवृत्तपथात्मकं निर्माति। पृथिव्याः विनतिकारणात् अस्य चक्रस्य स्वप्रकाशफलकाश्रितानि त्रीणि नभ्यानि क्रमशः विषुवफलकनाभिः उत्तरफलकनाभिः दक्षिणफलकनाभिश्च भवन्ति। तत्र च विषुवफलकाश्रितं वासन्तिकविषुवं शारदीयविषुवञ्च विषुवद्वयं ऋजुकोणे स्थितं चक्रस्य द्विविधविभागात्मकं भवति। $360^0$ षष्ट्युत्तरत्रिशतमंशात्मकं चक्रं भवति। अस्य चक्रस्य विषुवतः त्रिंशत् त्रिंशदंशात्मकाः द्वादश विभागा एव मधुमासाद्युपर्युक्ताः द्वादश मासाः भवन्ति।

तत्र च वासन्तिकविषुवतः सूर्यं परिक्रमन्ती पृथिवी स्वपरिक्रमणदीर्घचक्रात्मक-कक्षायां क्रमशः सूर्यात् दूरे गच्छन्ती मार्गप्रसारात् $180^0$ मिते परिक्रमणमार्गेऽधिकं समयं नयति। विषुवतः नवत्यंशीयमार्गे मासान् दिवसान् च वर्धयन्ती मधुमासादिमासत्रयं कुर्वती शुक्रमासस्य अन्तिमे दिवसे सूर्यस्य दूरतमस्थाने **उत्तरनाभिं** प्राप्नोति। अस्मिन्दिने पृथिव्याः उत्तरीगोलार्धे दीर्घतमः दिवसः लघुतमा च रात्रिर्भवति। तत पुनः प्रसरितकक्षायामवशिष्टनवत्यंशीयमार्गे शुचिमासादित्रयः मासाः कक्षासंकोचक्रमेण मासानां दिवसानाञ्च संकोचङ्कुर्वती नभस्यमासस्य समाप्तौ इषमासारम्भे च शारदीयविषुवं **विषुवनाभिं** समरात्रिन्दिवकालात्मकं प्राप्नोति। एतद्विषुवं वर्षस्य मध्ये भवति।

शारदीयविषुवतः अग्रे दीर्घपरिक्रमणचक्रात्मके $180^0$ मिते लघ्वर्धभागे क्रमशः सूर्यं समीपतः परिक्रमन्ती मार्गसंकोचक्रमेण क्रमशः मासान् दिवसान् च संकोचयन्ती नवत्यंशीयमार्गे इषमासादिमासत्रयं कुर्वन्ती सहमासस्य अन्तिमे दिवसे सूर्यस्य समीपतमस्थाने **दक्षिणनाभिं** प्राप्नोति। अस्मिन्दिने पृथिव्याः उत्तरीगोलार्धे लघुतमः दिवसः दीर्घतमा च रात्रिर्भवति। इतोऽग्रे पुनः संकुचितकक्षायामवशिष्टनवत्यंशीयमार्गे किञ्चित् किञ्चित् मार्गप्रसारक्रमेण मासान् दिवसान् च वर्धयन्ती सहस्यादिमासत्रयं कुर्वती तपस्यमासस्य

अन्तिमे दिवसे वर्षं पूरयन्ती वासन्तिकं विषुवं **विषुवनाभिं** समरात्रिन्दिवकालात्मकं प्राप्नोति। इतः एव नव नव कुसुमैः नव नव किसलयैः मधुरसभरिता प्रकृतिः नववर्षारम्भङ्करोति।

तत्र दीर्घवृत्तात्मके प्रतित्रिंशदंशीयमार्गे मधुमासादिक्रमेण परिक्रमणयात्राजनितानां द्वादशमासानां कालावधिरियम् —

| ऋतुः | मासः | दिनम् | घण्टा | मिनट | सेकेण्ड् |
|---|---|---|---|---|---|
| **वसन्तः** | 1. मधुमासः | 30 | 10 | 21 | 14 |
| | 2. माधवमासः | 31 | 00 | 12 | 50 |
| **ग्रीष्मः** | 3. शुक्रमासः | 31 | 11 | 08 | 26 |
| | 4. शुचिमासः | 31 | 15 | 17 | 14 |
| **वर्षा** | 5. नभमासः | 31 | 11 | 02 | 26 |
| | 6. नभस्यमासः | 30 | 21 | 54 | 24 |
| **शरदः** | 7. इषमासः | 30 | 08 | 56 | 50 |
| | 8. अर्जमासः | 29 | 20 | 06 | 02 |
| **हेमन्तः** | 9. सहमासः | 29 | 10 | 52 | 50 |
| | 10. सहस्यमासः | 29 | 07 | 25 | 14 |
| **शिशिरः** | 11. तपमासः | 29 | 11 | 24 | 26 |
| | 12. तपस्यमासः | 29 | 21 | 06 | 50 |
| **ऋतूणां योगः वर्षकालावधिः** | | **365** | **05** | **48** | **46** |

उपर्युक्तमासानां स्पष्टकालावधेः दर्शनात् स्पष्टमस्ति यत् मधुमासादारभ्य वासन्तिकविषुवतः शारदीयविषुवपर्यन्तम् उत्तरावर्तीयेषु षड्मासेषु मधुमासादतिरिक्त पञ्चमासानां कालः प्रत्येकः सार्धत्रिंशद्दिनादधिकः तत्रापि चतुर्मासानामेकत्रिंशद्दिनादप्यधिकः वर्तते। तथा इषमासादारभ्य शारदीयविषुवतः वासन्तिकविषुवपर्यन्तं दक्षिणावर्तीयेषु षड्मासेषु इषमासादतिरिक्त- पञ्चमासानां कालः प्रत्येकः त्रिंशद्दिनादपि न्यूनः वर्तते। इषमासस्य च त्रिंशद्दिनात् किञ्चिदेवाधिकः। सोऽपि उत्तरावर्तीय प्रत्येकमासात्तु न्यून एव। अतः दैनिकव्यवहारसारल्याय दक्षिणावर्तीय-सर्वेषां मासानां प्रत्येकस्य कालः त्रिंशद्दिनात्मकः गणनीयः। उत्तरावर्तीय सार्धत्रिंशद्दिनादधिककालात्मकपञ्चमासाः प्रत्येकः एकत्रिंशद्दिनात्मकः गणनीयः। एवं 365 पूर्णमहोरात्रं भवति। 5 घं. 48 मि. 46 सें मितः कालः पूर्णदिवसादधिकः प्रतिवर्षमवशिष्यते एषः षड् घंटा 11 मि. 14 सें. न्यूनं भवति। चतुर्वर्षेषु 44 मि. 14 सें. मितः न्यून एषः कालः अहोरात्रात् किञ्चिदेव न्यूनत्वात् एष अधिकाहवर्षश्चतुर्थः भवति। अस्मिन् अधिकाहे वर्षे एष अधिकदिवसः

# वैदिकं कालचक्रम्

## नववर्षारम्भकः वासन्तिकविषुवान्




## वर्षमध्यस्थः शारदीयविषुवान्

मासमानम् - दि./घं./मि./से.

## पृथिव्याः घूर्णने परिक्रमणे च गतिमत् कालचक्रम्

ऋगवेदः, मण्डलम् 1/164/48, अस्य मन्त्रस्य दीर्घतमा ऋषिः।

संवत्सरात्मा कालः देवता। स्वराड् पंक्तिश्छन्दः। पञ्चमः स्वर

वासन्तिकविषुवादनन्तरमेव मधुमासे युङ्क्ते । विषुवमेव वर्षारम्भस्य निर्धारकत्वात् । प्रतिवर्षं 11 मि. 14 सें. मितः कालः यत् षडघंटा न्यूनं भवति। तस्य योगात् 128 वर्षानन्तरं तन्न्यूनत्वमहोरात्ररूपत्वाद् — अधिकाहः भवन् चतुर्थः वर्षः अधिकाहः न भवति।

वस्तुतः समरात्रिन्दिवकालात्मकस्य वासन्तिकविषुवसम्पातस्य स्पष्टप्राप्त्य-नन्तरमेव नववर्षारम्भणात् शुद्धता तु स्वयमेवायाति। स्पष्टे वर्षमध्यस्थे शारदीयविषुवे च दोषाय निरवकाशात्। प्राचीने वैदिके काले वासन्तिकविषुवमहोत्सवः शारदीयबिषुवमहोत्सवश्च भवति स्म। विषुवस्पष्टज्ञानस्य महत्त्वं तदेव सूच्यते। ख्रिस्तगणनायां क्रमशः 21 मार्च वासन्तिकविषुवम् 23 सितम्बरशारदीय विषुवञ्च भवति। तथैव 31 शुक्रमासे तदनु ख्रिस्तीय 21 जूनमासे उत्तरीगोलार्धे दीर्घतमो दिवसः लघुतमा च रात्रिर्भवति। 30 सहमासे तदनु ख्रिस्तीय 21 दिसम्बरमासे लघुतमो दिवसः दीर्घतमा च रात्रिर्भवति। सहस्यमासस्य प्रथमदिनाङ्कः तदनु ख्रिस्तीय 22 दिसम्बरमासतः दिवसवृधिर्जायते। एवं सहस्यमासस्य प्रथमदिनाङ्कः तदनु 22 दिसम्बरमासः एव दिवसवर्धनप्रक्रियायाः प्रथमदिवसः बृंहद्दिनं भवति न तु 25 दिसम्बरमासः। स्पष्टज्ञानार्थं पूर्वपृष्ठे प्रस्तुतं वैदिककालचक्रस्य रेखाचित्रं पश्यन्तु।

## ख्रिस्तीयाकालगणना

रोमवासिनां प्रागैतिहासिककाले एका जंत्री प्रचलिता आसीत् तदा तस्या नाम अलबनजंत्री आसीत् । एषा अलबनजंत्री एव ख्रिस्तीया कालगणनायाः मूलस्त्रोतः। प्रारम्भे अलवनजंत्र्यां दशमासात्मकमेव वर्षमासीत् तच्च 304 दिनात्मकमेव। वर्षारम्भः मार्चमासात् वर्षान्तश्च दिसम्बरमासे भवति स्म। सितम्बर (Septem = 7) अक्टूबर (Octo = 8) नवम्बर (Novem = 9) दिसम्बर (Dicem = 10) यथा एतेषां नाम्नैव स्पष्टं यत् एते वर्षस्य सप्तम-अष्टम-नवम-दशममासाः आसन् । एवमेव वर्षस्य पञ्चमः मास क्यिंटिलियस (Quinti = 5) षष्ठश्च सिक्सटिलिस (Six= 6) आस्ताम्। ई.पू. 753 तमे वर्षे **कलेः 2 3 4 9 तमे वर्षे वा रोमनगरस्य निर्माता प्रथमशासकश्च राजा रोम्यूलसः** अलवनजन्त्र्याः कतिपयमासानां दिनसंख्याः संकलनव्यवकलनाभ्यां जन्त्र्याधारेण नगरस्य स्थापनायाः सन्दर्भे एप्रिलमासस्य एकविंशतितमे दिनाङ्के रोमीयजन्त्र्याः प्रवर्तनं कृतवान् । अस्यां जन्त्र्यामपि वर्षस्य मासानां संख्या दश, दिवसानां संख्या 304 मितमेवासीत्। तदनन्तरं रोमस्य **द्वितीयः नरेशः न्यूमा पाग्विलियासः कलियुगाब्दे 2389** तमे वर्षे जनवरी, फरवरी च मासद्वयं योजयित्वा द्वादशमासात्मकं वर्षं कृतवान्। तं च यूनानीजन्त्रीवत् चान्द्रवर्षं कृत्वा 354 दिनात्मकं कृतवान्। तत्पश्चात् 2611 तमे कलियुगाब्दे सौरवर्षमादर्शं मत्वा मासानामार्तवव्यवहाराय चान्द्रवर्षे अधिमासयोजना स्वीकृता।

अत्र ज्ञातव्यमिदमपि यत् न्यूमाकालादेव वर्षान्तं दिसम्बरमासस्य स्थाने फरवरीमासेन भवति स्म। उक्तसंशोधनात् पश्चादपि रोमस्य धर्माचार्यसङ्घः राजनीतिकोद्देश्येन वर्षस्य दिनसंख्यां न्यूनाधिक्यं करोति स्म। तस्मात् स्वशासनकाले **रोमनरेशेन जूलियस सीजरेन 2956 कलियुगाब्दे** दृष्टं यत् रोमीयजन्त्र्याः वर्षः वास्तविकवर्षात् त्रिमासं यावद् पश्चादस्ति यस्मात् ऋतुव्यवस्था भ्रष्टा जाता। अतः सः **स्वज्योतिषी-सोसीजेनिसेन** सह परामर्शं कृत्वा रोमीय वर्षे 90 दिनं योजयित्वातं 355+ 90 = 445 दिनात्मकं तस्मिन् वर्षे कृतवान् । भविष्ये च दोषवारणाय वर्षं 365 दि. 6 घंटा मितं कृतवान्। यः प्रतीयमानसौरवर्षतुल्यतां भजते। तदर्थं त्रिवर्षपर्यन्तं प्रत्येकं 365 दिनात्मकं मत्वा चतुर्थे वर्षे एकं दिवसं योजयित्वा 366 दिनात्मकं करणीयम् । अधिकदिवसस्य योगः चतुर्थे वर्षे फरवरी मासे करणीयः। एवं चतुर्थः वर्षः अधिकाह वर्षः जातः। **जूलियससीजरस्य** जन्म रोमनजन्त्र्याः पञ्चममासस्य द्वादशे दिनाङ्के जातमतोऽस्य मासस्य नाम तेन स्वनामोपरि जुलाई कृतम् । एवमेव **रोमसम्राट् अगस्टसः षष्ठं मासं स्वाय शुभं मत्वा** तस्य नाम स्वनामोपरि अगस्त कृतवान् । अगस्टसपर्यन्तमेव रोमजन्त्र्यां परिवर्तनं दृश्यते। ततः अद्यावधि मासानां नामसु दिनेषु च स्थिरता दृश्यते।

ईसामसीहस्य जन्मतः 500 वर्षानन्तरं षष्ठशताब्द्यां डायोनीसियस एक्सिग्यूअसनामपादड़ी एव तत्कालीनग्रन्थैः मसीहस्य जन्मवर्षं गणयित्वा व्यतीतकालं व्यवकलय्य ईसवीयवत्सरस्य जन्मदाता अभवत् । एवमाविष्कृते ईसवीयवत्सरेऽपि जूलीयजंत्रीवत् 365 दिनात्मकः वर्षः 366 दिनात्मकश्च चतुर्थः अधिकाह वर्षः प्रचलति स्म।

यथोक्तं जूलीयजन्त्र्यां 365 दि. 6 होरात्मकः वर्षः स्वीकृतोऽस्ति । किन्तु एष वर्षः क्रान्तिपातिकसौरवर्षात् 11 मि. 14 से. मितोऽधिकोऽस्ति। एतद् आधिक्यम् 400 वर्षे त्रिदिनादप्यधिकं भवति। **एतद् दोषं 13 ग्रेगरीमहोदयेन सूक्ष्मतया विमर्शितम्।** तेन ई. सन् 1582 तमे वर्षे गणितं यत् 325 ई. वर्षे सम्पन्नधर्मसम्मेलनात् एतदाधिक्यं दशदिवसात्मकं जातमस्ति। तं गणनामगणितत्वात् 15 अक्टूबरदिनाङ्कं 5 अक्टूबररूपेण व्यवह्रियते। एवं विमृश्य तेन एलायसियसलिलियसनामज्योतिषा परामर्शेन **1582 तमे ख्रिस्ताब्दे 5 अक्टूबरस्थाने 15 अक्टूबर कृतम् ।** पुनश्च व्यवस्था प्रदत्ता तेन यत् यस्यां शताब्द्यां 400 संख्यायाः भागः निःशेषः न भवति तस्यां शताब्द्याम् अधिकाहवर्षः प्राप्तेऽपि न करणीयः। एवं कृते 400 वर्षेषु 100 स्थलेषु 97 वर्षाण्येव अधिकाहवर्षत्वेन स्वीक्रियते। एवं पोपग्रेगरीद्वारा संशोधिता जन्त्री **नवीनप्रथा ग्रेगरीजन्त्री** नाम्ना प्रचलति।

इदमप्यत्र ज्ञातव्यं यत् **1752 ख्रिस्ताब्दतः एव प्रथम जनवरीतः** नूतनवर्षारम्भव्यवस्था प्रचलति। यथोक्तं रोमजन्त्र्यां वर्षारम्भः मार्चमासात् भवति स्म।

मसीहस्य जन्मतः 500 वर्षानन्तरं षष्ठशताब्द्यां डी.ए. पादड़ी महोदयेन स्वगणनायां मसीहस्य जन्म 25 दिसम्बरमासं प्राप्य ततः ख्रिताब्दस्य प्रचारः कृतम् । तं मत्वा **सप्तमशताब्दीतः 13 त्रयोदश शताब्दी पर्यन्तं वर्षारम्भः इंग्लैडदेशे 25 दिसम्बरमासात् भवति स्म।** ततः कतिपयगणितज्ञैः गणनां कृत्वा प्राप्तं यत् मसीहस्य जन्म अप्रैलमासस्य चतुर्थे दिनाङ्के जातमासीत् । अतः **14 शताब्दीतः इंग्लैडदेशे पुनः 25 मार्चत वर्षारम्भः स्वीकृतः तच्च ख्रिस्ताब्दे 1751 पर्यन्तं प्रचलितमासीत्।** मसीहस्य जन्मविषये पुनः गणितविषयकवैविध्यकारणात् । 1752 तमे ख्रिस्ताब्दे ग्रेगोरियन् प्रथायाः प्रचारात् प्रसाराच्च प्रथमजनवरीमासतः वर्षारम्भः स्वीकृतः तच्च अद्यावधि पर्यन्तं प्रचलति।

## कालगणनायां विविधसंवत्सरतुलनायां युगाब्दविमर्शः

कालगणनायां विविधसंवत्सराणां व्यवहारः लोके प्रचलति। वर्तमानसमये भारतवर्षे कलि-विक्रम-ख्रिस्त-शकसंवत्सराः प्रचलन्ति। तत्र विक्रमादयः क्रमशः **विक्रमादित्यस्य राज्यारोहणं, मसीहस्य जन्मकालं शालिवाहनस्य शकानामुपरिविजयकालं वा द्योतयन्ति।** न तु प्राकृतिककालनियामकघटना सम्बद्धाः। किन्तु एषु प्रथमः कलियुगाब्दः एभ्यः सर्वेभ्यः पूर्णतया भिन्नः कस्यापि महापुरुषस्य राज्यारोहणजन्मकर्मादिभ्यः असंलिप्तः भारतवर्षे सर्वेषु धार्मिककृत्येषु संकल्पकर्मणि अतीवप्राचीनकालात् सुव्यवस्थितागच्छन्ती कालगणनायाः निश्चिताङ्गभूतः दृश्यते। तत्र सर्वकर्मारम्भे दैनिकसंध्यायाञ्च करणीयः आवश्यकः संकल्पः एवमस्ति।

**''ॐ विष्णुर्विष्णुर्विष्णुः ॐ तत्सदद्य श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य ब्रह्मणो द्वितीयपरार्धे श्रीश्वेतवाराहकल्पे सप्तमे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे जम्बूद्वीपे भारतवर्षे भरतखण्डे आर्यावर्तैकदेशान्तर्गते पुण्यक्षेत्रे अमुकनामसंवत्सरे अमुक-ऋतौ अमुकमासे अमुकतिथौ अमुकवासरे अमुकगोत्रोत्पन्नः अमुकनामाहं श्रीमत्परमेश्वरप्रीत्यर्थं प्रातः सायं वा सन्ध्योपासनं कर्म अमुककर्म वा करिष्ये।''**

ब्रह्मणः एकः दिवस एव कल्पः सृष्टिसमयो वा भवति। एकस्मिन् कल्पे चतुर्दशमन्वन्तराणि भवन्ति सहस्रचतुर्युगानि वा भवन्ति। अस्मिन् वत्सरे वर्तमानकल्पारम्भतः ससन्धयः षण्मनवो व्यतीताः वर्तमानो सप्तमः वैवस्वतमनुः। तस्य प्रवृत्तस्य सप्तविंशतिमिताः महायुगाः चतुर्युगाः वा व्यतीताः अष्टाविंशतितमे युगे सतयुगद्वापरत्रेता-युगत्रयोऽपि व्यतीतः। कलियुगस्य प्रथमचरणं प्रचलति। **कलेरारम्भतः पञ्चसहस्रैकशतैकादशमितानि 5111 वर्षाणि व्यतीतानि। अनया संकल्पोक्तगणनया कल्पादितः 1972949111सृष्ट्यादितश्च 1955885111 वत्सराणि व्यतीतानि।**

अथर्वणि कल्पावधिः एवं प्रदत्ताऽस्ति—

**"शतं ते अयुतं हायनान्द्वे युगे त्रीणि चत्वारि कृष्मः।"**[1]

अयुतं दशसहस्रसंख्याकं भवति। शत अयुतवर्षाणामग्रे वामतः द्वे त्रीणि चत्वारि लेखनेन सृष्टेः आयुकालः 4320000000 वर्षाण्याति। यजुर्वेदे चतुर्युगानां नामानि एवं सन्ति। **"कृताय आदिनववर्षं, त्रेतायै कल्पिनम्, द्वापराय अधिकल्पिनम्, आस्कन्दाय सभास्थाणुम्** ।[2]

एवं दृश्यते यत् चतुर्युगानां तेषां दीर्घकालानां च वर्णनं वेदादिप्राचीनग्रन्थेषु वर्णितमस्ति। **आर्याणामेषा कालगणना हिन्दुषु, पारसीयेषु, स्कंदनेवियनेषु, बेवीलोनियावासिषु** सामान्यतया प्रचलति। अग्रे इदमपि विचार्यते यत् एषा गणना ज्योतिषाधारिता वैज्ञानिका, काल्पनिका वा।

## युगाणामारम्भः ग्रहाणां तारतम्येन भवति।

यथा महाभारते—

**यदा चन्द्रश्च सूर्यश्च तथा तिष्यः बृहस्पतिः।**
**एकराशौ समेष्यन्ति प्रवर्त्यस्यति तदाकृतम्।।**[3]

सूर्यसिद्धान्तेऽपि च

**अस्मिन् कृतयुगस्यान्ते सर्वे मध्यगता ग्रहाः।**
**विना तु पादमन्दोचान्मेषादौ तुल्यता मिताः।।**[4]

इदमप्यत्रावधेयम् यत् **कलियुगस्य द्विगुणकालात्मकः द्वापरः, त्रिगुणकालात्मकश्च त्रेता, चतुर्गुणकालात्मकश्य सत्ययुगं कृतयुगं वा भवति।** अतः उपर्युक्तसिद्धान्तेन स्पष्टं यत् युगारम्भे सर्वे ग्रहाः युतौ भवन्ति। ग्रहाणां युतिकालस्य परीक्षणमपि यूरोपीयज्योतिषी**वेलीमहोदयेन गणितेन** कृतम्। तेन लिखितं यत् **"कलियुगस्यारम्भः 3102 ई.पू. 20 फरवरीमासे 2 वादनानन्तरं 27 मि. 30 से. उपरि सप्तग्रहाणां युतौ प्राप्ते जातम् ।"** वर्तमानसमये 2010 ई. वत्सरमतीतम् अतः 3102 + 2010 = 5112 वर्षम् गतकलिः 27 फरवरी मासे 2011 ई. वत्सरे भविष्यति। एवं स्पष्टं यत् युगाब्दः शुद्धः परीक्षितः स्पष्टश्चास्ति। **युगारम्भः ग्रहाणां प्राकृतिकयुतिविशेषात् निश्चितकालानन्तरात् भवति।**

1. अथर्ववेदः 8/2/21.
2. यजुर्वेदः मा. सं. 30/18.
3. महाभारते वनपर्वणि
4. सूर्यसिद्धान्तः 1/57.

## वैदिकार्तवमासवर्षव्यवस्थायाः रोमीयाङ्लख्रिस्ताब्दीय-मासवर्ष-व्यवस्थयाश्च तुलनात्मकं समीक्षणम्।

**(क).** वैदिकार्तवनववर्षारम्भः समग्रपृथिव्यां समरात्रिन्दिवकालसम्पादक-वासन्तिकविषुवतः भवति। प्रकृतिरपि पुरातनं त्यक्त्वा नव नव कुसुमैः नव नव किसलयैः मधुरसभरिता समेषां पृथिव्यां समशीतोष्णेन चिरनूतनतामवाप्य नववर्षारम्भङ्करोति। पृथिव्या उत्तरीगोलार्धे मधुमासारम्भः वसन्तर्तुः दक्षिणीगोलार्धे च शरदर्तुः लोकानां समानसुखप्रदः वर्षारम्भे भवति।

रोमीयख्रिस्ताङ्कनववर्षारम्भस्तु जनवरीमासस्य प्रथमदिनाङ्कतः भवति। उत्तरीगोलार्धे शीतर्तौ तद्विपरीतदाक्षिणीगोलार्धे ग्रीष्मर्तौ उत्तरीगोलार्धे शीतेन कष्टावस्थायां दक्षिणीगोलार्धे ग्रीष्मात् त्रस्तावस्थायां प्रकृतिविरुद्धं जनपरिकल्पितदिनाङ्कतः नववर्षारम्भः भवति।

**(ख).** स्वाक्षोपरि $23^0$ 28' विनता घूर्णन्ती पृथिवी दीर्घवृत्तीयकक्षायां सूर्यं परिक्रमति। तस्मात् कारणात् सूर्यकेन्द्रात् परिक्रमणकक्षायां समरात्रिन्दिवकालात्मकविषु-वदिवससम्पादकः $180^0$ मिते कोणे षड्मासान्तरालेन स्थलद्वयमायाति। तस्मादेव एकस्मिन् वर्षे विषुवद्वयं भवति। वेदेषु क्रमशः वासन्तिकविषुवान् शारदीयविषुवाञ्च तयोः नामनी। वासन्तिकविषुवतः मधुमासस्य वसन्तर्तोः नववर्षस्य चारम्भः भवति। शारदीयविषुवञ्च वर्षमध्यस्थः शरदर्तोः इषमासस्य चारम्भकः भवति। अत एव वासन्तिकविषुवपश्चात् प्राप्तप्रथमदिवस एव मधुमासस्य प्रथमदिनाङ्कः तथैव शारदीयविषुवपश्चात् प्राप्तप्रथमदिवसः इषमासस्य प्रथमदिनाङ्कः।

पाश्चात्यख्रिस्तीयव्यवस्थायां तु वासन्तिकविषुवदिवसे प्रायः 21 मार्च भवति तत्पश्चात् प्रथमदिवसः 22 मार्च भवति। अर्थात् मधुमासस्य प्रथमे दिनाङ्के प्रायः 22 मार्च भवति। तथैव शारदीयविषुवदिवसे प्रायः 23 सितम्बर भवति। अर्थात् शरदर्तोः इषमासस्य प्रथमे दिनाङ्के प्रायः 24 सितम्बर भवति। एवं स्पष्टं यत् कस्यापि विषुवतः कस्यापि ख्रिस्तमासस्यारम्भः न भवति।

**(ग).** पृथिव्याः दीर्घवृत्तीयकक्षायाः वासन्तिकविषुवसम्पादकबिन्दुतः त्रिंशत् त्रिंशदंशीयद्वादशविभागात्मकाः मधुमासादिद्वादशवैदिकार्तवमासाः भवन्ति। तत्रापि च मध्यस्थः शारदीयविषुवान् षड्मासान्तरालं स्पष्टङ्करोति। मासानामपि द्वादशनामानि युगलात्मकानि षड्तुपराणि **"मधुश्चमाधवश्च वासन्तिकावृतू"** इत्यादीनि।

ख्रिस्ताब्दीयमासानां व्यवस्था तु कस्यापि निश्चितबिन्दुतः नास्ति। द्वादशनामान्यपि व्यक्तिपराणि संख्यापराणि अनार्तवानि अव्यवस्थितानि। जुलाई- अगस्त- सितम्बर- अक्टूबर- जनवरी- फरवरीत्यादीनि तु अवैज्ञानिकानि।

(घ). वैदिकार्तववर्षव्यवस्थायां पृथिव्याः दीर्घवृत्तीयपरिक्रमणकक्षायाः वासन्तिकविषुवतः शारदीयविषुवपर्यन्तमुत्तरावर्तनामशारदीयविषुवतः वासन्तिकविषुवपर्यन्तं दक्षिणावर्तनाम च भागद्वयं भवति। तत्र उत्तरावर्तीयकक्षायां दीर्घवृत्तस्य प्रसरितार्धभागे क्रमशः पृथिवी सूर्यं दूरतः परिक्रमति। अतः उत्तरावर्ते अर्धवृत्तीयमार्गवृद्धिक्रमेण उत्तरावर्त्तीय-षड्मासानामवधिः अपि दिनादिः वर्द्धते। तदनु सार्धत्रिंशद्दिनादधिककालात्मक-माधवादिपञ्चमासानां सौकर्याय 31 दिनात्मकगणना। चतुर्थे अधिकाहवर्षे मधुमासोऽपि 31 दिनात्मकः। तथैव दक्षिणावर्तीयकक्षायां दीर्घवृत्तस्य संकुचितार्धभागे अर्धवृत्तीयमार्गसंकोचक्रमेण इषादिषड्मासानामवधिः त्रिंशद्दिवससामीप्यात् प्रतिमासः त्रिशद्दिनात्मकः।

खिस्ताब्दीयमासानां त्रिंशद्दिनात्मकमेकत्रिंशद्दिनात्मकं वा मानकरणे कोऽपि नियमः किमपि विज्ञानं वा नास्ति। त्रिंशद्दिनात्मकाः एकत्रिंशद्दिनात्मकाः वा मासाः क्रमशोऽपि न हि सन्ति। यावज्जीवनं कः त्रिंशद्दिनात्मकः कः एकत्रिंशद्दिनात्मकः मास इति माससमाप्तौ प्रायः जनाः परस्परं पृच्छन्ति। सप्तमासानामेकत्रिंशत्करणन्तु स्पष्टतया मौर्ख्यमेव। पुनश्च वर्षावधिः नियमनाय फरवरीमासं 28 दिनात्मकः 29 दिनात्मको वा इतिस्वीकरणे निष्प्रयोजनम् अपेक्षातोऽधिकमासद्वयस्य एकत्रिंशद्दिनकरणमेवकारणम्। एवमेषा खिस्ताब्दीयमासव्यवस्था पूर्णतया अवैज्ञानिका अनार्तवा च ।

(ङ) यथोक्तमुत्तरावर्तीयां प्रसरितार्धकक्षायां वासन्तिकविषुवात् मधुमासात् क्रमशः सूर्यं परिक्रमन्ती पृथिवी सूर्यात् दूरे गच्छन्ती मासान्वर्धयन्ती नवत्यंशीयमार्गं यात्वा शुक्रमासस्य अन्तिमे 31 दिनाङ्के खिस्तीय 21 जूनमासे सूर्यात् दूरतमं उत्तरनाभिं प्राप्नोति। अस्मिन्नहोरात्रे पृथिव्याः उत्तरीगोलार्धे दीर्घतमः दिवसः लघुतमा च रात्रिर्भवति। तद्विपरीतं दक्षिणीगोलार्धे लघुतमः दिवसःदीर्घतमा च रात्रिर्भवति। ततः आवर्तनक्रमेण प्रथमशुचिमासात्, खिस्तीय 22 जूनमासात् नवत्यंशीयमार्गं यात्वा 31 नभस्यमासे तदनु खिस्तीय 23 सितम्बरमासे वर्षमध्यस्थं शारदीयविषुवं प्राप्नोति। इतः 1 इषमासात् तदनु खिस्तीय 24 सितम्बरतः नवत्यंशीय मार्गे कक्षायाः सङ्कोचक्रमेण सूर्यस्य सामीप्यमाप्नुवन्ती परिक्रमणमार्गसंकोचक्रमेण मासकालं दिनादिः संकोचयन्ती सहमासस्य अन्तिमे 30 दिनाङ्के खिस्तीय 21 दिसम्बरमासे दक्षिणनाभिं सूर्यात् समीपतमं प्राप्नोति। अस्मिन्नहोरात्रे पृथिव्याः उत्तरीगोलार्धे लघुतमः दिवसः दीर्घतमा च रात्रिर्भवति। तद्विपरीतदक्षिणी गोलार्धे दीर्घतमः दिवसः लघुतमा च रात्रिर्भवति। इतः एव शनैः शनैः उत्तरीगोलार्धे प्रत्येकं दिवसः वर्धते रात्रिश्च क्षीयते अतो वृद्धिं प्राप्नुवन् सहस्यमासस्य प्रथमो दिनाङ्कः तदनु खिस्तीय 22 दिसम्बर भवति। एष एव प्रथम बृंहद्दिवसः न तु 25 दिसम्बरमासः बृंहद्दिवसः इत्यपि विज्ञातव्यम्। इत एव सूर्यमग्रे परिक्रमन्ती पृथिवी शनैः शनैः सूर्यात् दूरत्वं प्राप्नुवन्ती प्रसरितकक्षां प्रति गच्छन्ती नवत्यंशीयमार्गं यात्वा तपस्यमासस्य अन्तिमे 30 दिनाङ्के खिस्तीय 21 मार्चमासे वासन्तिकं विषुवं प्राप्नोति। इतः एव नववर्षारम्भः मधुमासारम्भः

1 मधुमासः 22 मार्चमासो वा। दक्षिणनभितः उत्तरनाभिं यावन्मार्गमुत्तरायणमुतरनाभितः दक्षिणनाभिं यावन्मार्गं दक्षिणायनञ्च उच्यते।

स्पष्टमस्ति प्रमुखेषु चतुर्षु अहोरात्रेषु कस्यापि खिस्तीयमासस्यारम्भः समापनं वा न भवति। अत एव खिस्तीय-मासारम्भः वर्षारम्भश्च पूर्णतया अवैज्ञानिकः। वर्षस्य कालावधिरेव शुद्धः।

वैदिकार्तवमासानामारम्भः समापनं च चतुर्षु प्रमुखस्थलेषु भवति। वर्षारम्भः वासन्तिकविषुवतः वर्षमध्यञ्च शारदीयविषुवम् । वर्षस्य कालावधिस्तु पूर्णतया शुद्ध एव। एवम् अपिरिवर्तनीयविज्ञानाधारितं वैदिकं कालचक्रम्।

**( च ).** वैदिकार्तववर्षस्य कालः वासन्तिकविषुवतः वासन्तिकविषुवपुनरावर्तन-पर्यन्तम् 365 दि. 5 घं. 48 मि. 46 सेकिण्ड् मितं भवति। अत्र विषुवानेव स्पष्टकालनिर्धारकः संवत्सरस्य। स एव संवत्सरसमापकः नवसंवत्सरारम्भकश्च । एष एव चतुर्थवर्षे अधिकदिवसेन अधिकाहवर्षस्य निश्चायकः। 128 वर्षानन्तरं अधिकाहवर्षे अधिकदिवसस्य अप्राप्तिज्ञापकोऽप्येष एव। संवत्सरकालस्य शुद्धतायाः मूलमस्ति वैदिको विषुवान् । अतो वैदिके काले प्रचलति स्म विषुवमहोत्सवः संवत्सरयागः।

वर्तमानकाले खिस्तीयसंवत्सरस्यापि आदर्शमानं 365 दि. 5 घं. 48 मि. 46 से. मितमेव। किन्तु तत्र वर्षारम्भः 1 जनवरीतः भवति न च सः विषुवदिवसः। वासन्तिकविषुवम् 21 मार्च दिनाङ्के, शारदीयविषुवञ्च 23 सितम्बर दिनाङ्के प्रायः भवति न च ततो नववर्षारम्भः वर्षसमाप्तिर्वा। न च खिस्तेषु तस्य धार्मिकं राजनीतिकं वा महत्त्वम् । न च 21 दिसम्बर 22 दिसम्बर वा खिस्तानां संवत्सर महोत्सवम्। प्राकृतिकसंवत्सरारम्भकविषुवदिवसस्य खिस्तेषु महत्वाभावात्। 1582 तमे खिस्ताब्दे 325 खिस्ताब्दतः वार्षिकादर्शमानदृष्ट्या दशदिवसात्मकमन्तरं जातम् । रोमपादरी ग्रेगोरियन महोदयेन तत्संशोधनाय 5 अक्टूबरस्थाने 15 अक्टूबर कारितम् । पुनः 128 वर्षान्तराले प्राप्तेऽधिकाहवर्षेऽधिकदिवसपूर्त्यभावसंशोधनाय एषा नूतना व्यवस्था प्रदत्ता यत् यस्यां शताब्द्यां 400 संख्यायाः भागः निःशेषः न भवति तस्यां शताब्द्यामधिकाहवर्षः न करणीयः। तथापि 3546 वर्षान्तराले अस्य प्रक्रियायाः दोषकारणात् एकदिवसस्य अन्तरालं भविष्यति। अतो स्पष्टं यत् वार्षिकार्तवव्यवस्थाविशुद्ध्यर्थं विषुवानेव समर्थः तत एव वर्षारम्भणं श्रेष्ठतमकालगणानाया विज्ञानम्।

**( छ ).** खिस्तादीयगणनायाः मानकः मसीहस्य जन्मवर्षमेव। पुनश्च मसीहस्य जन्मदिनाङ्कमद्यावधि सुनिश्चितं नास्ति। केचन जनाः 25 दिसम्बरमासः तस्य जन्म स्वीकुर्वन्ति। केचन च चत्वारः वर्षः ई.पूर्व 4 अप्रैल दिनाङ्कं तस्य जन्मदिनं कथयन्ति। प्रकृतिश्च कस्यापि व्यक्तेः जन्मतः न परिवर्त्यते। अपितु प्रकृतिमनुसृत्य लोके परिवर्तनं भवति।

वैदिकार्तववर्षः कल्पारम्भतः प्रचलति। तत्र युगाब्दः लघुतममानकः । स च विषुवसंपाते ग्रहाणां युत्यारभते। अस्याः गणनायाः भारतवर्षे दैनिकसंकल्पे दैनिकप्रयोगः अतिप्राचीनकालादागच्छति। अतोऽस्याः ऐतिहासिकं महत्त्वमधिकतरं शुद्धता तु सिद्धा एव।

## विमर्शेन प्राप्तनिष्कर्षः

अत्र तर्कपरीक्षितविमर्शेन प्राप्तं यत् कालगणनायाः द्विविधं वैज्ञानिकं स्वरूपमस्ति। तत्र पृथिव्याः परिक्रमणगत्या जायमाना प्राकृतिकार्तवसंवत्सरव्यवस्था प्रथमा। रात्रौ चन्द्रकलाभिः दृश्यमाना गणनीया द्वितीया। तत्र प्रथमगणनायाः विशुद्धस्वरूपं विषुवदिवसादारभ्य मधुमासादिद्वादशमासैः वसन्तादिषड्तुभिः विषुवाभ्यामावर्तद्वयेन शोधितं वेदेष्वेव दृश्यते। अस्याः वैदिकव्यवस्थायाः विशुद्धः वार्षिकः कालः ख्रिस्ताब्देऽपि आदर्शमानत्वेन संवत्सरमानरूपेण स्वीकृतः दृश्यते। किन्तु तत्र मासस्वरूपं वर्षारम्भश्च पूर्णतया अवैज्ञानिकम्। वर्षेऽधिकदिवसनियोजनप्रकारोऽपि अवैषुवादवैज्ञानिकम् । किन्तु वैदिकार्तवकालचक्रस्य वर्तमानकाले आधुनिकवैज्ञानिकैः स्वरूपविज्ञानाभावात् ख्रिस्तीयव्यवस्था एव अन्ताराष्ट्रिया जातास्ति।

चन्द्रकलाभिः रात्रौ दृश्यमाना गणनीया द्वितीया व्यवस्था च प्रामुख्येन भारतीय-पञ्चाङ्गेषु मुहम्मदीयेषु च दृश्यते। तत्र मुहम्मदीयेषु प्रथमचन्द्रदर्शनादारभ्य रात्रौ पूर्णतया चन्द्रदर्शनाभावपर्यन्तं चान्द्रमासं स्वीकुर्वन्ति। पुनर्चन्द्रदर्शनादेव नूतनमासारम्भः भवति। ते पूर्णदिनस्य गणना रात्रौ प्रथमचन्द्रदर्शनादारभ्य दिवसं प्रपूर्य पुनर्रात्र्यागमनपर्यन्तं कुर्वन्ति। अर्थात् रात्रितः आरभ्य दिवसपर्यन्तमेकं गणयन्ति हिन्दूपञ्चाङ्गेषु द्वितीयातिथौ चन्द्रदर्शनं भवति मुहम्मदीयाः तां चान्द्रकलां प्रथमाकलां गणयन्ति पूर्णिमाकलाञ्च हिन्दीभाषायां "चौदहवीं" कथयन्ति। एवं हिन्दूनां प्रतिपदातिथिपर्यन्तं ते "उनतीसवीं तीसवीं वा" गणयन्ति। एवं प्रकारकद्वादशमासैः तेषां हिजरी वर्षः भवति। तस्य मानं 354 दि. 8 घं. 48 मि. 38 सें. मितमस्ति। एतस्य मानमार्तवसौरवर्षात् दिनादिः 10 दि. 22 घं. 00 मि. 08 सें. मितं न्यूनं भवति। अतस्तेषां वार्षिकोत्सवाः प्रायः आर्तवसौरवर्षात् 11 दिवसपूर्वमेव आयान्ति। 32½ सार्धद्वात्रिंशत् मासेषु ऋतवः मासान्तरेण भवन्ति सपादषोडशवर्षान्तराले ग्रीष्मर्तोः मासः शीतर्तौ गच्छति। शीतर्तोः मासः ग्रीष्मर्तौ गच्छति। एवं स्पष्टं यत् मुहम्मदीयानां चान्द्रगणना अनार्तवा, अत्यन्तस्थूला आर्तवविज्ञानविरहिता चास्ति। धार्मिकास्थावशादेव प्रचलति न तु किमपि विज्ञानं तत्र।

भारतीय-पञ्चाङ्गेषु प्रचलन्ती चान्द्रमासव्यवस्था न तु तादृशी अपितु अतीवसूक्ष्मा वैदिकनाक्षत्रविज्ञानाधारिता नाक्षत्रवर्षात्मिका कालगणनायाः द्वितीया वैज्ञानिकी वैदिकव्यवस्था एव यथा पूर्वमेव विमर्शितम् । किन्तु प्रथमा मूलार्तवप्राकृतिकवैदिकव्यवस्था मध्यकाले

गच्छता कालेन चान्द्रनाक्षत्रमासानां प्रामुख्ये जाते लुप्तप्रायतां ज्ञाता। वर्तमानपञ्चाङ्गेषु आर्तववैदिकव्यवस्थायाः मूलभूतवासन्तिकविषुवदिवसस्य उल्लेखोऽपि न दृश्यते। वासन्तिकविषुवादारभ्यमाणानां वसन्ताद्यृतूनामङ्गभूतानां मधुमाधवादिवैदिकमासानां नामानि भारतीय-पञ्चाङ्गेषु कुत्रापि न हि दृश्यन्ते। अपितु जनाः इत्येव जानन्ति यत् समरात्रिन्दिवकालात्मकः दिवसः 21 मार्चमासे 23 सितम्बरमासे च भवति। तौ च ख्रिस्तीयकालगणनायां भवतः। ते न जानन्ति यत् **तौ समरात्रिन्दिवकालात्मकौ दिवसौ वैदिकविषुवदिवसौ। क्रमशः वासन्तिकविषुवान् शारदीयविषुवानितिनामभ्यां सर्वेषु वेदेषु प्रसिद्धौ श्रेष्ठतमौ दिवसौ। प्रथमः विषुवान् नववर्षारम्भकः वसन्तर्तुना मधुमासेन। द्वितीयः विषुवान् वर्षमध्यस्थः शरदर्त्तोः इषमासस्यारम्भकश्च।**

न तु इत्येव वर्तमानभारतीय-पञ्चाङ्गेषु नाक्षत्रसौरगणना एव दृश्यते न तु मूलवैदिकार्तवसौरगणना। यथा पूर्वमेव विमर्शितं यत् वैदिकनाक्षत्रमण्डलस्य भचक्रस्य मध्यकालीनैर्ज्योतिर्विद्भिः द्वादश विभागाः अपि दृश्यमाननक्षत्राणामाकृतिभिः परिकल्पिताः।

ते च मेषवृषादयः द्वादशराशयः वर्णिताः। ततः वैदिकार्तवमासानां स्थाने नाक्षत्रसौरगणना प्रचलिता। यद्यपि वैदिकनाक्षत्रचान्द्रपूर्णिमाकलया चान्द्रवर्षः वर्णितक्रमेण नाक्षत्रसौरवर्षे एव परिणमते। नाक्षत्रसौरवर्षस्य स्वतन्त्रगणनायाः किमपि प्रयोजनं नासीत् अनार्तवत्वात्। एतत्सर्वं स्पष्टमासीत् वैदिकेषु। अतो वेदेषु कुत्रापि नक्षत्रमण्डलस्य द्वादशराशिनामानि न हि दृश्यन्ते। विषुवानेव तत्र प्रामुख्येन दृश्यते। विषुवनाभिः, उत्तरनाभिः, दक्षिणनाभिश्च, नाभित्रयं कालचक्रज्ञापकमन्त्रे स्पष्टं व्याख्यातमस्ति।

तथापि वैदिकर्षिभिः दृष्टः वैदिकार्तववर्षनाक्षत्रवर्षयोरन्तरम् मध्यकालीनैर्ज्योतिर्विद्भिरदृष्ट्वा वैदिकार्तवमधुमासादिकं त्यक्त्वा मेषादिनाक्षत्रनामानि प्रचालितानि। एवं विशुद्धवैज्ञानिकवासन्तिकविषुवमहोत्सवस्य स्थाने मेषसंक्रान्तिः, शारदीय- विषुवस्थाने तुलासंक्रान्तिः, उत्तरनाभिस्थाने कर्कसंक्रान्तिः दक्षिणनाभिस्थाने मकरसंक्रान्तिश्च प्रचालिता। मूलतः वासन्तिकविषुवादुत्तरावर्तं शारदीयविषुवाद्दक्षिणावर्तं दक्षिणनाभितः उत्तरायणं उत्तरनाभितश्च दक्षिणायनं भवति। कस्मिंश्चित् समये वर्षे वासन्तिकविषुवे मेषसंक्रान्तिर्दृष्टा ततः एषा व्यवस्था प्रचलिता किन्तु वर्तमानसमये वासन्तिकविषुवसम्पातात् मेषसंक्रान्तिः $24^{0}$-18' कलात्मकमन्तरं भजते अर्थात् समरात्रिन्दिवकालात्मकविषुवदिवसात् 25 तमे दिने मेषसंक्रान्तिर्भवति। तच्च वसन्तर्त्तोः मधुमासस्य 24 दिनाङ्के भवति।

वस्तुतः नाक्षत्रचान्द्रमासैः नाक्षत्रसौरवर्षव्यवस्था एव प्रचलति सा च वैदिकी। किन्तु प्रमुखवैदिकार्तवमासवर्षव्यवस्थास्थाने संक्रान्तिकनाक्षत्रराशिमासवर्षव्यवस्था तु अवैदिका अनार्तवा अवैज्ञानिका भ्रान्ता चास्ति। यदि केचन मेषादिनाक्षत्रराश्यनुरागिणः एषा व्यवस्था पञ्चाङ्गेषु चालयितुमिच्छन्ति चालयन्तु नाम। किन्तु ते पञ्चाङ्गेषु मेषसंक्रान्तितः

उत्तरावर्तं तुलासंक्रान्तितः दक्षिणावर्तं मकरसंक्रान्तितः उत्तरायणं कर्कसंक्रान्तितः दक्षिणायनं लिखित्वा मिथ्याचरणमेव कुर्वन्ति। तत्तु क्रमशः समरात्रिन्दिवकालात्मकवैदिक-वासन्तिकविषुवतः शारदीयविषुवतः दक्षिणनाभित उत्तरनाभित एव प्रचलति।

स्वतन्त्रभारतवर्षस्य प्रथमप्रधानमन्त्रिणा जवाहरलालनेहरूमहोदयेन वैदिककालगणनाविषये कुतश्चिद् ज्ञात्वा तस्य वैज्ञानिकत्वमवलोक्य राष्ट्रियदिनाङ्करूपेण वैदिककालगणना एव स्वीकृता। किन्तु ते वैदिककालगणनायाः समग्रं स्पष्टं वैदिकं स्वरूपं न ज्ञातवन्तः। अतो वैदिकमासानां मधुमासादिस्थाने चान्द्रमासानां नामानि चैत्रादि लिखितानि। तत्तु असमीचीनमेव। चान्द्रमासानां नामानि चान्द्रपूर्णिमाकलाश्रितानि नाक्षत्राणि। यथा चैत्रो नाम चित्रा नक्षत्रोपरि पूर्णिमा कला न तु अन्यत्र चैत्रः। मधुमासश्च समरात्रिन्दिवकालात्मकवासन्तिकविषुवादारब्धः वसन्तर्तोः प्रथमः मासः। चैत्रः रात्रौ चान्द्रकलां बोधयति। **मधुमासश्च पुष्पित-विकसित-मधुरसभरितसमशीतोष्णवसन्तर्तुं ज्ञापयति। एवमेषा उभयथा वैज्ञानिकी व्यवस्था सहचरी अपि दिवारात्रिवद् भिन्ना भिन्ना। प्रथमा दिनं ऋतुं दर्शयति द्वितीया रात्रौ चन्द्रकला।**

वैदिकव्यवस्थायाः सम्यक्ज्ञानाभावे विविधपञ्चाङ्गनिर्मातारः स्वकीयं स्वकीयं पञ्चाङ्गमपि विविधदोषेण दूषयन्ति। यथा गणेश आपा पञ्चाङ्गे वासन्तिकविषुवदिवसे विषुवसंपातकालं "दृश्यः मेषेऽर्कः" इति लिखन्ति। वस्तुतः तत्र मेषेऽर्कः न दृश्यते अपितु ततः चतुर्विंशतिदिनानन्तरं पञ्चविंशतितमे दिने मेषेऽर्कः दृश्यते। अतस्तत्र "दृश्यः मेषेऽर्कः" इति पूर्णतया एव मिथ्या। तत्र "वासन्तिकविषुवसंपातकालः" इत्येव लेखनीयम्। तथैवाग्रेऽपि क्रमशः "माधवमाससंपातः" "शारदीयविषुवसंपातः" इत्यादि लेखनीयम्। तथैव राष्ट्रियचैत्रमासारम्भः इत्यशुद्धम् मधुमासारम्भः इत्येव लेखनीयम्।

तथैव आदित्यपञ्चाङ्गे मीनसंक्रान्तेः द्वितीयेदिने "सौर चैत्रमासारम्भः" इति लिखन्ति तत्तु पूर्णतया असमचीनमेव न तु तस्मिन् मासे चित्रानक्षत्रोपरि पूर्णिमा कला। न च चित्रानक्षत्रोपरि सूर्यः। "मीने रविः" इत्येव अलम्, मीनसंक्रान्तिमासो वा लिखन्तु। तत्रैव च "वसन्तऋतुप्रारम्भः" इत्यपि तदपि असमीचीनमेव। न तत्र विषुवप्राप्तः। वासन्तिकविषुवादेव वसन्तर्तोः प्रारम्भः वेदेषु।

**वस्तुतः द्विविधवैदिकवैज्ञानिककालगणनायां प्रथमा विषुवदिवसादार-भ्यमाणा मधुमासादिद्वादशमासैः वसन्तादिषड्तुभिः सम्पन्ना प्राकृतिकार्तवा गणना एव मुख्या। द्वितीया च रात्रौ चन्द्रस्वरूपज्ञापिका निशीथे आह्लालादकरी पूर्णिमाचान्द्रकलाप्रधाना प्रथमायाः सहचरी अनुचरी च गौडा। किन्तु दुर्भाग्यवशात् मध्यकालाद् भारतीयपञ्चाङ्गेषु द्वितीया गौडा एव अवशिष्टा दृश्यते। प्रथमा मुख्या तु विस्मृता एव। तस्मात् कारणात् ख्रिस्तीयकालगणना**

अवैज्ञानिकमासव्यवस्थायुतापि, वैज्ञानिकविषुवदिवसात् वर्षारम्भणाभावेऽपि, केवलवार्षिककालावधौ वैदिकव्यवस्थायाः समतां प्राप्य प्रमुखा अन्ताराष्ट्रिया च जाता। तत्कारणं तु वर्तमानभारतीयज्योतिर्विद्भिः वैदिकमूलत्वत्यागः वैदिककालचक्रस्य त्यागश्च। अतो भारते विश्वे च श्रेष्ठवर्षविज्ञानाय वैदिककालचक्रमेव ग्राह्यम्।



पञ्चमोऽध्यायः

# अथागमेषु परमतत्त्वविमर्शः

निगमेषु परमतत्त्वविमर्शात्मकतृतीयाध्याये स्पष्टं यत् एकमेव सच्चिदात्मकं दिव्यमिथुनरूपमानन्दमयमद्वैतं तत्त्वं वर्तते। तस्य महिमरूपैवास्ति आश्चर्यगुणयुक्ता विविधाकारा एषा सृष्टिः। निगमवर्णितस्यैव तत्त्वस्य विविधे समये विविधप्रकारेण तत्तत्कालिकलोकोपकाराय साक्षात्कृन्मुनय उपदिष्टवन्तः। तदेव विविधाम्नायपरम्परया विविधागमरूपेण ख्यात्तम्। आप्तैरुक्तत्वात् तेषां प्रामाण्यविषये नास्ति शङ्कायाः अवकाशः। नेदं प्रष्टव्यं वेदविरुद्धागमानां प्रामाण्यं न वा। साक्षात्कृते सत्ये सत्यात्मकवेदवाक्यानि प्रति विरुद्धकथनस्यासंभवात्। एकस्यैव सत्यस्य बोधार्थं विविधप्रकारेण कथनं संभवः न तु विरुद्धकथनमिति ऋग्वेदेऽपि स्वीकृतमस्ति—

**इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्।**
**एकं सद्विप्रा बहुधा वदन्ति, अग्निं यमं मातरिश्वानमाहुः॥**[1]

तथैवागमेष्वपि वर्णितमस्ति। तद्यथा—

**रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषाम्।**
**नृणामेको गम्यस्त्वमसि पयसामर्णव इव॥**[2]

अत एव यत्र कुत्रापि वेदविरुद्धत्वं तत्र तु स्वत एव अनाप्तत्वं सिद्धम्। अनाप्तत्वे आगमत्वं कथम्? उक्तञ्चास्ति तन्त्रवार्तिके—

**तथातिक्रान्तवेदोक्तमर्यादाव्यवहारिणाम्।**
**संवादिष्वपि वाक्येषु, नेष्यते मानहेतुता॥**[3]

मनुस्मृतौ च

**या वेदबाह्याः स्मृतयो याश्च काश्चित्कुदृष्टव्यः।**
**सर्वास्ताः निष्फलाः प्रेत्य तमोभूता हि ताः स्मृताः॥**

---

1. ऋग्वेदः, 1/164/46.
2. महिम्नःस्तोत्रम् 7
3. तन्त्रवार्तिकम्, 1/3.

उत्पद्यन्ते च्यवन्ते च यान्यतोऽन्यानि कानिचित्।
तान्यर्वाक्कालिकतया, निष्फलान्यनृतानि च॥[1]

## वैखानसागमः

प्रायः प्राचीनेषु वैदिकगूढ़विषयाणां यथाधिकारिणं प्रति परम्परया सारल्येन ज्ञापनमेव आगम आसीत् । यथा वैखानसागमे मरीचिरुवाच[2]—

**''सुप्रसन्नं परमात्मानं नारायणं ध्यात्वा अभिवन्द्य श्रुत्यनुकूलेन मार्गेण चतुर्वेदोद्भवमन्त्रैः तमर्चयन्तः श्रुतिभिरभिहितं शाश्वतम् अतीन्द्रियं परात्परतरं देवैरनभिलक्ष्यं तद्विष्णोः परमं पदं गच्छेयुः इति। श्रुतिस्तावत् –**

**''विष्णुर्वै सर्वादेवताः''। ''पुरुष एवेदं सर्वम्''।[3] ''स ब्रह्मा स शिवः सेन्द्रः''।[4] ''एष ब्रह्मा एष प्रजापतिः एष सर्वा देवताः।''''अग्निर्वै देवानामवमः विष्णुः परमः तदन्तरेण सर्वादेवताः''।[5] ''यस्मात्परं नापरमस्ति किञ्चित्, यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्।[6] इति। तस्मात् परब्रह्म परंज्योतिरक्षरं सर्वभूतात्मकं सर्वाधारं सनातनम् परमपुरुषमर्चयेत् तत् विमानार्चनम्''।** इत्याद्युक्त्वा तस्यार्चने विविधश्रुतिरेव विदधाति।

**तत्र तत्त्वविमर्शः** — वैखानसे तत्त्वविमर्श एवं दृश्यते तस्य भावः परमात्मनः भावः तत्त्वम्। तद्ब्रह्म परमात्मा ज्ञेयः जीवात्मा ज्ञाता श्रुतयो ज्ञानमिति। निष्कलस्सकलस्स्वभावश्च ब्रह्म। निष्कलस्तावत् क्षीरे सर्पिरिव, तिले तैलमिव, पुष्पे गन्ध इव, फले रस इव काष्ठे अग्नि इव अन्तर्बहिश्च तत्सर्वं व्याप्य आकाशोपमः नारायणः स्थितः। विश्वव्यापकशीलत्वाद्विष्णुः। अचिन्त्योऽप्रमेयः दृश्यादृश्यः अत्यच्छः अमलः नित्यः निर्गुणो निश्चलो निरवयवो निराद्यन्तो निर्विकल्पो निर्द्वन्दोऽनिर्वचनोऽतीन्द्रियः सुसूक्ष्मत्वादनिर्देश्यः परं धाम परंज्योतिः सर्वशः सर्वशक्तिमयः सर्वाधारस्सनातनः ज्ञातृज्ञेयज्ञानहीनः ज्ञानघनः जाग्रत्स्वप्नसुषुप्तितुरीयस्थानगो बहिष्प्रज्ञः प्रज्ञावस्थः स्थूल सूक्ष्मविभागेन वैश्वानरः तेजः स्वरूपः अणोरणीयान् महतोमहीयान् सर्वेषामात्मा अस्ति

---

1. मनुस्मृतिः, 12/95-96.
2. विमानार्चनाकल्पे ( वैखानसागमः ) प्रथमपटले उद्धृतम्
3. ऋग्वेदः, 10/90/2.
4. तै.आ., 8/26.
5. ऐ.ब्रा., 1/1/1.
6. श्वे.उ. 3/9. तै.उ. 4.

अत एव हृदयकमलान्तराकाशोपलब्धवैश्वानरशिखायां परमात्मा विष्णुस्तिष्ठति। स एव ब्रह्मा स एव शिवः।

अथ सकलः काष्ठेऽग्निर्मथनात् ज्वलनिव निष्कलात्मको विष्णुः ध्यानमथनेन भक्त्या संकल्पनात् सकलो भवति। यद्यद्रूपं मनसा भावितं तत्तद्रूपो भूत्वा विष्णुः प्रकाशते। सर्वव्याप्यशरीरः परमात्मैव सर्वभूतानां प्रभवरक्षणसंहृतिनिमित्तशरीरी भवति। विश्वरूपमपि स परमात्मा विष्णुरेव। तथा च श्रुतिः —

**विश्वतश्चक्षुरुतविश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्।**
**संबाहुभ्यां धमति संपतत्रैर्द्यावा-भूमी जनयन् देव एकः॥**[1]
**एक एवाग्निर्बहुधा समिद्ध एकः सूर्यो विश्वमनुप्रभूतः।**
**एकैवोषा सर्वमिदं विभात्येकं वा इदं विबभूव सर्वम्॥**[2]

एवं स एक एव निष्कलः परमात्मा विष्णुः सकलोऽप्यस्ति स एव स्रष्टा, पाता, हर्ता चाखिलस्य।

तस्य परमात्मनः विष्णोः विभूतिः श्रीः। सा च नित्या आद्यन्तरहिता अव्यक्तरूपिणी प्रमाणाप्रमाणसाधारणभूता विष्णोस्संकल्पानुरूपा नित्यानन्दमयी मूलप्रकृतिरूपा शक्तिः तस्मिन् परमात्मनि एव तादात्म्येन तिष्ठति। श्रियः अंशभूता एव अनन्तशक्तयः तदात्मिका एव माया प्रकृतिः। मायी विष्णुः प्रकृतिपुरुषावेतावनादी ताभ्यां लोकप्रवृत्तिः। विकारगुणाः सर्वे प्रकृत्युत्पन्नाः कार्यकारणकर्तृत्वहेतुः प्रकृतिः, पुरुषः सुखदःुखानां भोक्तृत्वे हेतुः। प्रकृतिस्थः पुरुषः प्रकृतिजान् गुणान् भुङ्क्ते।

सा प्रकृतिर्द्विधा भवति चेतनाचेतनेति। अचेतना पञ्चभूतैः मनोबुद्ध्यहंकाररूपैरष्टधा भिन्ना। अन्या जीवभूता चेतनेति। तथा प्रकृत्या सदा संश्लिष्टाः पुरुषाः प्रकृतिस्थाः जीवात्मानः क्षेत्रज्ञाः बहवः, तेऽपि नित्या अनाद्यविद्यासंचितपुण्यापुण्यफलं भोक्तुं बहुविधं देहं प्रविश्य तत्तदात्माभिमानिनः तत्र शुभाशुभकर्माणि कृत्वा तत्तत्फलानुरूपदेहं पुनः पुनः प्राप्य वर्तन्ते इति विज्ञायते।

सृष्टिक्रमे तस्मात् परमात्मनः आकाशः संभूतः। आकाशाद्वायुः वायोरग्निः अग्नेरापः अदभ्यः पृथिवी, पृथिव्याः ओषधयः ओषधीभ्योऽन्नम् अन्नाद्भूतानि जायन्ते। तच्चैवं ओषधीभ्य उत्पन्नमन्नं त्रिविधं भवति। एकं मूत्रम्, एकं पुरीषम्, एकं पुरुषाणां शुक्रं स्त्रीणां शोणितम्। शुक्रशोणिते क्षीरेसर्पिरिव सर्वव्यापिनी मायाशक्तिर्भवति।

---

1. ऋग्वेदः, 10/81/3.
2. ऋग्वेदः, 8/58/2.

पुरषबीजमूलसंचितशुक्रम्, स्त्रीकुचमूलसंचितशोणितञ्च संयोगकाले दैवयोगेन वायुना गर्भालयं प्रविशति। एवं स्त्रीपुरुषात्मिका सृष्टिर्जायते।

चतुर्षु पृथिव्यादि-महाभूतेषु क्रमेणोत्पन्नानि मनोबुद्ध्यहंकारचित्तानीत्यन्तः-करणचतुष्टयम् । तेषां क्रमेण संकल्पविकल्पाऽध्यवसाया अनात्मनि आत्मावबोधनम् अनुभूतार्थस्मरणानि च विषयाः । मनः स्थानं गलान्तरं बुद्धेर्वदनम्, अहङ्कारस्य हृदयम् चित्तेः नाभिरिति।

सात्विकराजसतामसा इति त्रयो गुणाः। अहिंसासत्यास्तेयब्रह्मचर्यकल्पनाऽक्रोध-गुरुशुश्रूषा शौचसंतोषास्तिक्यार्जवा इति सात्त्विकाः । अहङ्कर्ता, अहंवक्ता, अहंभोक्तेत्यादीनि अभिमानगुणा राजसाः । निद्राऽऽलस्य मोहमैथुनस्तेयकर्माणि तामसलक्षणानि।

जीवात्मा अंजनाभः नित्यशुद्धः सर्वगतः इत्येवंभूतदेहे प्रविश्य शुभाशुभकर्माणि करोति। अयं देहः जन्मकृत्वा भार्यामयपाशनिबन्धितो भगवन्मायामोहितः कामक्रोधलोभमोहमदमात्सर्यहिंसादीनि करोति। योनिद्वारेण निष्क्रम्य पुनः पापीयसीं योनिमाश्रित्य पुनर्जायमानः स्वर्गनरकफलेषु कर्मसु प्रवर्तते। तस्मान्भगवन्मायामोहितत्वात् भगवन्तं समाश्रित्य भक्त्या नारायणमुपासीत । तदुपासनात् सोऽपि भक्तवत्सलत्वात् भक्तानुकम्पया स्वानुग्रहशक्त्या मायीयान् बन्धान् मोचयति। तत आत्मा सम्यज्ज्ञानं प्रविशति। पश्चादाश्रमधर्मयुक्तो भगवदाराधनङ्करोति। तदाराधनेन संसारार्णवनिमग्नो जीवात्मा परमात्मानं नारायणं पश्यति पश्चात् कृतकृत्यो भवति। **संसारबन्धनवासनान्मुक्तिर्मोक्षः। तच्च नित्यानन्दं अमृतरसपानवत् सर्वदा तृप्तिकरं परमात्मनो नित्यनिषेवणं परे ज्योतिः प्रवेशनम्** । तथा च श्रुतिः

**वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।**
**एतद्विदित्वातिमृत्युमेति नान्यः पन्थाः विद्यतेऽयनाय॥**[1]

स्मृतिश्च —

**ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति।**
**समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥**
**भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः।**
**ततो मां तत्वतो ज्ञात्वा विशते तदनन्तरम्॥**[2]

---

1. यजुर्वेदः, मा.सं, 13/18.
2. श्रीमद्भगवद्गीता, 18/54-55.

## वैखानसागमे भगवत्समाश्रयणम्

अत्र वैखानसागमे भगवत्समाश्रयणं चतुर्विधमस्ति। जपहुतार्चनध्यानमिति। सावित्रीपूर्वकं वैष्णवीमृचम्, अष्टाक्षरं वा, भगवन्तं ध्यात्वा अभ्यसेत् स जपः। अग्निहोत्रादिहोमेयत् हूयते तद्धुतं होमः। गृहे देवायतने वा वैदिकेन मार्गेण प्रतिमादिषु पूजयेत् तदर्चनम् । निष्कलसकलविभागञ्च ज्ञात्वा अष्टाङ्गयोगमार्गेण परमात्मानं जीव आत्मना चिन्तयेत् तद् ध्यानमिति। अस्मिन् शास्त्रे योगसूत्रवदेव यमाद्यष्टाङ्गयोगस्य वर्णनमस्ति। प्राणायामश्चात्र किञ्चिद्विस्तारेण वर्णितमस्ति तदेवम् "**प्राणापानसमानयोगः प्राणायामः। रेचक-पूरक-कुम्भका इति। स च त्रिविधो भवेत् । निश्वासविसर्गो रेचकः। निश्वासोध्मानः पूरकः। निश्वासनिरोधनं कुम्भकमिति।**" अग्रे वैखानसाम्नाय-परम्परागतप्राणायामस्य विस्तरतो वर्णनमस्ति तत्क्रमे एव प्रत्याहारस्य धारणायाश्च पारम्परिकः विस्तरतो वर्णनमस्ति। ध्यानस्य प्रामुख्यात् तत्र वर्णित-ध्यानस्य स्वरूपं किञ्चित् प्रस्तौमि—

## वैखानसागमे ध्यानम् निर्गुणम्

**परमात्मनः जीवात्मना चिन्तनं ध्यानं** तद्विविधं निष्कलं सकलमिति। निष्कलं देवैरप्यनभिलक्ष्यमदृश्यं स्यात् । सकलं द्विविधं निर्गुणं सगुणं चेति। निर्गुणं निष्कलस्वभावः। **परमात्मनोऽन्यन्न किञ्चिदस्तीति काष्ठे अग्निरिव सर्वं व्याप्य आकाशोपमः सर्वेषामात्मगुहायां निहितः अन्तर्बहिश्च संस्थितो दृश्यादृश्य-स्थूलसूक्ष्मः अमलोऽत्यच्छः अप्रमेयो निरवयवो निरुद्योगो नित्योऽचिन्त्यो निष्कलः तमेव प्राणायामप्रत्याहारधारणाद् आत्मसंस्कारं कृत्वा आत्मना पश्येत्।**

मध्यदेहान्मूर्धपर्यन्तं भ्रुवोर्मध्ये अन्तरात्मानं नारायणं सर्वजगत्कारणमव्ययम् अव्यक्तम् एकरूपं परंज्योतिर्ज्वलति। अवभासयति। "**नारायणं परं ज्योतिरात्मा नारायणः परः**" इति श्रुतिः। तस्मात्प्रधानपरमोऽव्ययो विष्णुः सदा ध्येयः।

निष्कलमेव प्राणायामैर्विकसित - हृदयकमलान्तराकाशे वैश्वानरशिखामध्ये परं ज्योतिर्ज्वालारूपवत् स्वयमेव पुरुषः कृष्ण-पिङ्गलः ऊर्ध्वरेता विरूपाक्षः विश्वरूपः परमानन्दविग्रहो भवेत् तं परमया भक्त्या पश्येत् । सन्निहितो भवेत्। एवं निर्गुण ध्यानं भवति।[1]

## वैखानसागमे सगुणध्यानस्वरूपम्

प्राणमपानेन संयोज्य तमनुप्रविश्य तत्रपुरुषं दृष्ट्वा पुनः पिङ्गलया आदित्यमण्डलमनुप्रविश्य तत्रस्थ-पुरुषं दृष्ट्वा ततश्चेड्या चन्द्रमण्डलमनुप्रविश्य

---

1. **इदं वैखानसागमीयं दर्शनं वेंकटेश्वरमुद्रणालयमद्रासतः ख्रिस्ताब्द 1926 वर्षे प्रकाशित विमानार्चनाकल्पनाम वैखानसागमाश्रितम्। 85 पटलतः 101 पटलपर्यन्तम्**

तत्रस्थपुरुषं दृष्ट्वा ततो ज्वलिताग्निना कुण्डलीमुखज्वलनेन दग्ध्वा सुषुम्नया चोर्ध्वं गत्वा प्राणायामेन विकसितहृदयकमलान्तराकाशे वैश्वानरशिखामध्ये चतुरश्रं हेमाभं बिन्दुना सह यकारबीजान्वितं माहेन्द्रमण्डलं तन्मध्येऽर्धचन्द्राकृतिं श्वेतं बिन्दुना सह वकारबीजान्वितं वारुणं मण्डलं ध्यात्वा, तन्मध्ये प्रणववेष्टितं सुवर्णाभम् आदिबीजं स्मृत्वा प्रज्वलित ज्योतीरूपमेव भक्त्या सकलं संकल्प्य तरुणादित्यसंकाशं विष्णुं ध्यायेत्। शुद्धस्फटिकसंकाशं विष्णुं ध्यायेत्। शुद्धस्फटिकसंकाशं नारायणमूर्तिं वा ध्यायेत्। परमात्मनः यस्मिन् स्वरूपे श्रद्धा, भक्त्या तद्वा ध्यायेत् । अग्निहोत्रादिहोमः तदपि सगुण-ध्यानम्। एतत्सगुणध्यानं सर्वसिद्धिप्रदं सर्वत्र प्रयोक्तव्यम् एतानि वैदिकध्यानमार्गाणि वैखानसागमे मरीचिप्रोक्तानि।[1]

## वैखानसागमे समाधिस्वरूपम्

**जीवात्मपरमात्मनोस्समावस्था समाधिः।**

अनुष्णोपलमादित्यदर्शनादुष्णत्वमाश्रितमिव परमात्मदर्शनात् प्रत्यगात्मा नित्यबुद्धमुक्तस्वभाव- परमानन्दमयत्वं प्राप्य, परमात्मानं नारायणं सदा पश्यत्यनुभवत्येव। अष्टाङ्गयोगमार्गेण नित्यमणिमाद्यैश्वर्यञ्च प्राप्नोति। जीवन्मुक्तो भवति।

## वैखानसागमे देहत्याग-प्रकारः

वैखानसागमे देहत्यागप्रकारोऽपि वर्णितः वर्तते। अथ च अन्त्यकाले सर्वद्वाराणि संयम्य, प्राणमपानेन संयोज्य, शोधयित्वा, सर्वेषु नाडीमार्गेषु निरुध्य ''हंस'' इति सुषुम्नया च ऊर्ध्वं गत्वा, हृदयाम्भोजे प्राणमारोप्य, तदन्तराकाशे परे ज्योतिषि मनोवृत्तिं सुसंयम्य, परमात्मानं पश्यन् भ्रुवोर्मध्ये प्राणमारोप्य, प्रणवाक्षरेण सविन्दुनादेन समुत्थापयित्वा प्राणमुत्सृजति। प्राणेन सह सर्वमात्मनि प्रलीयते।[2] मुक्तो भवति। तद्विष्णोः परमं पदमिति श्रुतिः। एवं वैखानसागमे एव चिदचिद्विशिष्टाद्वैतमतस्य मूलं दृश्यते। यद्यपि एषः शब्दः तत्र प्रयुक्तः नास्ति।

## पाञ्चरात्रागमे तत्त्वविमर्शः

पाञ्चरात्रागमे परमात्मनि शक्तिविशिष्टमद्वैतं दृश्यते। तत्र शुद्धबुद्धमुक्तस्वभावः सच्चिदानन्दस्वरूपः परमात्मा नारायणः अनाहतं ब्रह्म वायुरहिताकाशवत् स्वीये पारमैश्वर्ये स्वावबोधे नैरन्तर्येण भवति। एष अहंविमर्शः एव तस्य परमात्मनः स्वातन्त्र्यशक्तिः।

---

1. इदं वैखानसागमीयं दर्शनं वेंकटेश्वरमुद्रणालयमद्रासतः ख्रिस्ताब्द 1926 वर्षे प्रकाशित विमानार्चनाकल्पनाम वैखानसागमाश्रितम्। 85 फटलतः 101 पटलपर्यन्तम्
2. तत्रैव

यथा नासदीय-सूक्ते ऋग्वेदे —

**"आनीदवातं स्वधया तदेकम्।"**
**तस्माद्धान्यन्न परः किञ्चनास॥[1]**

तथैव अहिर्बुध्न्यसंहितायां

**प्रसुप्ताखिलकार्यं यत् सर्वतः समतां गतम्।**
**नारायणः परं ब्रह्म सर्वावासमनाहतम्।**
**पूर्णस्तिमितषाड्गुण्यमसमीराम्बरोपमम्।**
**तस्य स्तैमित्यरूपा या शक्तिः शून्यत्वरूपिणी।[2]**

अहं विमर्शात्मिकापरमात्मनः स्वातन्त्र्यशक्तेः उन्मेषात्मिका एवास्त्येषा सृष्टिः तद्यथा तत्रैव—

**स्वातन्त्र्यादेव कस्माच्चित् क्वचित्सोन्मेषमृच्छति।**
**आत्मभूता तु या शक्तिः परस्य ब्रह्मणो हरेः॥**
**व्यनक्ति विविधान् भावान् शुद्धाशुद्धान् समूर्तिकान्।**
**तस्या उन्मेष मृच्छन्त्याः स्वातन्त्र्यं यत् सुनिर्मितम्॥[3]**

## पाञ्चरात्रे परमात्मनः सुदर्शनं रूपं विश्वम्

एवं परमात्मनः अहंविमर्शात्मिकाशक्तेः बाह्योन्मेषः इदं विश्वं परमात्मनः सुदर्शनं रूपम् । परमात्मनः क्रियाशक्तिरेव वैविध्येन सर्वभावानुयायित्वेन सुदर्शनरूपा। उक्तञ्च तत्रैव —

**सोऽयं सुदर्शनं नाम संकल्पः स्पन्दनात्मकः।**
**विभज्य बहुधा रूपं भावे भावे अवतिष्ठते ॥[4]**

## पाञ्चरात्रे परमात्मनः पञ्चकृत्यकारित्वम्

सामान्यतया परमात्मनः सृष्टिस्थितिसंहारात्मकं त्रिविधकृत्यं लोके प्रसिद्धम्, किन्तु भक्त्यागमशास्त्रे पञ्चविधकृत्यं स्पष्टतया वर्णितमस्ति। तत्र सृष्टिस्थितिसंहारास्तु पूर्ववदेव। निग्रहानुग्रहात्मकं द्विविधं कृत्यमेव वैशिष्ट्यं भजते। तत्रापि च अनुग्रहस्य अतीव महत्त्वं

---

1. ऋग्वेदः, 10/129/2.
2. अहिर्बुध्न्यसंहिता, 5/2-3.
3. अहिर्बुध्न्यसंहिता, 5/4-5.
4. अहिर्बुध्न्यसंहिता, 3/39.

भक्तिशास्त्रेषु दृश्यते। परमात्मनः पञ्चविधकृत्यानां स्पष्टोल्लेखः प्राथम्येन पाञ्चरात्रागमेषु स्पष्टतया वर्णितमस्ति। तद्यथा अहिर्बुध्न्यसंहितायाः मङ्गलाचरणे।

**अक्षरत्रितयाव्यक्तविकाराक्षादिरूपिणे ।**
**परव्यूहादितत्त्वाय नमश्चक्राय चक्रिणे॥**
**सोमसूर्यानलाकल्यामकल्यामिन्दुशेखराम् ।**
**पञ्चबिन्दुं हरेः शक्तिं पञ्चकृत्यकरीं नुमः॥**[1]

## पाञ्चरात्रे परमात्मनः विविधनाम

सच्चिदानन्दलक्षणः परमात्मा नारायणः वासुदेव एव ओम्, भगवान्, आत्मा, अनन्त, अक्षर, अच्युत, अचिन्त्य, हिरण्यगर्भ, सम, भव, शिवप्रभृतिनाम्नां वाच्यः। एतेषां नाम्नां निरुक्तिरपि दृश्यते अहिर्बुध्न्यसंहितायाम् । तद्यथा —

**शिवंकरतया प्रोक्तः शिवः पाशुपते स्थितैः॥**
**अदूरविप्रकर्षस्थैर्वस्तुतोऽनवगाहिभिः।**
**इत्येवमादिभिः शब्दैस्तत्त्वं तदुपलभ्यते ॥**[2]

## पाञ्चरात्रे परमात्मानुभूतिः मुक्तिश्च

त्रिगुणात्मिकानिग्रहशक्त्यात्मिकाप्रकृतेः वासनाजालात् परमात्मनोऽनुग्रहशक्त्या अनेकजन्मसंसिद्धपुण्यपापनिकृन्तनात् त्रैगुण्योपरमे जीवात्मा स्वेन स्वात्मनि शुद्धबुद्धमुक्तस्वभावं परमात्मानमनुभवति। अवाङ्मनसगोचरः सः परमात्मा अनुभूत्यात्मकः न तु वाग्विषयः। तद्यथा तत्रैव भगवानहिर्बुध्न्यः शिवः वक्ति—

**अनेकजन्मसंसिद्धपुण्यपापपरिक्षये।**
**निकृत्ते वासना जाले सम्यग्विज्ञानशस्त्रतः॥**
**त्रैगुण्योपरमे तत्तु स्वेनानुभवितुं क्षमम्।**
**साक्षादिदमिति व्यक्तं वाचा वक्तुं न शक्नुमः॥**[3]

## पाञ्चरात्रे परमात्मनः षाड्गुण्यम्

पाञ्चरात्रागमे परमात्मनः निर्गुणत्वं प्राकृतगुणान् प्रत्युक्तमस्ति वस्तुतः अप्राकृतषाड्गुण्यसम्पन्नत्वमेव भगवतः भगवत्त्वम्। षडैश्वर्यात्मकं षाड्गुण्यं परमात्मनः

---

1. अहिर्बुध्न्यसंहिता, 1/1-2.
2. अहिर्बुध्न्यसंहिता, 2/39-40.
3. अहिर्बुध्न्यसंहिता, 2/41-42.

एवं वर्णितं दृश्यते—

1- स्वात्मसंबोधि चिन्मयं सर्वावगाहिज्ञानं नित्यं विद्यते परमात्मनि।

एष एव परमात्मनः ज्ञानगुणं प्रथममैश्वर्यम् । सर्वज्ञः परमात्मा इत्यर्थः। ब्रह्मणः स्वरूपमेतत् ।

2- अघटितघटनापटीयसीस्व-शक्त्या परमात्मा जगदात्मनापि स्वात्मानं प्रकाशयति। एष एव तस्य परमात्मनः शक्तिगुणं द्वितीयमैश्वर्यम्।

3- कर्तृत्वे परमात्मनः यत्स्वातन्त्र्यं वर्तते तदेव परमात्मनः तृतीयमैश्वर्यगुणम्।

4- नैरन्तर्येण जगत्कुर्वतोऽपि परमात्मनः श्रम हानिर्न भवति। परमात्मनः चितिशक्त्युन्मेषमात्रत्वात् जगतः। एषा परमात्मनः क्रियाशक्तिः सर्वकर्तृत्वात्मिका। सर्वकर्तृत्वं एष एव परमात्मनः बलगुणम् ।

5- जगतः उपादानभूतोऽपि एषः निर्विकारः। परमात्मनः वीर्यमस्त्येतद्।

6- अस्य जगत्करणे किञ्चिदपि कर्मकरणे वा परमात्मनः सहकार्यपेक्षा नास्ति। तत्तेजगुणम्[1]।

अत्रोक्तानि पञ्च शक्त्यादीनि प्रथमे ज्ञानगुणे एव अन्तर्भवन्ति। परमात्मनः ब्रह्मणः ज्ञानमेव परं गुणमस्ति। तस्य ब्रह्मणः षाड्गुण्यं ज्ञानशक्तेः बृंहणमात्रमेव। तद्यथा पाञ्चरात्रे—

**षाड्गुण्यं तत्परं ब्रह्म स्वशक्ति-परिबृंहितम्।**
**बहु स्यामिति संकल्पं भजते तत्सुदर्शनम्॥**

## पाञ्चरात्रे व्यूहतत्त्वम्

अस्मिन् पाञ्चरात्रागमे व्यूहात्मकसृष्टेः वर्णनमस्ति। वस्तुतः स्वानुभूत्यात्मिका अहंविमर्शात्मिका शक्त्योन्मेषः जगत्सिसृक्षया इदंतया भवति। एषा एव तस्य परमात्मनः विष्णोः विभूतिः शिवस्य शक्तिर्वा। यद्यपि एषा शक्तिर्तस्मिन्नभेदेनैव तिष्ठति। तथापि शक्तेः शक्तिमतो भेद-प्रथनात् वासुदेवे विमर्शात्मिका लक्ष्यमाणा सा लक्ष्मी वासुदेव नाम्ना उच्यते तत्त्वस्य एषावस्था शैवागमे शिवतत्वात् शक्तितत्वोपत्तिरूपा वर्णिता भवति। यदा सः परमात्मा सिसृक्षया आत्मानं इदंतयापि समभावेन व्यनक्ति तदा सः संकर्षणः इत्युच्यते। अस्यामवस्थायामहमात्मिकाज्ञानशक्तेः प्राबल्येऽपि इदंतया स्फुरन्ती इच्छाशक्तेः अपि स्फुटता भवति। तद्यथा — **"तत्र ज्ञानबलद्वन्द्वात् रूपं सांकर्षणं हरेः।"**[2] **"वासुदेवः सिसृक्षया विभजत्यात्मनात्मानं यः स साङ्कर्षणः स्मृतः।"**[3] सूर्योदये

1. अहिर्बुध्न्यसंहिता, 2/62.
2. अहिर्बुध्न्यसंहिता, 5/17.
3. अहिर्बुध्न्यसंहिता, 5/30.

यथा शैलोपरि प्रभा प्राथम्येन दृश्यते तद्वदेव परमात्मनः इच्छायाः स्पष्टता संकर्षणात्मिका भवति शैवागमे सदाशिवतत्त्वमेतत्। ततोऽग्रिमावस्था इच्छाशक्तिः किञ्चिदधिकस्पष्टतया यत्र क्रियोन्मुखी भवति अच्युतपरमात्मनः सा प्रद्युम्नावस्था **"ऐश्वर्यवीर्यसंभेदाद्रूपं प्राद्युम्नमुच्यते।"**[1] शैवागमे ईश्वरतत्त्वमेतत् । सा एव शक्तिः इच्छाप्राबल्येन यदा क्रियात्मिका भवति स्थूलसृष्टेः प्रवेशस्य पूर्वरूपं यत्र क्रियाशक्तेः अवरोधः समाप्यते तदनिरुद्धात्मकं तत्त्वं व्यूहं वा। **"शक्तिः तेजः समुत्कर्षादानिरुद्धी तनुर्हरेः।"**[2] चतुर्व्यूहात्मिका एषा शुद्ध सृष्टिः। शैवागमे अनिरुद्धव्यूहं एव शुद्धविद्यातत्वेनोक्तं भवति। एतदनन्तरं स्थूल सृष्टिर्भवति।

## पाञ्चरात्रे भक्त्या तत्त्वज्ञानाच्च मुक्तिः

स्वलीलया सः परमात्मा स्वनिग्रहशक्त्या जगतः मुक्तोऽपि स्वात्मानं जगदात्मनापि अवभासयति। मायाबद्धः जीवः स्वान्तर्यामिनं स्वात्मन्येवोपस्थितं परमात्मानं न पश्यति। स्वात्मन्यवस्थितस्य परमात्मनः षडैश्वर्यं नानुभवति। अल्पज्ञादिकं षड् सीमितगुणेन युक्तो भवति परमात्मनः अंशात्मकाः अल्पज्ञादिगुणाः स्वात्मनि पश्यन्नपि परमात्मानं स्वात्मनि न पश्यति। शैवनये पञ्चकञ्चुकेन षट्कञ्चुकेन वा वद्धः भवति। परमात्मनः अनुग्रहशक्त्या परमात्मानं प्रति समर्पणेन विगलितशरीराहंकारेण स्वात्मनि परमात्मानं प्राप्य कृतकृत्यो भवति। यथा भगवतः श्रीकृष्णेन गीतम्—

**भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः।**
**ततो माम् तत्वतो ज्ञात्वा विशते तदनन्तरम् ॥**[3]

## पाञ्चरात्रे एकमेव परमतत्त्वम्

पाञ्चरात्रागमे शक्तिः शक्तिमतोरभिन्नास्ति भेदं तु जगद्धेतुतया दृश्यते—

**योऽसौ नारायणो देवः परमात्मा सनातनः।**
**अहं भावात्मिका शक्तिस्तस्य तद्धर्मधर्मिणी॥**
**ताविमावेकधैवोक्तौ भेद्यभेदकभावतः।**
**पृथक्त्वेन च शास्त्रेषु जगद्धेतुतयोदितौ॥**[4]

## शैवशाक्तागमे तत्त्वविमर्शः

## प्राथम्येन शैवागमः शैवसिद्धान्तगमश्च

वैखानसागमवदेव शैवसिद्धान्तागमे विशिष्टाद्वैतमतस्यैव स्वीकृतिर्दृश्यते। अत्र शैवसिद्धान्तागमे पतिपशुपाशानां तत्त्वत्रयमध्ये पशूनां चालनात् पतिशब्देन शिव उक्तः।

1. अहिर्बुध्न्यसंहिता, 5/17.
2. अहिर्बुध्न्यसंहिता, 5/18.
3. श्रीमद्भगवद्गीता, 18/55.
4. अहिर्बुध्न्यसंहिता, 6/1-2.

पशवो ह्यणवः अणुत्वसम्पादक-मलादि-सम्बन्धिनश्च। शिवस्वभावा जीवाः स्वरूपबोधरहिताः मलावृताः पाशबद्धाः पशवः,[1] न तु चतुष्पादा एव द्विपदामपि पशुत्वश्रवणात् यथा च श्रुतिः—

**"एतावन्तो वै पशवो द्विपादश्चतुश्पादश्च यो वै**
**वामिन्द्रावरुणा द्विपात्सु पशुषु वा चतुष्पात्सु पशुषु।"** इति

तेषामीश्वरत्वाद् भगवतः शिवस्य पशुपतित्वम्। श्रुतावपि —

**येषामीशे पशुपतिः पशूनां चतुष्पदामुत-च द्विपदामिति।**

यथोक्तं लैङ्गोपरिभागे —

**ब्रह्माद्याः स्थावरान्ताश्च देवदेवस्य धीमतः**
**पशवः परिकीर्त्यन्ते संसारवशवर्तिनः॥**
**तेषां पतित्वाद्भगवान् रुद्रः पशुपतिः स्मृतः।**[2]

ये दशपूर्वशैवागमावलम्बिनः सन्ति ते द्वैतवादिनः तेऽपि परमतत्त्वपक्षे एकत्वं स्वीकुर्वन्ति अतस्ते द्वैताद्वैतवादिनः इति वक्तुं शक्यते। एतेषां मते पाशमुक्तोऽपि पशुः शिव एव न भवति। अपितु शिवसायुज्यं प्राप्य शिवाद्भिन्न एव तिष्ठति। शिवस्य अनादिमुक्तस्वभावत्वात्। तद्यथा शैवागमे—

**किन्त्वेते तत्प्रसादत्तो मुक्ताः। सोऽनादिमुक्त एको विज्ञेयः। पञ्चमन्त्रतनुः।**[3]

मुक्तानां विषये शास्त्रेषु शिवशब्दस्य प्रयोगः मलानामात्यन्तिकराहित्यात्, अत्यन्त परिशुद्धात्मत्वाद् शिवसमानतां प्राप्य एते मुक्ता अपि शिवाः तद्यथा वायवीयागमे—

**अनादिमलसंश्लेषप्रागभावात् स्वभावतः।**
**अत्यन्तपरिशुद्धात्मत्यतोऽयं शिव उच्यते॥**[4]

पुरुषाणां तिरोधायिका परमात्मनः शक्तिरेव पाशशब्देन गीयते पाशानुग्राहित्वाद्। संक्षेपेणोक्तानां पतिपशुपाशानां तत्त्वानां विस्तार एव षट्त्रिंशत् तत्त्वानां स्वरूपम्। शैवसिद्धान्ते विशिष्टाद्वैतमतस्य स्वीकृतिर्दृश्यते।

---

1. तत्त्वप्रकाशस्य तात्पर्यदीपिकाटीकायामुद्धृतम् 5.
2. तत्त्वप्रकाशस्य तात्पर्यदीपिकाटीकायामुद्धृतम् लैङ्गोपरिभागात् 5.
3. तत्त्वप्रकाश 6.
4. तत्त्वप्रकाशस्य तात्पर्यदीपिकायां वायवीयागमादुद्धृतम् 6.

## काश्मीरशैवागमः

काश्मीरशैवागमेऽपि पाञ्चरात्रागमवत् शुद्धबुद्धमुक्तस्वभावः सच्चिदानन्दस्वरूपः परमात्मा शिवः स्वावबोधे नैरन्तर्येणास्ति। अस्य प्रकाशरूपपरमात्मनः अहंविमर्शात्मकः स्वावबोध एव स्वातन्त्र्यशक्तिः। इच्छाज्ञानक्रियात्मिका एषा परमात्मनि शिवे तादात्मिकाशक्तिरेव सर्वं सृजति संहरति च। पाञ्चरात्रगमवत् अत्रापि शक्तिशक्तिमतोरभेद एवास्ति। यथा पाञ्चरात्रे —

**नमो नित्यानवद्याय जगतः सर्वहेतवे।**
**ज्ञानाय निस्तरङ्गाय लक्ष्मीनारायणात्मने॥**
**भवद्भावात्मकं ब्रह्म ततस्तच्छाश्वतं पदम्।**
**भवन्नारायणो देवो भावो लक्ष्मीरहं परा।**
**तादात्म्यं विद्धि संबन्धं मम नाथस्य चोभयोः**
**अहं तया विनाहं हि निरुपाख्यो न सिध्यति।**[1]

स्वच्छन्दतन्त्रे च —

**शिवाभिन्ना पराशक्तिः सर्वकर्मशरीरिणी।**
**न शिवेन विना देवी न च देव्या विना शिवः॥**
**नानयोरन्तरं किञ्चिद् चन्द्रचन्द्रिकयोरिव।**[2]

पराप्रावेशिकायाम् —

**विश्वात्मिकां तदुत्तीर्णां हृदयं परमेशितुः।**
**परादिशक्तिरूपेण स्फुरन्तीं संविदं नुमः॥**[3]

अस्मिन् कश्मीरनये परमेश्वरः प्रकाशात्मा प्रकाशश्च विमर्श-स्वभावः। विमर्शश्च, विश्वाकारेण विश्वप्रकाशनेन विश्वसंहरणेन अकृत्रिमाहंस्फुरणम्। अत्रास्मिन् कश्मीरनये पाञ्चरात्रागमवर्णितव्यूहस्थाने जगत्सिसृक्षाक्रमे पञ्चतत्त्वानामुद्भवः शिवाद् भवति। पश्चाद्वर्तित्वा दत्राभिव्यक्तिः स्पष्टतरास्ति। कश्मीरनये तस्य परमात्मनः स्वात्मविमर्श एव चित्, चैतन्यं, स्वरसोदिता परावाक्, स्वातन्त्र्यं, परमात्मनो मुख्यमैश्वर्यं, कर्तृत्वं, स्फुरत्ता, सारं, हृदयं, स्पन्दः इत्यादिशब्दैरुक्तमस्ति। पाञ्चरात्रागमेऽपि एतेषां शब्दानां प्रयोगोऽस्मिन्नर्थे एव दृश्यते।

मूलतः सामान्येषु शिवशक्तिकथनेनैव द्वैतभावमायाति। आगमशास्त्रे शिवाद्भिन्ना कापि शक्तिर्नास्ति। अत्र शिवपदेन पाञ्चरात्रे च विष्णुपदेन चैतन्यं परं तत्त्वमेवोक्तमस्ति।

---

1. लक्ष्मीतन्त्रम् 1/1 एवं 2/15-18.
2. स्वच्छन्दतन्त्रम्
3. पराप्रावेशिकायाः मङ्गलाचरणम्

लोकेऽपि दृश्यते यः ज्ञानवान् भवति, स्वावबोधयुतो भवति तदेव जीवितं चैतन्यम् । तद्विपरीतं यत्र स्वावबोधो नास्ति, किमपि न हि अनुभवति तज्जडम् । एवमेव सृष्टिरहिते अद्वितीये परमे तत्त्वे स्व-सत्तायाः अवबोधो भवति, अन्यथा जडत्वं प्रसज्येत् । जड़ात् किमपि बोधात्मकं न हि जायमानं दृश्यते। तत्र किमपि गतिः स्पन्दनं वा न भवति। अपितु जडभूतानामपि प्रकाशः जीवितानामाश्रित एव भवति। यथोत्पलदेवः ईश्वरप्रत्यभिज्ञाकारिकायाम् वदति —

**तथा हि जडभूतानां प्रतिष्ठा जीवदाश्रया।**
**ज्ञानं क्रिया च भूतानां जीवतां जीवनं मतम्।।**[1]

एषा सृष्टिः गतिमती नूतनतामाप्नुवन्ती विविधात्मिका चेतना चेतनैर्जीवैः क्रियाशक्तिमती दृश्यते। अनेनैव भाति यदस्याः मूले परमे निलये स्वावबोधात्मिका चेतना विद्यते एव। अस्य परमतत्त्वस्य यः स्वात्मावबोधः अयमेव परमशिवस्य, विष्णोर्वा स्वात्मविमर्शः "अहम्" इत्याकारकः। परमात्मनः एषः स्वात्मविमर्श एव शक्तिपदेन अभिहितः अतः शिवशक्त्योरभेद एव। अवबोधार्थमेव पदान्तरेण व्यक्तम् । स्पष्टमस्ति एष स्वात्मप्रकाशः स्वात्मविमर्शात्मक एव तथा स्वात्मविमर्शश्चापि स्वात्मप्रकाशरूप एव। अत एव उक्तं स्वावबोधः प्रकाशविमर्शात्मकः। मूलं तत्त्वं परमव्योमनिलयः चिद्रूपः। परमचिद्व्योम एव प्रकाशः शिवः चितिरेव विमर्शशक्तिः। अत एव एषः शिवः अन्तर्लीनविमर्शः इत्युक्तः —

**सकलभुवनोदयस्थितिलयमयलीलाविनोदनोद्युक्तः।**
**अन्तर्लीनविमर्शः पातु महेशः प्रकाशमात्रतनुः।।**[2]

चितिः ज्ञानरूपा। ज्ञानेनैव सीमा निर्धारणम्, एवमेव अहम् इत्यस्मिन् अवबोधे, स्वभावतयैव अहमिदमित्यवबोधः भवत्येव। इदंतया परामर्शकज्ञानेन निःसीमः शिवः स्वत एव सीमाबद्धः भवति। अत एव उक्तं शिवसूत्रे —

**"चैतन्यमात्मा"। "ज्ञानं बन्धः।"**[3]

प्रत्यभिज्ञा-हृदयेऽपि च—

**"चितिः स्वतन्त्रा विश्वसिद्धिहेतुः।"**[4]

एतत् स्वाभाविकसीमाबद्धत्वमेव शिवस्य आत्मगोपनं तिरोधानं वा। अनन्त-

1. **ईश्वरप्रत्यभिज्ञा कारिका, 1/1/3.**
2. **कामकलाविलासः।**
3. **शिवसूत्रम्, 1/1-2.**
4. **प्रत्यभिज्ञाहृदयम्, 1/1.**

जीवोत्पत्तिरहस्यं सृष्टिरहस्यमुक्तम् —

**परशिवरविकरनिकरे प्रतिफलति विमर्शदर्पणे विशदे।**
**प्रतिरुचिरुचिरे कुड्ये, चित्तमये निविशते महाबिन्दुः॥**
**चित्तमयोऽहङ्कारः सुव्यक्ताहनि समरसाकारः।**
**शिवशक्तिमिथुनपिण्डः कवलीकृतभुवनमण्डलो जयति॥**[1]

विविधात्मके स्वात्मगोपनात्मकव्यष्टिरूपप्रकाशनेन सह तस्य परमात्मनः समष्टिरूपस्वात्मप्रकाशनं तु भवति एव विमर्शस्वभावात् प्रकाशन स्वभावाच्च—

**पूर्णाहन्तात्मभावेन कृत्रिमाहंतया विना।**
**आत्मानमात्मना साक्षाद् यः पश्यति स पश्यति॥**[2]
**विश्वात्मिकां तदुत्तीर्णां प्रकाशामर्शरूपिणीम्।**
**परापरमयीं देवीमात्मत्वेन विशाम्यहम्॥**[3]

अयमेव शिवशक्तेः स्वात्म-चमत्कारः वर्णितोऽस्ति आगमेषु—

**जगच्चित्रं समालिख्य स्वेच्छा तूलिकयात्मनि।**
**स्वयमेव समालोक्य प्रीणाति परमेश्वरः॥**[4]

शाक्तागमेषु च —

**जगच्चित्रं समालिख्य स्वयमेवात्मविग्रहाम्।**
**स्वयमेव समालोक्य सन्तुष्टां परमाद्भुताम्॥**
**प्रकाशजीवसंलीनविमर्शात्मस्वरूपिणीम्॥**[5]

यथा एकमेव जलतत्त्वमुपाधिवशात् तरङ्गफेनबुदबुदात्मना अप्रच्युतस्वभावं त्रैविध्यभाक् अवगम्यते। तथाऽयं शिवोऽपि अप्रच्युतस्वस्वभावस्त्रैविध्यं पतिपशुपाशात्मकमनुभवति।

**पाश्यः पाशयिता पाशाः त्रयमेतद् व्यवस्थितम्।**[6]

---

1. कामकलाविलासः, 4,5.
2. रहस्यागमः
3. सच्चिदानन्दवासना
4. हंसविलासः
5. हंसविलासः
6. परावासना

द्वैविध्य-स्वीकार-पक्षे प्रकृति-पुरुषात्मना द्वैविध्ये प्रकृतितदुपहितात्मना त्रैविध्यसंभव इति। षट्त्रिंशान्तेषु चतुष्ट्यादिषु चेतनतत्त्वानामत्रैवान्तर्भावात् तत्त्रैविध्योपपत्तिः।

तत्त्वत्रयपक्षे तत्र षट्त्रिंशत्तत्त्वानामेवमित्थमन्तर्भावः दृश्यते। पत्यौ शिवशक्तिसदाशिवेश्वरशुद्धविद्येति शुद्धानां तत्त्वानामन्तर्भावः। मायाकार्याणां शुद्धाशुद्धानां पाशेऽन्तर्भावः। मायाविद्यारागकालकलानियतितत्त्वानि शुद्धाशुद्धतत्त्वानि। पुरुषः एव पशुः। अव्यक्तादिपृथिव्यन्तानि केवलशुद्धानां तत्त्वानामपि पाशे एव अन्तर्भावः।

**शैवागमेषु मुख्यं पतिपशुपाशा इति क्रमात् त्रितयम्।**
**तत्र पतिः शिव उक्तः पशवोह्यणवोऽर्थपञ्चकं पाशः॥**[1]

उपर्युक्ते प्रकाशविमर्शात्मके शिवस्वरूपे यथा शिवः स्वपरामर्शस्वभावादेव सीमितज्ञानेन स्वतिरोधानेन आत्मगोपनेन जीवभावं प्राप्नोति। तथैव स्वसमष्टिपरामर्शस्वभावात् अनुग्रहशक्त्या परमार्थ-बोधं कारयति स्वस्वरूपस्य —

**अहमि प्रलयङ्कुर्वन्निदमः प्रतियोगिनः।**[2]
**अहमित्यक्लमाक्रान्तसमस्त-भुवनत्रयम् ॥**[3]

एवं यथा पाञ्चरात्रागमे परमात्मनः विष्णोः पञ्चकृत्यकारित्वमुक्तमस्ति तथैवात्रशैवागमेऽपि परमात्मनः पञ्चकृत्यकारित्वं स्पष्टतया वर्णितमस्ति।



---

1. तत्त्वप्रकाशः 5.
2. परापञ्चाशिका
3. शिवानन्द स्वामी

षष्ठोऽध्यायः

# आगमेषु आम्नायपरम्परा गुरुतत्वविमर्शश्च

आगमपरम्परायां परमविज्ञानरूपस्वस्वरूपसाक्षात्कृतधर्मा गुरुः परमकल्याण-प्रदायक-सामर्थ्येन युक्तत्वात् साक्षाच्छिव एव। उक्तञ्च —

"गुरुः शिवो देवः गुरुः शिव एव लिङ्गम्"[1] इति।

"**देवमिवाचार्यमुपासीत**"[2] इत्यपि।

तदेव स्पष्टतरमागमेषु तद्यथा कामकलाविलासे चिद्वल्यां नटनानन्देनोद्धृतम्—

**शिवशक्तिसमायोगाज्जन्मातरकृताच्छुभात्।**
**शिवपूजानु चिन्ता स्यात् कर्मसाम्यं यदा भवेत्।।**
**शिव एव तदा साक्षादास्थाय गुरुविग्रहम्।**
**दीक्षां करोति विश्वात्मा शम्भुशक्त्यनुवेधतः।।**[3]

ततोऽप्यधिकं रुद्रयामले—

**गुरौ मानुषवुद्धिन्तु मन्त्रेषु लिपिभावनम्।**
**प्रतिमासु शिलारूपं विभाव्य नरकं व्रजेत्।।2/64।।**[4]

विस्तृतञ्च हंसविलासे—

**मनुष्यचर्मणा बद्धः साक्षात्परतरः शिवः।**
**स्वशिष्यानुग्रहार्थाय गुरुरूपाटति क्षितौ।।**
**नरवद् दृश्यते लोके श्रीगुरुः पापकर्मिणाम्।**
**शिववद्दृश्यते साक्षाद् नराणां पुण्यकर्मिणाम्।।**

---

1. रुद्रोपनिषद्, 3.
2. आपस्तम्बधर्मसूत्रम्, 1/6/13.
3. कामकलाविलासस्य चिद्वली टीका 1.
4. रुद्रयामलम्, 2/64.

**गुरुः सदाशिवः साक्षात् सत्यमेव न संशयः।**
**शिव एव गुरुर्नो चेद् भुक्तिमुक्तिप्रदः कथम्।।**[1]

एवं स्पष्टं यत् सर्वेषामेवागमानां वक्ता गुरुः शिव एव। पुनश्च शिष्येषु या श्रद्धारूपा शक्तिरस्ति तया शक्त्यैव असौ गुरोरुपदिष्टं ज्ञानमात्मसात्करोति। अथवा अनुग्रहात्मिका सा श्रद्धारूपा शक्तिरेव शिष्येष्वुपस्थिता गुरुविग्रहधारी शिवमुखाद् ज्ञानं गृह्णाति। तद्यथा परापञ्चाशिकायाम् —

**''तस्यैवैषा परादेवी स्वभावामर्शनोत्सुका।**
**पूर्णत्वं सर्वभावानां यस्या नाल्पं न वाधिकम्।।''**[2]

अत एव सर्वेषामेवागमानां वक्ता शिवः श्रोत्री चानुग्रहात्मिका गिरिजारूपा श्रद्धामयी शक्तिः। तदेवोक्तं कामकलाविलासे—

**आसीनः श्रीपीठे कृतयुगकाले गुरुश्शिवो विद्याम्।**
**तस्मै ददौ स्वंशक्त्यै कामेश्वर्यै विश्वरूपिण्यै।।**[3]

अत्रास्मिन्प्रसङ्गे गुरोः ज्ञानप्राप्तिकाल एव कृतयुगकालः विमर्शात्मिकाचितेः युक्तत्वात्। तद्यथा भर्तृहरिः —

**''चैतन्यमिव यश्चायमविच्छेदेन वर्तते।**
**आगमस्तमुपासीनो हेतुवादैर्न बाध्यते।।**[4]

पूर्णचैतन्यत्वमेव कृतयुगकालः इत्युक्तमैतरेये—

**कलिः शयानो भवति उज्जिहानस्तु द्वापरः।**
**उत्तिष्ठंस्त्रेता भवति कृतं वै विन्दते चरन्।।**[5]

एषा ज्ञानागमनपरम्परा स्पष्टीकरणार्थमेव तन्त्रशास्त्रेषु आगमशब्दे ''आगतं गतं मतमिति'' अक्षरत्रयसन्निवेशमधिकृत्य बहुत्र एषा श्लोकात्मिका व्याख्यापि दृश्यते—

**आगतं शिववक्त्रेभ्यो गतञ्च गिरिजाश्रुतौ।**
**मतञ्च वासुदेवस्य तस्मादागम उच्यते।।**[6]

---

1. हंसविलासः 6.
2. उद्धृतं कामकलाविलासस्य चिद्वलीटीकायाम् 1.
3. कामकलाविलास 51.
4. वाक्यपदीयम् 1/41.
5. ऐतरेयब्राह्मणम् 7/15.
6. (क) पद्मसंहितातः उद्धृतं विष्णुसंहिता भूमिकायाम् (नागपब्लिकेशन्स, 1991 ई.)
   (ख) शारदातिलकादुद्धृतवान् पं. व्रजवल्लभद्विवेदः स्वीये आगममीमांसा ग्रन्थे विमर्श-वेदिकायाम्, तत्र द्वितीयपंक्तौ पाठान्तरमेवमस्ति–
   ''तदागम इति प्रोक्तं शास्त्रं परं पावनम्'' प्रथमपंक्तिस्तु तथैव।

सर्वात्मकत्वाच्चाध्यात्मविज्ञानस्य वासुदेव एवैतत्।

बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः।।[1]
यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते।।
नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः।।
तस्मादसक्तः सततं कार्यं कर्म समाचर।
असक्तो ह्यचरन्कर्म परमाप्नोति पूरुषः।।[2]

अथवा भगवता वासुदेवेन कृष्णेन यदौपनिषदमध्यात्मविज्ञानं स्वशिष्याय अर्जुनाय गीतं तदेव तथैव गुरुशिष्यपरम्परयागतत्वात् विस्तृतत्वाच्चागमरूपेण ख्यातम्। तदेवात्र श्लोके "**मतं च वासुदेवस्य**" इत्युक्तम्। अतीव प्राचीनत्वात् तस्य विज्ञानस्य। उक्तश्चापि तत्रैव—

"इमं विवस्वते योगं प्रोक्तवानहमव्ययम्।
विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत्।।
एवं परम्पराप्राप्तमिमं राजर्षयो विदुः।
स कालेनेह महता योगो नष्टः परंतप।।
स एवाऽयं मया तेऽद्य योगः प्रोक्तः पुरातनः।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम्।।[3]

अत उपनिषत्सु शिववद् गुरुपूजाविधानम् —

यस्य देवे पराभक्तिर्यथा देवे तथागुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः।।[4]

---

1. भगवद्गीता 7/19
2. भगवद्गीता 3/17,18,19.
3. गीता 4/1-3.
4. श्वेताश्वतरोपनिषद् 6/23.

गुरुञ्च शिववद् भक्त्या नमस्कारेण पूजयेत्।
कृताञ्जलिस्त्रिसन्ध्यञ्च भूमिविन्यस्तमस्तकः।।[1]

## शक्तिरूपो गुरुः आगमश्च

येषां मते विमर्शात्मिका चितिशक्तिरेव स्वानुग्रहेण ज्ञानदात्री तेषां मते कारुण्यवात्सल्यरसाप्लाविता सा जगदम्बा चितिरेव गुरुविग्रहात्मिका स्वरूपावबोधात्मकं ज्ञानं ददाति। यथा माता क्षुधामयीं तृषामवलोक्य शिशोः स्वीयामृतात्मकं दुग्धपूरितं स्तनं पाययति। तद्यथा रुद्रयामले—

या माता मयदानवादिस्वभुजा निर्वाणसीमापुरे ।
स्वाधिष्ठाननिकेतने रसदले वैकुण्ठमूले मया ।।
जन्मोद्धारविकारसुप्रहरिणी वेदप्रभा भाव्यते ।
कन्दर्पार्पितशान्तियोनिजननी विष्णुप्रिया शाङ्करी ।।
या भाषाननकुण्डली कुलपथाच्छामाभशोभाकरी ।
मूले पद्मचतुर्दले कुलवती निश्वासदेशाश्रिता ।।
साक्षात्काङ्क्षितकल्पवृक्षलतिका सूद्भाषयन्ती प्रिया ।
नित्या योगिभयापहा विषहरा गुर्वम्बिका भाव्यते ।।
ऊर्ध्वाम्भोरुहनिःसृतामृतघटी मोदोद्वलाप्लाविता ।
गुर्वास्या परिपातु सूक्ष्मपथगा तेजोमयी भास्वती ।।
सूक्ष्मा साधनगोचरामृतमयी मूलादिशीर्षाम्बुजे ।
पूर्णा चेतसि भाव्यते भुवि कदा माता सदोर्ध्ववामगा ।।[2]

न च मातृरूपः एव गुरुः किन्तु प्रियतमारूपोऽपि। यथा सुललितयौवना विकसितवदना नारी स्वानुरक्तस्य पुरुषस्य निश्छलं सत्यमनुरागं विज्ञाय तं प्रतिवरणपूर्वकं स्वीयं रहस्यमुद्घाटयति, तथैवानुग्रहशक्तिसम्पन्नः चितिस्वरूपो गुरुरपि चितिस्वरूपावबोधाकाङ्क्षिणमधिकारिणं विज्ञाय तं शिष्यं वृणोति परमरहस्यात्मकं चितिस्वरूपं ज्ञानमुद्घाटयति च। तद्यथा योगिनी-हृदये—

त्वामिच्छाविग्रहां देवीं गुरुरूपां विभावयेत्।
त्वन्मयस्य गुरोः शेषं निवेद्यात्मनि योजयेत्।।[3]

---

1. शिवोपनिषद् 7/5.
2. रूद्रयामलम् 2/43-45.
3. योगिनीहृदयम् 3/198.

अस्य मन्त्रस्य व्याख्यानेऽमृतानन्दयोगिनोऽपि दीपिकायाम् "त्वामिति! देवीं विमर्शरूपिणीं विश्वानुजिघृक्षया गृहीतलीलाविग्रहां त्वामेव गुरुरूपां विभावयेत्। त्वन्मयस्य त्वद्रूपस्य गुरोस्तद्धेतुं निवेद्य शेषं देवतागुरुनिवेदितात्मनि योजयेत्। यावत्साधकस्ताभ्यां समरसीभवति। तावच्छेषं स्वयमुपभुञ्जीतेत्यर्थः।"

गुरुरेवाधिकारिणं शिष्यं विज्ञाय तस्मै चितिसामरस्यात्मकममृतं ददाति। शिष्येषु चितिस्वरूपोपलब्धयोग्यगुरुविज्ञाने सामर्थ्याभावात्।

**आश्रमी ध्याननिष्ठश्च मन्त्रतन्त्रविशारदः।**
**निग्रहानुग्रहे शक्तो वशी मन्त्रार्थजापकः॥[1]**

तथैव असौ गुरुरनधिकारिणं विज्ञाय चितिरहस्यं गोपयति। यथा— अनघा सुव्रता सुमना नारी अनधिकारिणं परपुरुषं प्रति स्वगुह्यं गोपयति। उक्तञ्च तत्रैव योगिनीहृदये—

**गोपनीयं प्रयत्नेन स्वगुह्यमिव सुव्रते।**
**चुम्बके ज्ञानलुब्धे च न प्रकाश्यं त्वयानघे॥**
**अन्यायेन न दातव्यं नास्तिकानां महेश्वरि॥[2]**

विध्यतिक्रम एवान्यायः। नास्ति किमपि सच्चित्तत्त्वमिति ये मन्यन्ते ते नास्तिकाः। भक्तिहीनोऽनेकत्रासक्तः विद्यामात्र-पाठाच्चुम्बकः। ज्ञानलुब्धो विद्या-साधारण्यात् काव्यनाटकादि-विद्यावदत्रापि ज्ञानं सम्पाद्यमिति मन्वानः। एतेषां कृते इदं रहस्यं गुरुभिः न प्रकटीकरणीयं यथा नारी परपुरुषेभ्यो प्रयत्नेन स्वगुह्यं गोपयति।

गुरुः योग्यशिष्यप्राप्त्यनन्तरं चितिरहस्यात्मकं स्वीयं विज्ञानं तस्मै प्रददाति। शिष्यश्च तादात्म्येन बाह्याभ्यन्तरं विस्मृत्य चितिरहस्यात्मकं तममृतमातृप्तिपर्यन्तं पिबति। यथा पुरुषः स्वाभिलषितां सुललितयौवनां विकसितवदनां स्वयमागतां नारीं प्रियतमां स्वेच्छया समर्पिताङ्गां प्राप्य भुङ्क्ते। उक्तञ्च—

**जायया सम्परिष्वक्तो न बाह्यं वेद नान्तरम्।**
**निदर्शनं श्रुतिः प्राह मूर्खस्तं मन्यते विधिम्॥[3]**

अत्रापि स्त्रीसङ्गानन्दाविर्भूतानन्दशक्तिसमावेशान्ते यद् घट्यनुरणनरूपं सुखोत्कर्षं, त्यक्तस्त्रीपुरुषद्वैतपर्यालोचनं स्वात्ममात्रनिष्ठं, तत् सुखं स्वकमेव स्वाक्यम्, आत्मन एव सम्बन्धि, न अन्यत आयातं भावयेत्। स्त्रीसङ्गस्तु-अभिव्यक्तिकारणमेव, यतः स्वक एव

1. रुद्रयामलम्, 2/52.
2. योगिनीहृदयम् 3/202-203.
3. विज्ञानभैरवविवृत्त्यामुद्धृतमस्ति, कारिका-69, चौखम्भा सुरभारती प्रकाशनाद् प्रकाशितम्, 1991 ई. वर्षे.

स आनन्दः। तथैव गुरुः पराचितेः स्वरूपं ज्ञापयति किन्तु पराचितौ उपस्थितिः ब्रह्मानन्दावाप्तिस्तु त्यक्तद्वैतपर्यालोचनं स्वात्ममात्रनिष्ठम् आत्मन एव सम्बन्धि, न अन्यत आयातं भवति। गुरोरुपदेशस्तु अभिव्यक्ति-कारणमेव।

**अतो गुरुरुपायोऽत्र तदुपायप्रदर्शनात्।।**[1]

तद्यथा त्रिपुरारहस्ये हेमलेखा पराचितेः स्वरूपं पतिं हेमचूडं ज्ञापयन्ती उक्तवती—

**न ह्यादेशस्वरूपेऽस्ति तत आदेष्टृवर्जितम्।**
**स्वं रूपं स्वात्मना पश्य शुद्धबुद्धिसमाश्रयम्।।**[2]

एवमागमशास्त्रेषु एतदपि सुस्पष्टं यत् चितिस्वरूपोपलब्धा पत्नी अपि योग्या गुरुः भवति यथा चितिस्वरूपोपलब्धः पतिः। अत एव तन्त्रशास्त्रेषु एवमपि दृश्यते यत् वक्ता भैरवीशक्तिः श्रोता च भैरवः शिवः यथा रुद्रयामले। उक्तश्लोके एवं परिवर्तनमपि दृश्यते यत् "**आगतं गिरिजावक्त्राद्, गतञ्च गिरिशश्रुतिम्।**" श्रद्धाधिक्यात् एतादृशानामागमानां निगमसंज्ञापि कृता दृश्यते क्वचित् क्वचित्,

**निर्गतो गिरिजा वक्त्राद् गतश्च गिरिशश्रुतिम्।**
**मतश्च वासुदेवस्य निगमः परिकल्प्यते।।**[3]

किन्तु कुत्रापि निगमशब्देन तन्त्रशास्त्राणां व्यवहारः नास्ति, तदर्थन्तु आगमशब्द एव रूढः सर्वत्र। वस्तुतः गुरुशिष्यपरम्पराप्राप्तमाध्यात्मिकं ज्ञानमेवागमः।।

आगमशास्त्रेष्वेतद् स्पष्टमस्ति यत् यथा स्वरूपद्रष्टा पुरुषः योग्यः आचार्यः तथैव चितिस्वरूपोपलब्धा स्वात्मद्रष्ट्री चितिस्वरूपा योगिनी नारी अपि योग्या आचार्या भवति। तत्र सौभाग्यवती शान्ता कुलीना सुव्रता सधवा नारी श्रेष्ठा।

**शान्ता कुलीना कुलजा चन्द्रास्या सर्ववृद्धिगा।**
**अनन्तगुणसम्पन्ना रुद्रत्वदायिनी प्रिया।।**
**गुरुरूपा भुक्तिदात्री शिवज्ञानस्वरूपिणी।**
**गुरुयोग्या भवेत् सा हि विधवापरिवर्जिता।।**[4]

पुरुषगुरोरपेक्षया स्त्रीगुरुप्रदत्ता दीक्षा शुभा भवति। तथा स्त्रिया प्रदत्तो मन्त्रोऽष्टगुणाधिको फलो दीयते।

---

1. त्रिपुरारहस्यम्, 9/12.
2. त्रिपुरारहस्यम्, 9/8.
3. पद्मसंहिता. नागप्रकाशनात् 1991 ई. वर्षे प्रकाशितविष्णुसंहिता- भूमिकायामुद्धृतम्.
4. रुद्रया., 2/110-111.

सधवा स्वप्रकृत्या च ददाति यदि तन्मनुम्।
ततोऽष्टगुणमाप्नोति यदा सा पुत्रिणी सती॥
स्त्रिया दीक्षा शुभा प्रोक्ता मन्त्राश्चाष्टगुणाः स्मृताः।
पुत्रिणी विधवा ग्राह्या केवलात्रृणकारिणी॥[1]

पुत्रिणी विधवा नारी अपि आचार्या भवति। विधवापि नारी यदा चितिस्वरूपसम्पन्ना सिद्धास्ति तदा निःसंकोचेन तस्या अपि दीक्षा ग्राह्या।

सिद्धमन्त्रो यदि भवेत् गृह्णीयाद् विधवामुखाद्।
केवलं सुफलं तत्र मातुरष्टगुणं ध्रुवम्॥[2]

चितिस्वरूपे सधवा-विधवा-स्त्रीपुरुषभेदाभावात्। तत्रापि यदा विविधस्त्रीगुरूणां मध्ये स्वमाता स्वीया जननी दीक्षां ददाति तदा तु सा दीक्षा श्रेष्ठतमा। चितिस्वरूपसम्पन्ना माता महता सौभाग्येनैव मिलति। तया मात्रा प्रदत्ता दीक्षा निश्चयेन भुक्तिमुक्तिप्रदायिनी भवति।

यदि माता स्वकं मन्त्रं ददाति स्वसुताय च।
तदाष्टसिद्धिमाप्नोति भक्तिमार्गे न संशयः॥
तदेव दुर्लभं देव यदि मात्रा प्रदीयते।
आदौ मुक्तिं ततो भुक्तिं सम्प्राप्य कालरूपधृक्॥[3]

चितिस्वरूपोपलब्धयोः मातापित्रोः मेलनादुत्पन्नः सुतः स्वयमेव ज्ञानभाजनं भवति स एव योगिनीपुत्रः कथ्यते। उक्तञ्च—

तादृशमेलककलिका कलिततनुः यो भवेद् गर्भे।
उक्तः स योगिनीभूः स्वयमेव ज्ञानभाजनं भक्तः॥[4]

यथा त्रिपुरारहस्यस्य द्वादशाध्याये चितिस्वरूपोपलब्धायां स्वीयायां सिद्धपत्न्यामुत्पादितः चितिस्वरूपोपलब्धराजर्षेः तङ्गणसुतः।

वस्तुतस्तु चितिस्वरूपोपलब्ध्यनन्तरं समग्रभेदस्य लयः भवति। चितिस्वरूपे स्थित एव गुरुरपेक्ष्यते। तादृशे गुरौ उच्चनीचस्त्रीपुरुषसधवाविधवा भेददर्शनन्तु पापपूर्णमज्ञानजन्यञ्च। उक्तक्रमेषु विविधेष्वागमेषु यत् किञ्चित् भेदः दृश्यते

1. रुद्रया., 2/112.
2. रुद्रया., 2/113.
3. रुद्रया., 2/115-116.
4. जयरथेनोद्धृतं तन्त्रालोकस्य विवेकव्याख्यायाम्, 1/1/1.

तत्तु-अनाध्यात्मिकेभ्यः कपटगुरुभ्यः जिज्ञासुजनानां श्रद्धायाः, जिज्ञासायाः सम्पत्तेश्च संरक्षणार्थम्। सदाचारसम्पन्नेषु कुलीनेषु, सुशीलासु कुलजासु सधवासु च तादृशस्य कपटाचारस्य संभावनायाः नैर्बल्यात्। मातरि च कपटाचारस्य निरवकाशत्वात् चितिस्वरूपसम्पन्ने सति मात्रा प्रदत्ता दीक्षा श्रेष्ठतमा- इत्युक्तम्। एनमेव भावं चितिस्वरूपा भैरवीगुरुः स्वयमुद्घोषितवती रुद्रयामले—

**अहं गुरुरहं देवो मन्त्रार्थोऽस्मि न संशयः।**
**भेदका नरकं यान्ति नानाशास्त्रार्थवर्जिताः॥**



सप्तमोऽध्यायः

# आगमेषु तन्त्रमन्त्रयन्त्रविमर्शः

## तन्त्रपदनिरुक्तिः

तन्त्रशब्दः "तत्रि कुटुम्बधारणे"[1] "तनु-विस्तारे"[2] "तनु श्रद्धोपकरणयोः"[3] एभ्यः त्रिभ्यो धातुभ्यः सम्पन्नो भवति। क्रमशः तद्विषये विचार्यते।

1. तत्र "तत्रि कुटुम्बधारणे" इत्यस्माच्चौरादिकाद् धातोः धात्वर्थे वाच्ये "भावे"[4] इति सूत्रेण, कर्तृवर्जिते कारके संज्ञायां विषये च "अकर्तरि च कारके संज्ञायाम्"[5] इत्यनेन सूत्रेण "घञ्" प्रत्यये, इदित्वान्नुम् विभक्तिश्च (त + न् + त्र् + अ + सु) तन्त्रशब्दसिद्धौ कृतायाम् तन्त्रणमेव तन्त्रम्, अथवा तन्त्र्यते यद् येन यत्र वेति व्युत्पत्तिभिः तन्त्रशब्दस्य साधुत्वं विधीयते। ततश्च **"कुटुम्बस्य लोकस्य धारकत्वं पोषकत्वं वा तन्त्रत्वम्"** इति, **"नियमविशेषनियन्त्रितलोकत्वं वा तन्त्रत्वम्"** इति वा लभ्यते। अतो भगवता सूर्येण सकललोकनियन्त्रितत्वात् यजुर्वेदे तस्य भगवतः तन्त्रायी इति नाम।

**अश्विना घर्मं पातं हार्द्वानमहर्दिवाभिरूतिभिः।**
**तन्त्रायिणे नमो द्यावापृथिवीभ्याम्।।**[6]

शतपथब्राह्मणे च अस्य तन्त्रायी शब्दस्य तथैव व्याख्यानम्।

**"तन्त्रायिणे" इति। एष वै तन्त्रायी। य एष तपति। एष हीमां ल्लोकांस्तन्त्रमिवानुसञ्चरति। एष उ प्रवर्ग्यः। तदेतमेवैतत्प्रीणाति। तस्मादाह "तन्त्रायिणे" इति।।**[7]

अभिज्ञानशाकुन्तले अपि स्वकुटुम्बवत् लोकस्य धारणपोषणरूपायां राज्ञः कर्तव्यात्मिकां क्रियायां तन्त्रधातोः प्रयोगोऽस्ति।

---

1. पा.धा.चु.आ.से. 10/148.
2. पा.धा.तना.उ.से. 8/1.
3. पा.धा.चु.उ.से., 10/266.
4. पा.अ., 3/3/18.
5. पा.अ., 3/3/19.
6. यजुर्वेदः, 38/12.
7. शत.ब्रा., 14/2/2/22.

**प्रजाः प्रजाः स्वा इव तन्त्रयित्वा**
**निषेवतेऽशान्तमनाविविक्तम्।**
**यूथानि संचार्य रविप्रतप्तः,**
**शीतदिवा स्थानमिव द्विपेन्द्रः॥[1]**

2. पुनश्च ''तनु विस्तारे'' इत्यस्मात् तानादिकाद्धातोः ''तनु श्रद्धोपकरणयोः'' इत्यस्माच्चौरादिकाद्धातोश्च धात्वर्थे वाच्ये ''सर्वधातुभ्यः ष्ट्रन्''[2] इत्यौणादिकसूत्रेण ''ष्ट्रन्'' प्रत्यये ततः विभक्तिश्च (तन् + त्र + सु) तन्त्रशब्दः सिध्यति। यदा ''तनु विस्तारे'' धातोः उक्तक्रमेण तन्त्रपदनिष्पत्तिः तदा ''तन्यन्ते विस्तीर्यन्ते ऐहिकामुष्मिकाभ्युदयनिः-श्रेयससाधकाः उपायाः अनेन'' इति व्युत्पत्तिमादधानोऽस्ति तन्त्रशब्दः। अथवा ''तनोति तन्यतेऽनेन वा'' इत्येव तन्त्रम्। उक्तञ्च—

**तनोति विपुलानर्थान् तन्त्रमन्त्रसमन्वितान्।**
**त्राणञ्च कुरुते यस्मात् तन्त्रमित्यभिधीयते॥[3]**

तथा च यः कश्चनापि ग्रन्थो यं कञ्चनापि ज्ञानविषयं विस्तरतः प्रतिपादयंस्तन्त्रशब्देन वक्तुं शक्यते। नास्ति किञ्चिद् यज्ज्ञानगोचरं नास्ति। ज्ञानराशीनां विस्तरेण प्रतिपादयतां ग्रन्थानाञ्च विषयभेदात् भवति पारस्परिको भेदः। यथायुर्वेदचिकित्सापद्धतावष्टावङ्गानि शल्यतन्त्रादीनि।

**''शल्यतन्त्रं, शालाक्यतन्त्रं, कायचिकित्सातन्त्रं, भूतविद्यातन्त्रं, कौमारभृत्यतन्त्रम्, अगदतन्त्रं, रसायनतन्त्रं, वाजीकरणतन्त्रमित्यष्टाङ्गमिदं तन्त्रमादिदेवप्रकाशितम्॥''[4]**

राजनीतिकाख्यायिकारूपेण पञ्चतन्त्रादिग्रन्थाः।

**''तन्त्रैः पञ्चभिरेतच्चकार शास्त्रम्॥''[5]**

तथैव सांख्यशास्त्रे षष्टितन्त्रम्।

**''पञ्चशिखेन मुनिना बहुधाकृतं तन्त्रम्। षष्टितन्त्राख्यम्॥''[6]**

एवमेव विविधविषयप्रतिपादकशास्त्रेषु तन्त्रशब्दस्य प्रयोगः।

---

1. अभि.शाकु., 5/5.
2. उणादि., 4/160
3. कामिकागमः.
4. सुश्रुतसंहिता।
5. पञ्चतन्त्रम् 1.
6. सांख्यकारिका, 70-72.

**बौद्धोक्तान्युपतन्त्राणि कपिलोक्तानि यानि च ।**
**अद्भुतानि च एतानि जैमिन्युक्तानि यानि च ॥**
**वशिष्ठः कपिलश्चैव नारदो गर्ग एव च ।**
**पुलस्त्यो भार्गवः सिद्धो याज्ञवल्क्यो भृगुस्तथा ॥**
**शुक्रो बृहस्पतिश्चैव अन्ये ये मुनिसत्तमाः ।**
**एभिः प्रणीतान्यन्यान्युपतन्त्राणि यानि च ॥**
**विसंख्यातानि तान्यत्र धर्मविद्भिर्महात्मभिः ।**
**सारात्सारतराण्येव संख्यातानि निबोधत ॥**[1]

एवञ्चोक्ताभ्यां व्युत्पत्तिभ्यां निसृताः सन्ति विविधाः तन्त्रपदार्थाः । तद्यथा लोकतन्त्रम्, लोकः तनुते शासननियमान्यत्र, लोकैः तन्यते विस्तीर्यते शासनपद्धतिर्यत्र, लोकैः तन्त्र्यते ध्रियते स्वसमूहो यत्र, अर्थादस्मिन्लोका एव राष्ट्रनियमांस्तन्यते विस्तारयन्ति संशोधनपरिष्करणादिभिः, यत्र च लोका एव स्वात्मानं धारयन्ति पोषयन्ति च, यत्र लोका एव राष्ट्रचिन्तां कुर्वन्ति तदेव लोकतन्त्रम्।

**''अथवाऽविश्रमोऽयं लोकतन्त्राधिकारः। कुतः –**

**भानुः सकृद्युक्ततुरङ्ग एव रात्रिंदिवं गन्धवहः प्रयाति।**
**शेषः सदैवाहितभूमिभारः षष्ठांशवृत्तेरपि धर्म एषः॥**[2]

**तन्त्रावापविदा योगैर्मण्डलान्यधितिष्ठता।**
**सुनिग्रहा नृपेन्द्रेण पन्नगा इव शत्रवः॥**[3]

एवमेव स्वतन्त्रपरतन्त्रशब्दौ अपि। तद्यथा स्त्रीधारापुंधारारूपेण सृष्टेः द्विधाविचारप्रसङ्गे आगमवचनम्—

**द्वे धारे स्वतन्त्ररूपत्वात्।**
**स्त्रीधारा पुंधारामयी कैवल्याधिकारिणी॥**[4]

3. यदा ''तनु श्रद्धोपकरणयोः'' धातोः तन्त्रपदनिष्पत्तिः तदा ''तानयन्ति विश्वसन्ति, श्रद्धां जनयन्ति, उपकरणं कुर्वन्ति, उपकरणैर्वा कुर्वन्तीति तन्त्रम्''। एवञ्च ऐहिकाभ्युदयसिद्ध्यर्थमुपकरणं कृत्वा, उपकरणैः कार्यानुसारी यन्त्रनिर्माणपूर्वकम्,

---

1. वाराहीतन्त्रम्। सारस्वतीसुषमायामुद्धतम् 20 वर्षे 1 अङ्कः, पृष्ठम् 13-14.
2. अभि.शा., 5/4.
3. शिशुपालवधमहाकाव्यादुद्धतम्। सा.सु., पृ. 14
4. कर्ममीमांसादर्शनधर्मसूत्रम्, 55-56॥

यन्त्रैश्चापेक्षितकार्यसिद्ध्या श्रद्धाविश्वासोत्पादकानि, प्रयोगात्मकानि कृत्यानि तादृशविधि-ज्ञापकानि शास्त्राणि, यन्त्राणि, यन्त्रोपकरणानि, च तन्त्रपदाभिधेयानि।

अनया व्युत्पत्या समग्रमेव लोकविज्ञानं तन्त्रपदवाच्यम्। एतादृशतन्त्रपदस्थाने एव वर्तमानसमये आधुनिकविज्ञानशब्दस्य प्रयोगो दृश्यते। तद्यथा शल्यतन्त्र-शालाक्यतन्त्र-कायचिकित्सातन्त्र-भूतविद्यातन्त्र-कौमारभृत्यतन्त्र-अगदतन्त्र-रसायनतन्त्र-बाजीकरणतन्त्रादि सुश्रुतोक्तायुर्वेदीयशब्दानां स्थाने क्रमशः शल्यविज्ञान-शालाक्यविज्ञान-कायचिकित्साविज्ञान-भूतविद्याविज्ञान-कौमारभृत्यविज्ञान-अगदविज्ञान-रसायनविज्ञान-वाजीकरणविज्ञानादि-शब्दानां प्रयोगः प्रसिद्धः। एवञ्चैतद् सिद्ध्यति यत् **"यथा वर्तमानसमये नापरीक्षितविश्वासनिर्भरं विज्ञानशास्त्रं तथैव पुराकाले तन्त्रमप्यासीत्। यथा विज्ञानमन्त्रानुसारेण यथारीत्यानुष्ठिता क्रिया अवश्यमेव निर्दिष्टफलं जनयति तथैव तन्त्रमन्त्रानुसारेण यथाविहितानुष्ठिता क्रियाप्यवश्यमेव निर्दिष्टफलं जनयति स्म।"** अतो विविधोपकरणविषये, यन्त्रविषये, विविधयन्त्रनिर्माणविधिविषये प्रयोगविषये च कृताः ग्रन्थाः तन्त्रपदाभिधेयाः आसन् प्राचीनकाले। तद्यथा-

**"तन्त्रादचिरापहृते"**[1]

**"आज्यभागान्तं प्राक्तन्त्रमूर्ध्वस्विष्टकृता सह।**
**हवींषि यज्ञ आवापो यथा तन्त्रस्य तन्तवः॥"**[2]

**"चाक्रायणिर्धुण्डिनाथश्चेति शास्त्रकृतः स्वयम्।**
**विमानचन्द्रिका व्योमयानतन्त्रस्तथैव च॥"**[3]

एवं विविधानां व्युत्पत्तीनां भावार्थानुसारेण विविधानां तन्त्रपदाभिधेयानां कोशेषु संग्रहः कृतः। तद्यथा मेदिन्याम्—

**तन्त्रं कुटुम्बकृत्ये स्यात्सिद्धान्ते चौषधोत्तमे।**
**प्रधाने तन्तुवाये च शास्त्रभेदे परिच्छदे॥**
**श्रुतिशाखान्तरे हेतावुभयार्थप्रयोजके।**
**इति कर्तव्यतायाञ्च तन्त्री वीणा गुणे मता॥**
**अमृतादेहशिरयोः ..................... ॥**[4]

---

1. पाणिनीयाष्टध्यायी, 5/2/70.
2. कौशिकसूत्रेषु गोपथब्राह्मणोक्तः श्लोकः सारस्वतीसुषमायामुद्धतम् 20 वषे 1 अङ्कः, पृ. 83.
3. यन्त्रसर्वस्वस्य बोधायनवृत्तौ प्रथमप्रकरणे। एष ग्रन्थो बड़ौदाराज्यपुस्तकालये हस्तलिखितो वर्तते।
4. अमरकोशस्य रामाश्रमीटीकायामुद्धतम्, 3/3/185.

अमरकोशे च—

**तन्त्रं प्रधाने सिद्धान्ते तन्तुवाये परिच्छदे।।[1]**
**उत्थानं पौरुषे तन्त्रे सन्निविष्टोदयेऽपि च।।[2]**

पुनश्च मेदिन्याम्—

**उत्त्थानमुद्यते तन्त्रे पौरुषे पुस्तके रणे।[3]**

एवञ्च कोशेषु बहुष्वर्थेषु प्रयुक्तोऽयेषः तन्त्रशब्दः गुरुशिष्यपरम्परा-प्राप्तागमशास्त्रेष्वेव प्रायः रूढः दृश्यते। अतः रूढार्थविमर्शेऽपि प्रयासः क्रियते मया।

## तन्त्रशब्दस्य रूढार्थविमर्शः

त्रिभ्यो धातुभ्यः उक्ताभिर्व्युत्पत्तिभिः एष निष्कर्ष आयाति यत् "विधिमन्त्र-यन्त्रोपकरणादिमाध्यमेन इह लौकिकाभ्युदयात्मकज्ञानराशीनां विस्तरेण प्रतिपादकत्वे सति अध्यात्मविज्ञानरूपाणां निःश्रेयससाधकोपायानां सम्यग्ज्ञापकत्वे सति ऐहिकामुष्मिकाभ्युदय-प्रदायकानामेतादृशविज्ञानानां गुरुशिष्यपरम्परयाऽविच्छिन्नोपदेश-क्रमेण संरक्षकत्वे सति एवञ्चानेन विज्ञानेन ऐहिकामुष्मिकाभ्युदयरूपकुटुम्बस्य समाजस्य धारकत्वं पोषकत्वं वा लोकानां सम्यगभ्युदयात्मकं वा तन्त्रत्वम्।। तद्यथा —

**सर्वेऽर्था येन तन्यन्ते त्रायते महतो भयात्।**
**इति तन्त्रस्य तन्त्रत्वं तन्त्रज्ञाः परिचक्षते।।**
**आप्तप्रोक्ततया तन्त्रं प्रमाणमिति ये विदुः।**
**वेदप्रामाण्यमप्याहुराप्तमूलतयैव ते।।**
**तच्छैववैष्णवब्राह्मसौरकौमारभेदतः।**
**पञ्चधा भिद्यते तन्त्रं वक्तृणो च विशेषतः।।[4]**

अत्र समाजपोषकत्वं तन्त्रत्वमित्युक्तम्। आगमपदव्याख्यानेऽपि समाजपोषकत्व-मागमत्वमित्युक्तमासीत्।

एतद् समाजपोषणं किमर्थमिति चेद्ब्रूमि, "आत्मज्ञानार्थमिति"। उक्तञ्च

---

1. अमरकोषः 13/3/185, अमरकोषः 3/3/118.
2. अमरकोषः 13/3/185, अमरकोषः 3/3/118.
3. अमरकोशस्य रामाश्रमीटीकायामुद्धतम्, 3/3/118.
4. विष्णुसंहिता, 2/10,19,20.

श्रुतावेव—

**इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः।**
**भूतेषु भूतेषु विचित्यधीराः प्रेत्यास्माल्लोकादमृता भवन्ति।।**[1]

एवञ्च तन्त्रपदार्थस्य फलमागमपदार्थः। आगमपदार्थस्य साधनं तन्त्रपदार्थः। द्वयोरनयोस्साध्यसाधनभावेनैव पूर्णता। अतश्च योगरूढ्या तन्त्रागमशब्दार्थयोः साम्यं दृष्ट्वा वैज्ञानिकैस्तान्त्रिकैरन्यैश्च विद्वद्भिरभेदेनानयोर्व्यवहारः कृतः। तथाहि मृगेन्द्रतन्त्रं मृगेन्द्रागमः, शैवतन्त्रं शैवागमः, शाक्ततन्त्रं शाक्तागमः, वैष्णवतन्त्रं वैष्णवागमः, भैरवतन्त्रं भैरवागमः।

एवञ्च विज्ञानदर्शनशास्त्र-तन्त्रागमशब्देषु समानतया सामान्यविशेषभावेन वा कृतो व्यवहारोऽनुभूयते इति निष्कर्षः।

तन्त्रपदव्याख्यानं तु सम्यग्जातं किन्तु तन्त्रशास्त्रेषु तन्त्राङ्गभूतत्वेन मन्त्रयन्त्रपदयोरपि व्यवहारः दृश्यते। अतः कोऽयं मन्त्रपदार्थः यन्त्रपदार्थश्च इत्यपि विमर्शनीयम्।

## मन्त्रपदनिरुक्तिः

**''वेदभेदे गुह्यवादे मन्त्रः''**[2]

**''मन्त्रो वेदविशेषे स्याद्देवादीनां च साधने। गुह्यवादेऽपि पुमान्''**[3]

इत्यमरः। **''मत्रि गुप्तभाषणे''**[4] इत्यस्माच्चौरादिकाद्धातोः धात्वर्थे वाच्ये **''भावे''**[5] इत्यनेन सूत्रेण, कर्तृवर्जिते कारके संज्ञायां विषये च **''अकर्त्तरि च कारके संज्ञायाम्''**[6] इत्यनेन सूत्रेण च **'घञ्'** प्रत्यये कृते सति मन्त्रणमेव मन्त्रः गुप्तभाषणमित्यर्थः, अथवा मन्त्र्यते यद् येन यत्र वेति व्युत्पत्तिभिः मन्त्रशब्दस्य साधुत्वं विधीयते। अत एव **''गुप्तार्थप्रतिपादकाः पिण्डबीजरूपाः अक्षरबीजरूपाः वा मन्त्राः भवन्ति''**। यथा **'ह'** इत्याकाशबीजं **'र'** इत्यग्निबीजं **'ईं'** इति शक्तिः। अनेन वर्णत्रयसंयोजनेन च **''ह्रीं''** इति मन्त्रोपलब्धिः।

पुनश्च **''मन ज्ञाने''**[7] **''मनु अवबोधने''**[8] वा धातोः **''सर्वधातुभ्यः**

---

1. के.उ. 2/5.
2. अमरकोशः, 3/3/167.
3. अमरकोशः, 3/3/167. रामाश्रमीटीकायामुद्धृतम् – मेदिनीतः
4. धा.पा.चु.आ.से. 10/14.
5. पा.अ., 3/3/18-19.
6. पा.अ., 3/3/18-19.
7. धा.पा.दि.आ.अ. 4/65.
8. धा.पा.त.आ.से., 8/9.

ष्ट्रन्''[1] इति सूत्रेण ''ष्ट्रन्'' प्रत्यये कृते सति **''मननात् त्रायते इति मन्त्रः''** इति व्युत्पत्तिनिगूढोऽर्थो लभ्यते। अर्थात् **''मननत्राणधर्माणश्चिन्माहात्म्यावमर्शकाः मन्त्राः भवन्ति''**। तथैव योगिनीहृदय-दीपिकायाममृतानन्दयोगिनोऽपि ''मननात्त्रायन्ते साधकमिति मन्त्राश्चिन्मरीचयः, तद्वाचकत्वाद्वैखरीवर्णविलासभूतानां सौभाग्यविद्यादीनां मननात् त्राणता। तदुक्तं संकेतपद्धत्याम् —

**''मननात् त्राणधर्मासौ मन्त्रोऽयं परिकीर्तितः''।**[2]

तत्रैव सेतुबन्धे भास्कररायोऽपि—

**''मननत्राणकतृत्वात्तुरीयकूटे मन्त्रत्वमुपपद्यते।''**[3]

अत एव **''गुह्यार्थप्रतिपादकाः पिण्डबीजरूपा अक्षरबीजरूपाः मननात्त्राणश्चिन्माहात्म्यावमर्शकाश्च मन्त्राः भवन्ति''** इति निष्कर्षः।

## यन्त्रपदनिरुक्तिः

**''यत्रि संकोचने''**[4] इत्यस्माद्धातोः धत्वर्थे वाच्ये **''भावे''**[5] कर्तृवर्जिते कारके संज्ञायां विषये वा **''अकर्तरि च कारके संज्ञायाम्''**[6] इत्यनेन सूत्रेण ''घञ्'' प्रत्यये कृते सति ''यन्त्रणमेव यन्त्रम्'', यन्त्र्यते स्वाधीनं क्रियते, संकोचः क्रियते यमनं क्रियते यद् येन वेति यन्त्रम्। अथवा यन्त्रयतीति यन्त्रम्, यन्त्रयत्यनेनेति वा यन्त्रम्। आभिर्व्युत्पत्तिभिः यमनसाधनानि यमनसाधनोपकरणानि, विविधविशिष्टकार्यसम्पादनार्थं विविधोपकरणैः निर्मितानि विशिष्टानि साधनानि च यन्त्रपदाभिधेयानि इति निगमो भवति। तद्यथा ऋग्वेदे—

**सविता यन्त्रैः पृथिवीमरम्णादस्कम्भने सविता द्यामदृंहत्।**
**अश्वमिवाधुक्षद्धुनिमन्तरिक्षमतूर्ते बद्धं सविता समुद्रम्॥**[7]

मन्त्रस्यास्य व्याख्याने निरुक्तेऽपि च—

**सविता यन्त्रैः पृथिवीमरमयदनारम्भणेऽन्तरिक्षे सविताद्यामदृंहदश्वामिवाधुक्षद्धुनिमन्तरिक्षे मेघं वद्धमतूर्ण इति वा, सविता समुन्दितारमिति। कमन्यं**

1. उणा., 4/160.
2. योगिनीहृदयदीपिका, 2/1.
3. योगिनीहृदयस्य सेतुबन्धटीका, 2/25.
4. चु.उ.से., 10/3.
5. पा.अ., 3/3/18-19.
6. पा.अ., 3/3/18-19.
7. ऋ.सं., 10/149/1.

**मध्यमादेवमवक्ष्यत् ? आदित्योऽपि सविता उच्यते। इति॥**[1]

तत्रैव निरुक्तविवृत्यां पण्डित-मुकुन्दशर्मा च यन्त्रैः यमनसाधनैः-इत्युक्तवान्। भगवद्गीतायां यन्त्रचालितपुत्तिकाणामुदाहरणमस्ति

**ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।**
**भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया॥**[2]

कालिदासेनापि —

**यन्त्रप्रवाहैः शिशिरैः परीतान्रसेन धौतान्मलयोद्भवस्य।**
**शिलाविशेषानधिशय्य निन्युर्धारागृहेष्वातपऋद्धिमन्तः॥**[3]

इत्यत्र प्रयुक्त-"यन्त्रप्रवाहैः" इति शब्दस्य व्याख्याने सञ्जीविनीकारेण "यन्त्रसञ्चारितसलिलपूरैः" इत्युक्तम्। तथैव मृच्छकटिके **कूपयन्त्रम्**[4] एवं विविधेषु शास्त्रेषु तत्तच्छास्त्रोपयोगानुसारं विविधानां यन्त्राणां वर्णनमस्ति। यथा ज्योतिषशास्त्रे ज्योतिषीयं यन्त्रम्, आयुर्वेदशास्त्रे शल्यादिकर्मसम्पादकं यन्त्रम्, धनुर्वेदे शस्त्रात्मकं यन्त्रम्, भारद्वाजनिर्मित-यन्त्रसर्वस्वे वैमानिकप्रकरणे विमानयन्त्रम्, तन्त्रशास्त्रेषु च मातृकायन्त्रं वर्णितमस्ति।

## तन्त्रमन्त्रयन्त्रविषयको विशेषविमर्शः

तन्त्रपदव्याख्यानावसरे आगतं यत् "**यथा वर्तमानसमये नाऽपरीक्षित-विश्वासनिर्भरं विज्ञानशास्त्रं तथैव पुराकाले तन्त्रशास्त्रमप्यासीत्। तथैव यन्त्रपदव्याख्याने मातृकायन्त्र विषयकोल्लेखोऽपि कृतः।**" किन्तु वर्तमानसमये तादृशं प्रत्यक्षप्रयोगात्मकं तन्त्रमन्त्रयन्त्रविषयकं विज्ञानवत्फलदायकं किमपि कर्म नावलोक्यते। यन्त्रादिकमपि यथोक्तं तथा कुत्रापि न दृश्यते। अतोऽत्र तन्त्रमन्त्रयन्त्रस्पष्टीकरणमपेक्षते।

लौकिक (भौतिक) विज्ञानात्मकमध्यात्मविज्ञानात्मकञ्चेति द्विविधं हि तन्त्रशास्त्रम्। स्थूले लौकिकभौतिकविज्ञाने स्थूलभौतिकयन्त्राणामेवोपयोगः। तद्यथा ग्रहनक्षत्रादिस्थितिज्ञापकं ज्योतिषीयं यन्त्रम्, आयुर्वैदिकचिकित्सायाञ्च शल्यादिविविधकर्मसम्पादकं विविधात्मक-मायुर्वैदिकं यन्त्रम्। एतादृशानां स्थूलयन्त्राणामध्यात्मविज्ञाने उपयोगः नास्ति। अध्यात्मविज्ञाने दार्शनिकवैचारिकयन्त्राणामेव प्रकाशः क्रियते गुरुभिः परमार्थतत्त्वविज्ञापनार्थं शिष्यान् प्रति। तद्यथा वैष्णवतन्त्रेषु सुदर्शनयन्त्रम् शैवशाक्ततन्त्रेषु च श्रीयन्त्रम्।

1. निरुक्तम्, 10/3/31.
2. गीता, 18/61.
3. रघु., 16/49.
4. 11 मृच्छकटिकम्, 10/59.

## 1. भौतिकविज्ञानात्मकं तन्त्रशास्त्रम्

तन्त्रशास्त्रीयलोकविज्ञानविषये मया यदुक्तं तत्र प्रमाणरूपेण केचन तन्त्रग्रन्थाः उपलब्धाः सन्ति। ये तात्कालिकीं तान्त्रिकीं वैज्ञानिकीं स्थितिं ज्ञापयन्ति। भारद्वाजमुनिनिर्मितयन्त्रसर्वस्वस्य वैमानिकप्रकरणस्य केचनोपलब्धांशाः प्रकाशिताः सन्ति। तत्र प्रथमे प्रकरणे बोधायनवृत्तौ प्राचीनवैज्ञानिकतन्त्रग्रन्थानां वर्णनमस्ति यत्र पञ्चविंशतिसंख्याकाः तन्त्रग्रन्थाः उल्लिखिताः सन्ति। तत्र केचन एवं सन्ति अगस्त्यकृतं शक्तितन्त्रं शक्तिसूत्रञ्च, ईश्वरमुनिकृता सौदामिनीकला भारद्वाजमुनिलिखितमंशुमतन्त्रम्, आकाशशास्त्रम्, यन्त्रसर्वस्वञ्च, शाकटायनकृतवायुतत्त्व-प्रकरणम्, नारदकृतवैश्वानरतन्त्रम्, धूर्मप्रकरणञ्च। एवं ग्रन्थानां ग्रन्थकाराणाञ्च तत्रोल्लेखः दृश्यते—

तद्यथा —

**निर्मथ्य तद्वेदाम्बुधिं भारद्वाजो महामुनिः।**
**नवनीतं समुद्धृत्य यन्त्रसर्वस्वरूपकम्॥**
**प्रायच्छन् सर्वलोकानामीप्सितार्थफलप्रदम्।**
**तस्मिन् चत्वारिंशतिकाधिकारे सम्प्रदर्शितम्॥**
**नानाविमानवैचित्र्यरचनाक्रमबोधकम्।**
**अष्टाध्यायैर्विभजितम् शताधिकरणैर्युतम्॥**
**सूत्रैः पञ्चशतैर्युक्तं व्योमयानप्रधानकम्।**
**वैमानिकाधिकरणमुक्तं भगवता स्वयम्॥**
**एवं विधाय विधिवन्मङ्गलाचरणं मुनिः।**
**पूर्वाचार्यांश्च तद्ग्रन्थान् द्वितीयश्लोकतोऽब्रवीत्॥**
**पृथिव्यप्स्वन्तरिक्षेषु खगवद्वेगतः स्वयम्।**
**यः समर्थो भवेद्गन्तुं स विमान इति स्मृतः॥**[1]

तत्र यन्त्रसर्वस्वे आधुनिकविमानवत् विमाननिर्माणचालनादिप्रसङ्गे बहवः विषयाः वर्णिताः सन्ति न च तावदेव ततोऽप्यधिकं केचन यथा "वातशक्तिभिः सूर्यकिरणान्तर्गततमश्शक्तिमाकृष्य तत्संयोजनद्वारा विमानाच्छादनरहस्यम्"।

**गूढ़रहस्योनाम पञ्चमो रहस्यम् – "वायुतत्त्वप्रकरणोक्तरीत्या**

---

1 **यन्त्रसर्वस्वस्य बोधानन्दवृत्तौ वैमानिके प्रथमे प्रकरणे।**
**बड़ौदाराज्यपुस्तकालये हस्तलिखिता प्रतिलिपिः विद्यते।**

**वातस्तम्भाष्टम-परिधिरेखापथस्य यासावियासाप्रयासादिवातशक्तिभिः सूर्य-किरणान्तर्गत- तमश्शक्तिमाकृष्य तत्संयोजनद्वारा विमानाच्छादनरहस्म्।''[1]**

**अपरोक्षरहस्योनाम नवमो रहस्यम् – ''शक्तितन्त्रोक्तरोहिणी-विद्युत्प्रसारणेन विमानाभिमुखस्थवस्तूनां प्रत्यक्षनिदर्शनक्रियारहस्यम्।''[2]**

महाभारतेऽपि वयं पश्यामः यत् तात्कालिकी मन्त्रयन्त्रशस्त्रादिविषयिकी वैज्ञानिकी स्थितिरपि अतीव सम्पन्ना आसीत्। अर्जुनादिधनुर्धराणामेकेनैव बाणेन सहस्रसहस्रजनानां रथयूथानाञ्च हननं भवति स्म।

**प्रादुश्चक्रे ततः पार्थः शाक्रमस्त्रमहारथः।**
**तस्मादासन् सहस्त्राणि शराणां नतपर्वणाम्॥**
**षट् सहस्त्रान् हयान् वीरान् पुनर्दशशतान् वरान्।**
**प्रहिणोन्मृत्युलोकाय क्षत्रियान् क्षत्रियर्षभः॥[3]**

एवं विविधसामर्थ्ययुतानां मन्त्रयन्त्रास्त्राणां वर्णनन्तु वयं पठाम एव। तत्र युद्धदृश्यं गृहे एव प्रत्यक्षमवलोकयन् संजयोऽपि दृश्यते, यः जन्मान्धं धृतराष्ट्रं कुरुक्षेत्रीयं युद्धदृश्यं यथावलोकयति तथैव श्रावयति। तत्र प्रयुक्तमन्त्रास्त्राणां विषये मन्त्रयन्त्राणां विषये वा वयमाश्चर्येण शृणुमः। अस्मिन् महायुद्धे मानवानां, मानवीयविज्ञानानां लोकस्य च बाहुल्येन विनाशः जातः। कतिपयकालानन्तरं तदैव प्रवर्तमाने यादवानां गृहयुद्धेऽवशिष्टमपि विनष्टम्। अस्य युद्धस्य सप्तमे दिवसे विनष्टा द्वारिकापुरी जलमग्ना जाता केनचिद् महास्त्रप्रयोगेण। एतद्विनाशानन्तरं नष्टे च विज्ञानेऽवशिष्टाः स्त्रीः रक्षणार्थं इन्द्रप्रस्थं प्रति आनयनसमये मार्गे एव, लुण्ठकैः आभीरैः भिल्लैः अवैज्ञानिकेन यष्टियुद्धेनैव अर्जुनं विजित्य बलात्कारेण ताः यदुकुलीनाः स्त्रियः लुण्ठिताः अपहृताः स्ववशीकृताः तासु स्त्रीष्वपि काश्चिद् परिस्थितिं विचिन्त्य स्वेच्छयैव तैः सह गमनं स्वीकृतवत्यः।

**ततो लोभः समभवत् दस्यूनां निहतेश्वराः।**
**दृष्ट्वा स्त्रियो नीयमानाः पार्थेनैकेन भारत॥**
**ततो यष्टिप्रहरणा दस्यवः ते सहस्त्रशः।**
**अभ्यधावन्त वृष्णीनां तं जनं लोप्तहारिणः॥**
**कलत्रस्य बहुत्वाद्धि सम्पतत्सु ततस्ततः।**
**प्रयत्नमकरोद्पार्थो जनस्य परिरक्षणे॥**

---

1. तत्रैव यन्त्रसर्वस्वस्य वैमानिकप्रकरणे।
2. तत्रैव यन्त्रसर्वस्वस्य वैमानिकप्रकरणे।
3. महाभारते द्रोणपर्वणि, 93/21,53.

**मिषतां सर्वयोद्धानां ततस्ताः प्रमदोत्तमाः ।**
**समन्ततोऽवकृश्यन्त कामाच्चान्याः प्रवव्रजुः ॥**[1]

स्पष्टमेव नष्टे च विज्ञाने अर्जुनस्य वैज्ञानिकशस्त्रशक्तिरपि स्वतः नष्टा।

**अस्त्राणां प्रणाशेन बाहुवीर्यस्य संक्षयात् ।**
**धनुश्चाविधेयत्वाच्छराणां संक्षयेण च ॥**
**बभूवविमना पार्थो दैवमित्यनुचिन्तयन् ।**
**न्यवर्तत ततो राजन् नेदमस्तीति चाब्रवीत् ॥**[2]

एवं महाविनाशात् लज्जिताः खिन्नाश्च पाण्डवाः हिमगिरेः यात्रां कृतवन्तः।

**युधिष्ठिरमतं ज्ञात्वा वृष्णिक्षयमवेक्ष्य च ।**
**भ्रातरः पञ्च कृष्णा च षष्ठी श्वा चैव सप्तमः ॥**
**आत्मना सप्तमो राजा निर्ययौ गजसाह्वयात् ।**
**पौरैरनुगतो दूरं सर्वैरन्तः पुरैस्तथा ॥**[3]

महाभारतयुद्धे महायन्त्रैः महद्विनाशमवलोक्य तत्कालीनेषु महापुरुषेषु हृदि महायन्त्रान् महास्त्रांश्च प्रति घृणा संजाता। अतो तैः महापुरुषैः महायन्त्रप्रवर्तनन्तु स्मृतिषूपपातकरूपेणोल्लिखितम्। तद्यथा वर्तमानसमये प्रामुख्येन प्रचलिता भृगूक्तमनुस्मृतावेव।

**सर्वाकरेष्वधीकारो महायन्त्रप्रवर्तनम्।**
**हिंसौषधीनां स्त्र्याजीवोऽभिचारो मूलकर्म च॥**

**..........................................**

**............................. योपपातकम्॥**[4]

एवं ज्योतिषीयचिकित्सकीययन्त्रातिरिक्तयन्त्राणां निर्माणन्तु समाप्तप्रायः जातम्। पातकतया स्वीकरणेन विनष्टमहायन्त्राणां प्रक्रियाविषया गवेषणापि समाप्तिंगता।

स्मृतिषूपपातकरूपेण निन्दानन्तरमपि सामान्यजनेषु स्वाभाविकमानवप्रवृत्यानु-सारेण कौतूहलवशाच्च लौकिक - विशिष्टसामर्थ्य - प्रदायक - तन्त्रमन्त्रयन्त्रनाम्ना प्रसिद्धविज्ञानं प्रत्याकर्षणमासीदेव। महायन्त्रास्त्रप्रवर्तननिरोधेन महाविनाशनिरोधार्थं

---

1. महाभारते मौसलपर्वणि, 7/46, 49, 58, 59.
2. महाभारते मौसलपर्वणि, 7/65,66.
3. महाभारतेमहाप्रस्थानिकपर्वणि, 1/24,25.
4. मनु., 10/63-66।

दैवीसम्पद्सम्पन्नमहापुरुषैः लोकाकर्षणकेन्द्रीभूतानां महायन्त्रशस्त्राणां दार्शनिकपद्धत्या-ऽऽध्यात्मिकार्थः कृतः लोकोपकारार्थं स्वाभाविककरुणापरवशत्वात्तैः। एवमाध्यात्मिकयन्त्रैः महाविनाशसम्भावनायाः निरवकाशत्वात्।

किन्तु प्राचीनग्रन्थानवलोक्य आधुनिकैः विद्वद्भिः चिन्तितम् यद् ''प्राचीनानां मानवैराविष्कृतानां विज्ञानानां वयमपि कथं न प्राप्तुं शक्नुमः मानवत्वात्'' एवं विचिन्त्य आधुनिकैः लौकिकसमुन्नतिकाङ्क्षिभिः वैदेशिकैश्च कृतेन प्रयासेन विविधविज्ञानानां पुनः समुन्नतिर्जाता। तथैव महास्त्रादिना परमाणुविस्फोटद्वारेण पुनः सृष्टिविनाशलीलाप्यामन्त्रितास्ति तैः।

चिन्तयन्तु केनापि कारणेन वर्तमानसमये युद्धेषु परमाणुविस्फोटेन वर्तमानवैज्ञानिक-इलेक्ट्रानिक-प्रक्रियायाः विनाशे सति समग्रा एषा दूरसंचारप्रक्रिया, आकाशवाणी, दूरदर्शनादिकव्यवस्था कथामात्रमेव भविष्यति। यदि तादृशे भविष्यति केचन स्वपूर्वजैः श्रुतां पठितां च कथां श्रावयिष्यन्ति यत् ''पूर्वस्मिन् कालेऽस्माकं पूर्वजानामेतादृशं सामर्थ्यपूर्णं ज्ञानमासीत् यत्, ते गृहे काश्यां तिष्ठन् मुम्बय्यां नृत्यन्तीं नर्तकीं पश्यन्ति स्म। पदग्रहणसमारोहम् संसदीयं वादविवादं वा गृहे एव तिष्ठन् एकाग्रमनसा पश्यन्ति स्म। दिल्लीतः घोषितः शासनादेशः तस्मिन्नेव काले समग्रे, भारते, न तु समग्रे भारते एवापि तु समग्रे विश्वे प्रसरति स्म। तत्रापि च श्रवणेच्छुकाः जना एव तद् शृण्वन्ति स्म, अन्यथा न शृण्वन्ति स्म। तदा तत्कालीनाः केचन जनाः तं कथनं मिथ्याप्रकल्पनमेव चिन्तयिष्यन्ति। केचन तद्विज्ञानार्थं प्रयासं करिष्यन्ति। केचन महास्त्रैः महाविनाशं विचिन्त्य लोकरक्षणार्थमाध्यत्मिकचिन्तने एव रुचिमुत्पादयिष्यन्ति। वयं सर्वे जानीमः भारतीयगणनानुसारेण द्वादशाधिकशतसहितं पञ्चसहस्रवर्षपूर्वं महाभारताख्यं महाविनाशात्मकं महद् युद्धजातम्। अत एव प्राचीनकालीना महाभारतविषयिकी एषा ऐतिहासिकी घटनापि अलौकिककथारूपेण प्रचलिता।

## मन्त्रेष्वक्षरतत्त्वविमर्शः

वयं जानीमः यत् लैटिनमातृकामाध्यमेन वर्तमानलोकविज्ञानसूत्राणि ग्रथितानि सन्ति। तत्र तया मातृकयैव वैज्ञानिकच्छात्राः अपेक्षितं ज्ञानं गृह्णन्ति। प्रयोगशालायां मातृकासूत्रेणैव प्रयोगं कुर्वन्ति अनन्तरं च क्रमशः वैज्ञानिककार्यकुशलाः वैज्ञानिकाश्च भवन्ति। तद्यथा ($H_2O$) इति जलस्य सूत्रमस्ति। इत्यनेनैव सूत्रेण एषः बोधः अधीतविज्ञानशास्त्रिणं प्रति झटिति आयाति यत् हाइड्रोजन-वातस्य परमाणुद्वयेन, आक्सीजनवातस्य च परमाण्वेकात्मकेनानुपातेन भवति जलसृष्टिः। अस्तु प्रकृतौ कुत्रापि समर्थयन्त्रेणोक्तानुपातेनोक्तवातयोः संयोजनेन च कुत्रापि जलसृष्टिः कर्तुं शक्यते। किन्तु तत्रोक्तवातयोः संयोजनाय तादृशस्य यन्त्रस्य अनिवार्यता भवति येन प्रकृतौ उक्तवातयोः संग्रहद्वारेण आनुपातिकं संयोजनं भवतु। तादृशं यन्त्रं नास्ति चेदनेन सूत्रेण सूत्राक्षराणां

जपेनं वा कथमपि जलसृष्टिः भवितुं नार्हति। यद्यपि हाइड्रोजनाक्सीजनयोरुपस्थितिस्तु प्रकृतौ अस्त्येव। तथैव मातृकामयमेवास्ति तन्त्रशास्त्रम्। उपलब्धविमानप्रकरणग्रन्थोल्लिखित- विज्ञानानां तन्त्रनाम्नैवोल्लेखो वर्तते।

संस्कृतज्ञाः भाषावैज्ञानिकाश्च जानन्त्येव लैटिनांग्लमातृकाणामुच्चारणविज्ञानं तादृशं नास्ति यथा वैदिकसंस्कृतवर्णमातृकायाः। अतः लैटिनादिमातृकाः वाततत्त्वानां प्रतीकमात्राण्येव सन्ति। व्यवहारार्थं येन वैज्ञानिकेन प्रथमतया यत्तत्त्वं गवेषितं तन्निर्देशार्थं एका मातृका निश्चिता तदेवाप्तवाक्यं स्वीकृत्य सर्वे एव वैज्ञानिकाः व्यवहाराः प्रचलन्ति। तत्र तस्याः मातृकायाः किमपि वैज्ञानिककारणं नास्ति येन सा मातृका तस्यैव तत्त्वस्यावबोधिका भवतु।

किन्तु प्राचीनवैदिकमहर्षिभिः, तान्त्रिकैः तत्त्वज्ञैर्वा विविधतत्त्वानामवबोधक-बीजाक्षराणां बीजमातृकाणां वा निर्धारणे तस्याः मातृकायाः स्पन्दनशक्तेः गवेषणापूर्वकमेव निर्णयः कृतः। तद्यथा **'ह'** इत्याकाशबीजं **'र'** इत्यग्निबीजं **'ई'** इति शक्तिः। एताभिः मातृकाभिः **''ह्रीं''** मन्त्रोत्पत्तिः। एवं दृश्यते आकाशे कुत्रापि अग्निज्वालनाय एषः मन्त्रः। किन्तु नष्टे च प्राचीनतन्त्रयन्त्रविज्ञाने वर्तमानसमये वयं न जानीमः यत् केन यन्त्रेण कीदृशी **'ई'** शक्तिसंयोजननेन कुत्रापि अग्निज्वालने वयं समर्थाः भवितुं शक्नुमः इति। तथैव **ऐं, क्लीं, सीम्,** इत्यादि मन्त्राण्यपि।

**अकारः सर्व वर्णाग्र्यः प्रकाशः परमः शिवः ।**[1]
**हकाराद् व्योम सम्भूतं ककारात्तु प्रभञ्जनः ।**
**रेफादग्निः सकाराच्च जलतत्त्वस्य सम्भवः ॥**
**लकाराद् पृथिवी जाता तस्माद् विश्वमयी च सा ।**
**गुणाः पञ्चदश प्रोक्ताः भूतानां तन्मयी शिवा ॥**[2]
**इच्छाशक्तिरिकारः उन्मेषशक्तिरुकारः ॥**[3]

एवमत्र स्पष्टं यत् लोकविज्ञानदृष्ट्या प्राचीनकाले तन्त्रशास्त्रं विज्ञानशास्त्रमेवासीत्। तत्र तन्त्रो नामविधिः। मन्त्रो नाम सूक्ष्मतत्त्वानामवबोधकसूत्रम्। यन्त्रश्च मन्त्रनिर्दिष्टप्रक्रियया फलाप्त्यर्थमपेक्षितकार्यसिद्धिसाधनम्। यथाधुनिकयन्त्राणि।

## 2. अध्यात्मविज्ञानात्मकं तन्त्रशास्त्रं तत्र सुदर्शनयन्त्रं श्रीयन्त्रञ्च

अध्यात्मविज्ञानदृष्ट्या च तन्त्रो नाम जीवनस्य, सृष्टेः, परमात्मनश्च रहस्यप्रतिपादकानि शास्त्राणि। तत्राध्यात्म-सूत्राण्येव मन्त्राणि सकलव्यवहारप्रतिपादक-

---

1. सङ्केतपद्धत्याम्।
2. योगिनीहृदयम्, 2/29-30.
3. योगिनीहृदये दीपिकाटीकायाम् 2/29-30.

मातृकाभिः विनिर्मितानि। एषा समग्रा सृष्टिरेव परमात्मनः महद्यन्त्रम्। मन्त्ररूपा एषा वर्णमातृकाः अस्यैव महायन्त्रस्य बोधं कारयन्ति। अत्र सर्वे एव लोकव्यवहाराः मातृकाद्वारेणैव प्रचलन्ति। रूपात्मकं सुदर्शनात्मकं वा एतद् सृष्टियन्त्रं नामात्मकमातृकयैव प्रचलति।

अतो वैष्णवागमेषु परमात्मनः भगवतः विष्णोरस्य सृष्टियन्त्रस्य नाम "सुदर्शनयन्त्रम्"।

**स्वातन्त्र्याननुयोज्येन रूपेण परिवर्तते ।**
**यत् तत् प्रेक्षणमित्युक्तं दर्शनं तत् प्रगीयते ॥**
**वस्तुतः कालतो देशात् तस्य त्वव्याहतिर्हि या ।**
**पूजा सात्र सुशब्दार्थस्तत्सुदर्शनमीर्यते ॥**
**सर्वं सुदर्शनायत्तं सुदर्शनमयं च यत् ।**
**इति सांसिद्धिकं रूपं तस्य सर्वातिशायि च ॥**[1]

परमात्मनः विभूतिरूपा एव एषा सृष्टिः —

**जगत्प्रकृतिभावो यः सा शक्तिः परिकीर्तिता॥**[2]

एषा शक्तिः परमात्मनोऽभिन्ना च विभूतिमय्या वर्णमातृकयैव गच्छन्ती भासते। अतएव वैष्णवागमेषु भगवतः नारायणादभिन्ना लक्ष्मी श्रीरेव वा एषा सृष्टिगत्यात्मिका वर्णमातृका।

**ज्ञानमेव परं रूपं ब्रह्मणः परमात्मनः।**
**षाड्गुण्यं तत् परं ब्रह्म स्वशक्तिपरिबृंहितम्॥**[3]

बहुत्वस्य स्वशक्त्या संकल्पनमेव सुदर्शनं सृष्टिमयम् —

**बहुस्यामिति संकल्पं भजते तत् सुदर्शनम्॥**[4]

शैवशाक्तागमदृष्ट्या भगवती त्रिपुरसुन्दरी एव श्रीरूपा एषा सृष्टिः। अतो शैवशाक्तागमदृष्ट्या परमैषा शक्तिः श्रीयन्त्रनाम्ना वर्णिता। सर्वाः मातृकाः समग्रसृष्टिव्यापारकारणभूताः श्रीशक्तेः तनुस्वरूपा एव। एषा वर्णमातृका एव ज्ञातृज्ञानज्ञेयरूपतया प्रकाशयन्ती भासते, अतो ह्येषा एव शब्दतनुमयी महाशक्तिः परमात्मनः।

---

1. अहिर्बुध्न्यसंहिता, 2/8,9,12
2. अहिर्बुध्न्यसंहिता, 2/57
3. अहिर्बुध्न्यसंहिता, 2/62
4. अहिर्बुध्न्यसंहिता, 2/62

उक्तञ्च महामाहेश्वरेण अभिनवगुप्तपादाचार्येण—

**तव च का किल न स्तुतिरम्बिके**
**सकलशब्दमयी किल ते तनुः।**
**निखिलमूर्तिषु मे भवदन्वयो**
**मनसिजासु बहिः प्रसरासु च॥**
**इति विचिन्त्य शिवे! शमिताशिवे!**
**जगति जातमयत्नवशादिदम्।**
**स्तुतिजपार्चनचिन्तनवर्जिता**
**न खलु काचन कालकलास्ति मे॥**[1]

अस्याः श्रीयन्त्ररूपायाः परदेवतायाः विज्ञानेन श्रेयः प्रेयश्चाप्नुवन्ति आध्यात्मिकाः तान्त्रिकाः। ये च एनं जगद्व्यापारं गमनागमनात्मकं चक्रमयं पश्यन्ति ते श्रीचक्रम् कथयन्ति एनम्। तथैव चक्रमयम् एनं पश्यन्तः वैष्णवाः सुदर्शनचक्रमिति कथयन्ति।



1. गीताप्रेसद्वाराप्रकाशितदुर्गासप्तशत्यामन्तिमे पृष्ठे उद्धृतमस्ति।

अष्टमोऽध्यायः

# निगमागमसमीक्षा

अस्मिन्ननुसन्धाने विमर्शितविषयाणामवलोकनेन दृश्यते यत् नैगमिकतथ्यानां स्पष्टीकरणमेवास्ति आगमेषु। एवमस्ति चेत्, आगमानामाप्तत्त्वं किम् ? स्वातन्त्र्यं किम्? अस्मिन्विषये पूर्वमेव विमर्शितं यत् पारमार्थिकं सत्यं तु एकमेव। निर्मलान्तःकरणानामृषीणां माध्यमेन तत्परमसत्यं निगमात्मकमवतरितम्। तत्पश्चात् यः कोऽपि तदेव परमतत्त्वं ज्ञास्यति, द्रक्ष्यति, अनुभविष्यति वा तदा तस्मिन् तत्त्वे किमपि परिवर्तनं भवितुं नार्हति। तस्याभिव्यक्तौ ज्ञापनविधौ जिज्ञासूनां ज्ञानग्रहणसामर्थ्यदृष्ट्या परिवर्तनं भवितुमर्हति। तत्परिवर्तनं विरोधात्मकं न भवितुमर्हति।

## अध्वरेषु ध्वरः वामाचारश्च

पुनश्च कोऽपि अतत्त्वज्ञः अतत्त्वज्ञसमूहो वा लौकिकवासनया बाह्येन्द्रियाणां काल्पनिकसुखोपभोगेच्छया वा सांसारिकमोहवशात् ऋषिभिर्दृष्टनैगमिकमन्त्राणां विपरीतव्याख्यानं प्रस्तोष्यति स्थापयिष्यति वा। तदा तस्यां स्थितौ तपसा ध्यानेन अन्तः अनुसन्धानेन च तन्निर्मलं तत्त्वं कोऽपि प्राप्स्यति, ज्ञास्यति, अनुभविष्यति चेत्, निश्चप्रचमस्त्येतद् यत् सः महापुरुषः तस्य विपरीतव्याख्यानस्य प्रस्तुतेः स्थापनायाश्च निषेधं करिष्यति। सः कथमपि विपरीतस्थापनात्मकं तर्कं युक्तिं वा स्वीकर्तुं न हि शक्नोति। केचन तेन महापुरुषेण निर्दिष्टप्रकारेण विमर्शं करिष्यन्ति। केचन सांसारिकमोहग्रस्ताः, जिह्वालोलुपाः, चरित्रभ्रष्टाश्च तस्य महापुरुषस्यैव विरोधं करिष्यन्ति।

अस्मिन् प्रबन्धे विमर्शात् स्पष्टमस्ति यत् निगमेषु निरपराधप्राणिनां हिंसायाः मांसभक्षणस्य च पूर्णतया निषेधोऽस्ति। अध्वरः एव यागः। रक्तमांसमज्जास्थ्यादिकं क्षिप्त्वा राक्षसाः यज्ञध्वसं कुर्वन्ति स्म। न तु इत्येव अपितु राक्षसमानसाः संस्कृतपण्डिताः रावणादयः हिंसात्मकान् यज्ञान् कुर्वन्ति स्म। बलात् नारीणामपहरणं व्यभिचारं चापि कुर्वन्ति स्म। ते च स्वयं स्वात्मानं वैदिकपण्डितम् अपि मन्यमानाः आसन् । तत्त्वद्रष्टृभिः ऋषिभिः सह तेषां विरोधः। ते यज्ञे हिंसा, पशुहिंसया सहैव नरमेधादिशब्दस्य विपरीतार्थं कुर्वाणः मानवहिंसापि यज्ञे कुर्वन्ति स्म। यज्ञे हिंसा स्थापनाय ऋषीणामध्वरेषु रक्तमांसमज्जास्थ्यादिकं प्रक्षिपन्ति स्म। तदा ऋषीणां रक्षणाय अहिंसनीयसत्कर्मात्मकवेदानाम् अध्वराणां रक्षणाय च भगवता रामेण राक्षसानां वधः कृतः। कालान्तरे राक्षसमानसैः मद्यमांसमैथुनरतैः चरित्रभ्रष्टैः

महर्षिवाल्मीकिविरचिते ऐतिहासिकग्रन्थे पवित्रे रामायणेऽपि स्वरचिताः असत् कथाः लोकवञ्चनया प्रक्षिप्ताः। यस्याः स्पष्टीकरणं वर्णतत्त्वविमर्शप्रकरणे एव जातम्।

वस्तुतः जीवनस्य समग्रकर्म एव वेदेषु यज्ञपदेनोक्तमस्ति। कालान्तरे वेदाध्ययने न्यूनत्वे जाते सति वैदिककर्मणां लोके ज्ञानाय तत्तत्कर्मप्रतीकात्मक-यज्ञरचना तत्कालीनैर्विद्वद्भिः कृता। ब्रह्मणग्रन्थेषु तत्तत्कर्मप्रतीकात्मकयज्ञरचनायाः स्वरूपं वर्णितम्। लोके वैदिककर्मणां ज्ञानमेव तत्र मुख्यं प्रयोजनं किन्तु कालान्तरे प्रतीकानामेव प्रामुख्यं जातम्। तदा राक्षसमानसैः धनलोलुपैः चरित्रभ्रष्टैः वञ्चकैः केचन वेदमन्त्राणां विरुद्धार्थं कृत्वा ब्राह्मणेष्वपि लोकवञ्चकरचनाः प्रक्षिप्ताः। तैः मांसभक्षणलालसया अध्वरं ध्वरे परिवर्तितम्। मद्यपानलालसया मधुसोमशब्दयोः मद्यार्थं कृतम्। अश्वमेधनाम्ना प्रसिद्ध-प्रजापालनार्थ-प्रजापतिप्रजासम्बन्धज्ञापकमन्त्राणां राज्ञः सुन्दरीभिः स्त्रीभिः सह कुकर्मलालसया अश्लीलभाषणात्मकं व्यभिचारात्मकञ्च महानर्थं कृतम् । एवमध्वरं ध्वरे परिवर्तिते अश्वमेधयागे मांसाहारिणः चरित्रभ्रष्टाः ऋत्विजाः चतुष्पादमश्वं पशुं मारयित्वा मृताश्वस्य पार्श्वे राज्ञः श्रेष्ठसुन्दर्यः स्त्रियः सर्वश्रेष्ठसुन्दरीं पट्टमहिषीं वा रात्रिपर्यन्तं शाययित्वा तं स्थलं परितः वस्त्रेण आच्छादयित्वा अश्लीलसंभाषणं कुर्वन्ति स्म। अस्मिन् कपटाचारे छलेन धर्मवञ्चनया राज्ञः चौर्येण तस्याः पत्न्या सह व्यभिचारं कुर्वन्ति स्म। एषः दुराचारः जन्मेजयः दृष्टवान् यस्य आच्छादितं वर्णनमस्ति महाभारतस्य खिलभागे हरिवंशपुराणे ततः किञ्चित् —

**तस्मिन् विकारे जनिते विदित्वा तत्त्वतश्च तत्।**
**असंज्ञप्तोऽयमश्वस्ते ध्वंसेत्यध्वर्युमब्रवीत्॥**[1]

अर्थात् सन्देहे जाते संज्ञपितमृताश्वेन सह स्वपत्न्याः वपुष्टमायाः शयनस्थले विकारं दृष्ट्वा तत्र गत्वा मैथुनात्मकं व्यभिचारं स्पष्टं ज्ञात्वा क्रुद्धः अध्वर्युमब्रवीत् तव ध्वंसः नाशः भवतु। न एषः संज्ञप्तोऽश्वः अपितु व्यभिचारी पुरुषः भवत्सु मध्यतः। क्रुधश्च अग्रे उक्तवान् —

**ऋत्विजश्चाब्रवीत् क्रुद्धः स राजा जनमेजयः।**
**दौर्बल्यं भवतामेतद् यदयं धर्षितः क्रतुः।**
**विषये मे न वस्तव्यं गच्छध्वं सहबान्धवैः॥**[2]

पत्नीं वपुष्टमां प्रति च एवमुक्तवान् —

**शौण्डीर्यं मेऽनया भग्नं यशो मानश्च दूषितम्।**
**न चैना द्रष्टुमिच्छामि परिक्लिष्टामिव स्त्रजम्॥**[3]

1. महाभारत, खिलभाग हरिवंश, 5/14
2. महाभारत, खिलभाग हरिवंश, 5/18,19.
3. महाभारते, खिलभागे हरिवंशे भविष्यपर्वे, 5/22.

पुनः एतत् सत्यं ज्ञात्वा, यत् एषा व्यभिचारं धर्माचरणमुक्त्वा व्यभिचारिणा ऋत्विजेन वञ्चिता। यस्यार्थमश्लीलसंभाषणं यज्ञे व्यभिचारिणः कुर्वन्ति। अस्याः कामासक्तिः तं पुरुषं प्रति नासीत् । तदर्थमेतद्बुद्धिगम्यं तर्कं स्वीकृतम् —

**भानोः प्रभा शिखावह्नेर्वेदी होत्रे तथाहुतिः।**
**परामृष्टाप्यसंसक्ता नोपदुष्यन्ति योषितः॥**[1]

क्षत्रियान् प्रति चोक्तवान् । अद्य प्रभृति क्षत्रियाः कदापि अश्वमेधयागं न करिष्यन्ति। जनमेजयवचनात् तावत्कालात् क्षत्रियैः वेदविरुद्धमिथ्याचारात्मकं वाजपेययागः पूर्णरूपेण त्यक्तः। वेदे तु प्रजाहितार्थं राष्ट्रव्यापीसंवैधानिक नियमाः अश्वमेधयागपदवाच्याः आसन्।

**"राष्ट्रं वा अश्वमेधः"**[2], **"श्रीर्वै राष्ट्रमश्वमेधः"**[3], **"क्षत्रं वा अश्वो विडितरे पशवः।"**[4] **"असौ वा आदित्यः एषोऽश्वः।"**[5] इत्यादि स्पष्टवचनात्।

## जिनस्य बुद्धस्य चागमनम्

एवमेतद् स्पष्टं यत् वेदविरुद्धमेव हिंसामद्यमांसमैथुनादि व्यभिचाराः दुष्टैः यज्ञेषु प्रचालितमासीत् । तस्मिन् समये, संसाराद्विरक्तः सिद्धार्थः तपसा ज्ञानेन च तत्त्वबोधं प्राप्य बोधिसत्वं जातः। बुद्धत्वं प्राप्य साररनाथे प्रथमोपदेशं कृतवान् । तेन महात्मना यज्ञे निरीहपशूनां हिंसामद्यमांसमैथुनादिकं दुराचरणं धर्मविरुद्धमुक्तम्। तथैव तपसा सत्वोपलब्धः जितेन्द्रियः जिनः महावीरस्वामी यज्ञे हिंसां मद्यमांसमैथुनसेवनात्मकदुराचरणञ्च धर्मविरुद्धं कृत्यमस्तीत्युक्तवान् । एते सत्योपलब्धाः महापुरुषाः संस्कृतभाषाभाषिणः न आसन्।

तस्मिन्समये यज्ञे कुकर्मरतैः हिंसकैः चरित्रभ्रष्टैः स्वीयं कुकृत्यं वैदिकमुक्तम्। धर्मतत्त्वसाक्षात्कारि- महापुरुषाणां कृते धर्माधर्मविषये बाह्यतर्कस्य प्रमाणस्य वा आवश्यकता न भवति। तैः महापुरुषैः यज्ञे हिंसायाः दुराचारस्य च विरोधमेव कृतम् । भ्रष्टैः प्रस्तुतं कुकर्मस्य वेदसमर्थनादिकं तर्कं किञ्चिदपि किमपि न श्रुतम् । तदा यज्ञे दुराचाररतैः हिंसकैः नास्तिकैः वेदधर्मविनाशकैः दुष्टैः महावीरमेव बुद्धमेव नास्तिकमुक्तम् । दुष्टैः धर्मकृत्यरूपेण प्रचारितकुकर्मस्य भगवता बुद्धेन कृतः सफलविरोधः धर्मचक्रपरिवर्तनरूपेण प्रसिद्धः । वस्तुतः एषः विरोधः कुकर्मस्य विरोधः आसीत् न तु वेदविरोधः । धम्मपदे

---

1. महाभारते, खिलभागे हरिवंशे भविष्यपर्वे, 5/39.
2. श.ब्रा., 13/1/6/3.
3. श.ब्रा., 13/2/9/2.
4. श.ब्रा., 13/2/2/15.
5. श.ब्रा., 7/3/2/10.

शतशः स्थलेषु — "**एष धम्मो सनंतनो।**"[1] "**तमहं ब्रूमि ब्राह्मणम्**" उक्तमस्ति— अस्मिन् छन्दे पश्यन्तु भगवतः बुद्धस्य ब्राह्मणव्याख्या :—

**यस्य कायेन वाचाय, मानसनत्थि दुक्कतं, संवुतं तीहि ठानेहि तमहं ब्रूमि ब्राह्मण्॥**

**न जटाहि न गोत्तेहि न जच्चा होति ब्राह्मणो, यम्हि सच्चञ्च धम्मो च तमहं ब्रूमि ब्राह्मणो॥**[2]

भगवता कृष्णस्य, बुद्धस्य, महावीरस्य च अधोलिखितानि वाक्यानि पश्यन्तु— तत्र प्राथम्येन भगवतः कृष्णस्य —

**उद्धरेदात्मनात्मानं नात्मानमवसादयेत्।**
**आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः॥**[3]

भगवान् बुद्धः वक्ति —

**अत्ता हि अत्तनो नाथो को हि नाथो परोसिया।**[4]
**अत्तना व सुदन्तेन नाथं लभति दुल्लभम्।**

महावीरस्वामिनः वदन्ति —

**यः परमात्मा स एवाहं योऽहं स परमस्ततः।**
**अहमेव मयोपास्यः नान्यः कश्चिदस्ति स्थितिः॥**
**रागद्वेषादिकल्लोलैरलोलं यन्मनो जलम्।**
**स पश्यत्यामनस्तत्त्वं तत्तत्त्वं नेतरो जनः॥**[5]

## गौडपादाचार्यस्य शङ्कराचार्यस्य चागमनम्

भगवतः बुद्धस्य निर्वाणप्राप्तिपश्चात् कालान्तरे शनैः शनैः बौद्धेष्वपि प्राकृतिकवासनात्मिकाः इन्द्रियसुखलिप्सात्मिकाः तदर्थं मिथ्याचारे योजिकाः वञ्चनात्मिकाश्च आसुरी प्रवृत्तयः विकसिताः। बौद्धविहारेषु स्त्रीपुरुषेषु व्यभिचारं प्रवृत्तम् । लोकवञ्चनार्थ तैः भ्रष्टैः तं व्यभिचारं धार्मिकरूपप्रदानाय बौद्धागमेषु मद्यमांसमैथुनसमर्थकेन वामाचाररूपेण योजितम् । एवं यस्य कुकर्मस्य विरोधे भगवता बुद्धेन "धम्मसंघं" स्थापितमासीत्।

1. धम्मपद, 1/5.
2. धम्मपद, 26/8,10.
3. श्रीमद्भगवद्गीता, 6/5.
4. धम्मपद, 12/4.
5. समाधितन्त्रम् , जैनशास्त्रम्.

तत्सर्वं किञ्चिद् परिवर्तितरूपेण बौद्धेषु प्रविष्टम्। तत्सर्वं तपसा निर्मलान्तःकरणः महात्मा गौडपादः दृष्टवान् । तेन दृष्टं यत् यदौपनिषत्तत्त्वम् ऋषिभिर्दृष्टमासीत् तदेव तत्त्वं महात्मबुद्धेनापि प्राप्तमुपदिष्टञ्च। किन्तु तत्तत्त्वं वैदिकेषु याज्ञिककर्मकाण्डेन बौद्धेषु च विकृतवामाचारेण आच्छादितञ्जातमस्ति। अतः माण्डूक्यकारिकाभिः तमेव वैदिकमौपनिषत्तत्त्वं व्याख्यातं महात्मना गौडपादेन। तासु कारिकासु श्रद्धया महात्मानं बुद्धमपि प्रणमति सः महात्मा गौडपाद :—

**ज्ञानेनाकाशकल्पेन धर्मान् यो गगनोपमान्।**
**ज्ञेयाभिन्नेन सम्बुद्धस्तं वन्दे द्विपदां वरम्॥**[1]

किन्तु सावधानेन स महात्मा मम अनया कारिकया जनाः भ्रान्ताः न भवन्तु यत् बुद्धेन दृष्टमेततत्सत्यमपूर्वमदृष्टमिति। अपितु वैदिकैः ऋषिभिर्दृष्टमेव परं सत्यं बुद्धेनापि दृष्टम् । यः कोऽपि अद्यापि तं परमसत्यं द्रष्टुं ज्ञातुमनुभवितुञ्च शक्नोति। अतः एतदपि स्पष्टङ्करोति समाप्तौ माण्डूक्यकारिकायाम् —

**क्रमते न हि बुद्धस्य ज्ञानं धर्मेषु तायिनः।**
**सर्वेधर्मास्तथा ज्ञानं नैतद्बुद्धेन भाषितम्॥**[2]

तस्मिन् समये बौद्धेषु न केवलं मद्यमांसमैथुनसेवनसमर्थकं वामाचारमेव प्रचलितमपितु धार्मिकवञ्चनार्थं जैनबौद्धजातकेषु भगवतः रामस्य कृष्णस्य चरित्रहननाय मिथ्या कथाः योजिताः। "एकस्य रजकस्य सीताविषयकमारोपं ज्ञात्वा रामेण लोकापवाद-भयात् अग्निपरीक्षितायाः विशुद्धचरित्रासीतायाः परित्यागं कृतम् अस्याः मिथ्याकथायाः मूलं बौद्धपंडितगुणाढ्येन पैशाचीभाषायां लिखितबृहत्कथा एवास्ति। तथैव शम्बूकवधसम्बन्धी मिथ्या कथापि वैदिकेषु चरमजातिवादस्य घृणायाश्च मिथ्याप्रचारार्थमेव बहिस्तः प्रक्षिप्ता। केचन क्षुद्रैः मिथ्यालाञ्छना-विरचकमानसैः बौद्धैः जैनैः मिथ्याजातकरचनाक्रमे रामस्य पत्नीं जानकीं सीतां रामस्य भगिनी लिखितम्। न तु इत्येव अपितु केचन अत्यन्तमन्दबुद्धिजनैः स्वसंप्रदाये अहिंसा प्रतिष्ठायाः चरमोत्कर्षप्रदर्शनाय रामं कृष्णञ्च हिंसकं लिखित्वा उभयोः नरकप्राप्तिर्दर्शितम्।

एवं जैनेषु बौद्धेषु व्याप्तमिथ्याकथायाः चरमोत्कर्षे गौडपादस्य प्रशिष्यः आत्मदर्शी आचार्यः शङ्करः स्वीयया ऋतम्भराप्रज्ञया लोके प्रसरितमिथ्याडम्बरस्य युक्तियुक्तं निवारणं कृतम् । आचार्य शङ्करेण बौद्धेषु जैनेषु प्रचलितमिथ्याचारस्य भ्रष्टाचारस्य एव निवारणं कृतम् इत्येव न, अपितु स्वयं भगवतः शिवस्य परमभक्तोऽपि शिवावतारोऽपि वा मद्यमांसमैथुनदासानां शैवकापालिकानामपि तेनैव प्रकारेण तीव्रयुक्त्यात्मिकासिधारया सफलोच्छेद्रं कृतम्।

---

1. माण्डूक्यकारिका, 4/1.
1. माण्डूक्यकारिका, 4/99.

## याज्ञिकहिंसायाः जन्मना श्रेष्ठत्वस्य च निवारणाय वैष्णवागमानाम् उत्पत्तिः उत्कर्षश्च

आगमेषु परमतत्त्वविमर्शप्रकरणे वैष्णवागमानां तात्त्विकविमर्शे स्पष्टं यत् श्रुतीनामेव व्याख्यानमस्ति वैखानसागमः। अतः एषः स्वाभाविकः प्रश्नः उदेति यत् श्रुतीनामेव व्याख्यानमस्ति चेत् स्वतन्त्रव्याख्यानभूतायाः वैखानसागमपरम्परायाः पृथक्त्वस्य किं प्रयोजनमासीत् ? वैखानसागमस्य सूक्ष्माववलोककनेन स्पष्टं भवति यत् कस्यापि याज्ञिकक्रियायां कस्यापि प्राणिनः हिंसायाः किञ्चिदपि स्थानं नास्ति । वैखानसाः सर्वेषु प्राणिषु अन्तःस्थं विष्णुं पश्यन्ति अतः कस्यापि हिंसात्मिका परिकल्पनापि कथं कर्तुं शक्नुवन्ति। एवं प्रतिभाति यत् यदा वैदिककर्मणां प्रतीकात्मकयज्ञकृत्येषु मांसभक्षकैः कैश्चन स्वात्मानं पण्डितं मन्यमानैः दुष्टैः निरीहनिरपराधपशूनां हिंसारब्धा ततः एव हिंसामसहतः सात्त्विकैः सच्चरित्रैः स्वातन्त्र्येण वेदव्याख्यानस्य व्यवस्था कृता। स्वीयमर्चनात्मकं यज्ञकर्ममपि पवित्रं अहिंसात्मकं सुरक्षितं कृतम्। स्वीये सम्प्रदाये परमात्मनि श्रद्धायाः भक्तेः एव महत्वं स्थापितं न तु जन्मना उच्चनीचव्यवस्थायाः।

कालान्तरे स्वसन्ततिमोहग्रस्तैः कुलाभिमानिभिः कैश्चन याज्ञिकैः वर्णव्यवस्थायाः पैतृककर्मग्रहणसौकर्येन कर्मजन्यापि जन्मना परिवर्तिते सति तत्र जन्मना श्रेष्ठत्वहेयत्व-प्रतिपादकव्यवस्था छलेन स्वीयेषु शास्त्रेषु योजिता। तस्मिन् समये शनैः शनैः वेदानां पठनमपि न्यूनं जातमासीत् । स्त्रियः गृहकर्मणि संलग्नाः वेदानामध्यनार्थं समयं न दास्यन्ति स्म। श्रम-शिल्प-कर्मणि संलग्नाः जनाः अपि आजीविकायां संलग्नाः समयाभावेन ग्रस्ताः अध्ययनात् विरताः। केचन लोके धर्मवञ्चनया लौकिकसम्पत्तिसम्पन्नाः चिन्तितवन्तः यतो लोके मूर्खाणामाधिक्ये एव धर्मवञ्चनात्मिका मम सफलता भविष्यति। अतस्तैः वैदिककर्मणि शूद्राणामधिकारः नास्ति इति स्मृतिषु ब्राह्मणग्रन्थेषु च प्रक्षिप्तम् । अतः तस्मिन् समये पाञ्चरात्रैः परमात्मनि अर्चनायां सर्वेषां वर्णानां समानाधिकारः इति प्रतिपादितम् । तद्यथा महर्षिः वेदव्यासः महाभारते स्वयं वक्ति—

**ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः।**
**अर्चनीयश्च सेव्यश्च नित्ययुक्तैः स्वकर्मसु॥**
**सात्वतं विधिमास्थाय गीतः संकर्षणेन यः।**
**द्वापरस्य युगस्यान्त आदौ कलियुगस्य च॥**[1]

पाञ्चरात्रागमस्य प्राचीनसंहितासु मुख्याः सात्वतसंहिता तत्रापि—

**कर्मवाङ्मनसैः सम्यग्भक्तानां परमेश्वरे।**
**चतुर्णामधिकारो वै प्राप्ते दीक्षाक्रमे सति॥**[2]

---

1. महाभारत, भीष्मपर्व, 66/39-40.

2. सात्वतसंहिता, 2/11.

एवमेतत् स्पष्टं यत् हिंसायाः धर्मवञ्चनायाः विरोधे एव वैष्णवागमानामुत्पत्तिः जाता। कोऽपि इदमपि प्रष्टुं शक्नोति यत् स्वकर्मणि व्यस्तताकारणेन प्रारम्भे वेदाध्ययनात् दूरङ्गताः स्त्रियः शूद्राश्च इत्यत्र किं प्रमाणम् ? तान् प्रति वच्मि, प्राथम्येन वेदेषु एव वर्णतत्त्वविमर्शाध्याये सम्यग् विचारितम् यत् वेदाध्ययने सर्वेषां वर्णानां सामान्येन अधिकारः। किन्तु कालान्तरे वेदाध्ययनरहितानां जनानां वेदार्थज्ञापनाय महाभारत-भागवतादिरचना कृता व्यासेन मुनिना इत्युक्तमस्ति भागवते।

**स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा।**
**कर्मश्रेयसि मूढानां श्रेय एवं भवेदिह।**
**इति भारतमाख्यानं कृपया मुनिना कृतम्॥**
**भारतव्यपदेशेन ह्याम्नायार्थश्च दर्शितः।**
**दृश्यते यत्र धर्मादिः स्त्रीशूद्रादिभिरप्युत॥**[1]

कर्म श्रेष्ठं मत्वा आजीविका कर्मणि एव संलग्नाः अक्षरज्ञानहीनाः अपठितग्रन्थाः अत एव मूढाः ये सन्ति एवं प्रकारकविद्यारहितानां स्त्रीणां गृहकार्ये एव व्यस्तता कारणात् अपठितानां स्त्रीणां, शूद्राणां बाल्यकालादेव आजीविकाविषयकवस्तूनामभावकारणात् आजीविकार्थश्रमशिल्पकर्मणि एव संलग्नत्वात् अपठितानां शूद्राणां, द्विजबन्धूनां येषां सहोदराः गुरुकुले गत्वा अध्ययनेन द्विजत्वं प्राप्ताः अर्थात् सम्यक् अध्ययनं कृत्वा योग्याः विद्वांसः जाताः सन्ति, किन्तु स्वयं ये कुटुम्बस्य आजीविकासम्बन्धिव्यवस्थायां बाल्यकालादेव पारिस्थितिकीदायित्वनिर्बहणात् न अधीतवन्तः तेषां द्विजबन्धूनाम, एवं प्रकारकाणाम् अनधीतविद्यानां या त्रयी येषां श्रुतिः न गोचरा, श्रुतेः वेदशास्त्राणां दर्शनमपि न जातम्, तेषामपि कल्याणं भवेत् । अपठितेऽपि वैदिकधर्मस्य सत्कर्मणः आध्यात्मिकजीवनस्य बोधः भवेत् । इति विचिन्त्य अत्यन्त कृपया मुनिना द्वैपायनव्यासेन ऐतिहासिककथामाध्यमेन वैदिकसत्कर्मज्ञानप्रदानाय महाभारतग्रन्थस्य रचना कृता। एवं महाभारतग्रन्थोपदेशेन तेन महात्मना आम्नायार्थः वेदार्थः तेषामपठितानां कृतेऽपि दर्शितः। अर्थात् ऐतिहासिकमहाभारतकथामाध्यमेन उपर्युक्तानाम् अपठितस्त्रीशूद्रद्विजबन्धूनामपि धर्मादिः दृश्यते वैदिकधर्मकर्मादेः ज्ञानं भवति। तथैव लघुकथामाध्यमेन परमार्थदर्शनाय भागवतग्रन्थस्य रचना मुनिना कृता। एवमत्र स्पष्टतया उक्तमस्ति यत् वैदिकधर्मकर्मणां अपठितानामपि यथा ज्ञानं भवेत् तथा इतिहासकथादियोज्याः। वैदिकधर्मस्य प्रचारः प्रसारः इतिहासकथादिमाध्यमेनापि करणीयः इत्येव अभिप्रायः। स्त्रीशूद्रादीनां वेदाध्ययने अधिकारः नास्तीति न, तत्तु विपरीतार्थमेव, मुनेः कृपायाः विरोध एव, महदाश्चर्यमस्ति यत् केचन

1. भागवत्, 1/4/25,29.

विद्वांसः अस्य श्लोकस्य स्त्रीशूद्रादीनां वेदाध्ययनेऽधिकार एव नास्ति इति श्लोकविरुद्धधर्मविरुद्धवेदविरुद्धार्थं कृत्वा वैदिकज्ञानानां प्रचारप्रसारे नास्तिकप्रकृत्या व्यवधानं कुर्वन्ति।

एवं प्रतिभाति प्रारम्भिकस्थितौ अपठितेषु वेदार्थप्रचारप्रसाराय इतिहासपुराणादिकथा व्यवस्था जाता। कालान्तरे कथावाचनेन धनार्जकैः केचन भ्रान्तकथावाचकैः स्त्रीशूद्रादीनां वेदानामनध्ययने एव स्वीयपुत्रपौत्राद्याजीविकायाः पोषणं विचिन्त्य स्त्रीशूद्रद्विजबन्धूनां वेदाध्ययने अधिकारः नास्ति इति विपरीतार्थः प्रचारितः। जन्मना वर्णव्यवस्था इत्यपि कूटबुद्ध्या शास्त्रेषु वेदातिरिक्तेषु प्रक्षिप्तम्।

## आगमानां स्वातन्त्र्यं कालक्रमश्च

एवं येनकेन प्रकारेण एषा मिथ्या अवैदिकी धारणा कलुषितमानसैः क्षुद्रैः शनैः शनैः लोके प्रचारिता यत् स्त्रीशूद्राणां वेदाध्ययनेऽधिकारः नास्ति। यदा निषेधकर्तृणां लोके शासनव्यवस्थायाञ्च वर्चस्वं जातम् तदा तत्त्वदर्शिमहापुरुषैः सर्वेषां जनानां धर्मज्ञानप्रदानाय सर्वेषां धर्मकर्मणि अधिकारप्रदानाय वेदात् आगमानां स्वातन्त्र्यं स्थापितम्। तैः उक्तं वेदेऽधिकारः भवतु न भवतु वा किन्तु अत्रागमशास्त्रे सर्वेषां जनानामधिकारोऽस्ति यथास्मिन्लोके मातृपितृसम्बन्धात् ममोत्पत्तिः जाता तथैव तेषामपि यथा सुखं दुःखमहमनुभामि तथैव तेऽपि अनुभवन्ति। यथात्यन्तिकदुःखमुक्तिलालसा मयि अस्ति तथैव तेष्वपि। कथञ्चिद् भगवत्कृपया धर्मज्ञानात् स्वरूपज्ञानात् मया परमार्थमनुभूय दुःखनिवृत्तिर्प्राप्ता तथैव तेऽपि प्राप्तुं शक्नुवन्ति। आत्मतत्त्वभूमौ मया सह तेषां भेदो नास्ति। तेषां दुःखनिवृत्तिः मम आनन्दोल्लासाय भवति। यत् परमार्थतत्त्वं मयि आगतं तत्तेष्वपि तथैव आगन्तुं शक्नोति। अतः मम शास्त्रे सर्वेषां जनानामधिकारोऽस्ति। यथा वक्ति महात्मा उत्पलदेवः ईश्वरप्रत्यभिज्ञायाः मङ्गलाचरणे।

**कथंचिदासाद्य महेश्वरस्य**
**दास्यं जनस्याप्युपकारमिच्छन्।**
**समस्तसम्पत्समवाप्तिहेतुं**
**तत्प्रत्यभिज्ञामुपपादयामि॥**[1]

एवमेतत् स्पष्टं यत् एतेषामागमानां समयः तदा अस्ति यदा वेदाध्ययने स्त्रीशूद्राणामधिकारविषयकः अवैदिकः निषेधः प्रचलितः। अतः आगमानां स्वातन्त्र्यं महापुरुषैः अतीव कृपया कृतम् न तु वेदविरोधे। एवमपि वक्तुं शक्यते यत् एभिः

---

1. ईश्वरप्रत्यभिज्ञायाः मङ्गलाचरणम्

महापुरुषैः विवादेन विना अतीव विनम्रभावेन आगमानां स्वातन्त्र्येण वेदार्थमेव सम्प्रेषितम् लोके। एवं जन्मतः श्रेष्ठत्वादिमिथ्याहंकारं निरस्तम्। यत्रकुत्रापि आगमेष्वपि हिंसामद्यमांसादिसेवनस्य समर्थनं दृश्यते तत् आसुरीप्रवृत्तेः एव परिणामः। न तु धर्मागमात्मकम्। न च तदर्थं स्वातन्त्र्यम् । इत्येव अलम्।



# सन्दर्भितसहायकग्रन्थानां सूची


| क्र.सं. | ग्रन्थनाम | लेखकः/संपादकः/प्रकाशकः | प्रकाशन ख्रिस्ताब्दः |
|---|---|---|---|
| 1 (क) | ऋग्वेद-संहिता सायणाचार्यस्य माधवीयवेदार्थ-प्रकाशसहिता, | श्रीमोक्षमूलरभट्टः, कृष्णदास अकादमी, वाराणसी, | 1983. |
| (ख) | ऋग्वेद-संहिता। | श्रीपाददामोदरसातवलेकरः, स्वाध्यायमण्डल-पारडी, बलसाड, गुजरात, | 1985. |
| (ग) | ऋग्वेद-भाषाभाष्य, | पं. राकेशरानी, दयानन्द संस्थान, दिल्ली। | |
| 2.(क) | शुक्लयजुर्वेदमाध्यन्दिन संहिता | उव्वटस्य मन्त्रभाष्येण महीधरस्य च संवलिता पं. जगदीशलाल वेददीपभाष्येण शास्त्री, मोतीलाल बनारसीदास, दिल्ली, | 1999. |
| (ख) | यजुर्वेद माध्यन्दिनसंहिता। | श्रीपाददामोदरसातवलेकरः, स्वाध्यायमण्डल, पारडी, बलसाड, गुजरात, | 1985. |
| (ग) | यजुर्वेद-भाषाभाष्य। | पं. राकेशरानी, दयानन्द संस्थान, दिल्ली। | |
| 3.(क) | यजुर्वेद-काण्वसंहिता। | श्रीपाददामोदरसातवलेकर, स्वाध्यायमण्डल, पारडी, बलसाड, गुजरात, | 1940. |

(ख) शुक्लयजुर्वेद-काण्वसंहिता — सायणाचार्यस्य माधवीयवेदार्थ प्रकाशसहिता, डॉ. भगीरथ प्रसाद त्रिपाठी,(वागीशशास्त्री), सं. संस्कृतविश्वविद्यालयः, वाराणसी, 1978.

4.(क) सामवेद-संहिता, श्रीपाददामोदरसातवलेकर, स्वाध्यायमण्डल, पारडी, बलसाड, गुजरात, 1985.

(ख) सामवेद-भाषाभाष्य, पं. राकेशरानी, दयानन्द संस्थान, दिल्ली।

5.(क) अथर्ववेदसंहिता, शंकरपाण्डुरङ्गपण्डितः, सायणाचार्यस्य माधवीयवेदार्थ-प्रकाशसहिता, कृष्णदास अकादमी, वाराणसी, 1989.

(ख) अथर्ववेदसंहिता, श्रीपाददामोदरसातलेकर, स्वाध्यायमण्डल, पारडी, बलसाड, गुजरात, 1985.

(ग) अथर्ववेद-भाषाभाष्य, पं. राकेशरानी, दयानन्द संस्थान, दिल्ली।

6. कृष्णयजुर्वेदीय-तैत्तिरीयसंहिता, श्रीपाददामोदरसातवलेकर, स्वाध्यायमण्डल, पारडी, बलसाड, गुजरात, 1958.

7. कृष्णयजुर्वेदीय काठक संहिता, श्रीपाददामोदरसातवलेकर, स्वाध्यायमण्डल, पारडी, बलसाड, गुजरात, 1958.

8. कृष्णयजुर्वेदीय मैत्रा-यणीसंहिता, श्रीपाददामोदरसातवलेकर स्वाध्यायमण्डल, पारडी, बलसाड, गुजरात, 1958.

9.(क) ऐतरेयब्राह्मणम्, सायणभाष्यसमेतम्, सत्यव्रतसामाश्रमी, एशियाटिक सोसायटी, कलकत्ता (बंगाल), 1906.

(ख) ऐतरेयब्राह्मणम्, नागप्रकाशक, दिल्ली, 1971.

10. कौषीतकि-ब्राह्मणम्, बी. लिंडर जेना, 1887.

11. शाङ्खायन-ब्राह्मणम्, गुलाबराय, आनन्दाश्रम, पूना, 1991.

12.(क) शतपथब्राह्मणम्, सायणभाष्यसहितम्, नागप्रकाशक, दिल्ली, 1990.

(ख) शतपथब्राह्मणम्, माध्यन्दिनीयम्, अजमेर, 1903.

13. तैत्तिरीय-ब्राह्मणम्, सायणभाष्यसहितम्, नारायणशास्त्री, आनन्दाश्रम, पूना, 1899.

14. ताण्ड्यमहाब्राह्मणम्, सायणभाष्यसहितम्, चौखम्भासंस्कृत प्रतिष्ठान, दिल्ली, 1989.

15. दैवतब्राह्मणम् तथा षडविंश-ब्राह्मणम् सायणभाष्यसहितम्, जीवानन्द विद्यासागर, कलकत्ता, 1881.

16. मन्त्रब्राह्मणम्, सत्यव्रतसामाश्रमी, कलकत्ता, ·1891.

17. संहितोपनिषद् ब्राह्मणम्, ए.सी. बर्नेल मंगलोर, 1877.

18. आर्षेयब्राह्मणम्, ए.सी. बर्नेल मंगलोर, 1877.

19. वंशब्राह्मणम्, सत्यव्रतसामश्रमी, कलकत्ता, 1893.

20. सामविधानब्राह्मणम् सायणभाष्यसहितम्, केन्द्रीयसंस्कृतविद्यापीठम्, तिरुपतिः, 1985.

21. जैमिनि उपनिषद्ब्राह्मणम् देवनागरी संस्करण, हंश अर्टेल, 1921.

22. जैमिनि आर्षेय ब्राह्मणम्, ए.सी. बर्नेल मंगलोर, 1878.

23. गोपथब्राह्मणम्, सुश्री प्रज्ञादेवी, मेधादेवी, डॉ. इन्द्रदयालसेठ, अथर्ववेदभाष्य कार्यालय, इलाहाबाद, 1977.

24. ईशावास्योपनिषद् शाङ्करभाष्यम्,गीताप्रेस, गोरखपुर, 1985.

25. केनोपनिषद् " गीताप्रेस, गोरखपुर, 1985.

26. कठोपनिषद् " गीताप्रेस, गोरखपुर, 1985.

27. प्रश्नोपनिषद् " गीताप्रेस, गोरखपुर, 1985.

28. मुण्डकोपनिषद् " गीताप्रेस, गोरखपुर, 1985.

.29. माण्डूक्योपनिषद् " गीताप्रेस, गोरखपुर, 1985.

30. तैत्तिरीयोपनिषद् " गीताप्रेस, गोरखपुर, 1985.

31. ऐतरेयोपनिषद् ''गीताप्रेस, गोरखपुर, 1985.

32. छान्दोग्योपनिषद् ''गीताप्रेस, गोरखपुर, 1994.

33. बृहदारण्यकोपनिषद् ''गीताप्रेस, गोरखपुर, 1994

34. श्वेताश्वतरोपनिषद् ''गीताप्रेस, गोरखपुर, 1985.

35. उपनिषद्सङ्ग्रहः (188 उपनिषत्संग्रहः) मोतीलाल बनारसीदास, 1985

36. आपस्तम्बीयं श्रौतसूत्रम् प्राच्यविद्यासंशोधनालयः, मैसूरविश्वविद्यालयः मैसूरः, 1960.

37. आपस्तम्बगृह्यसूत्रम्, प्राच्यविद्यासंशोधनालयः, मैसूरुः, मैसूरविश्वविद्यालयः 1987

38. बोधायनगृह्यसूत्रम्, प्राच्यविद्यासंशोधनालयः, मैसूरुः, मैसूरविश्वविद्यालयः 1983

39. निरुक्तम् (निघण्टुः), यास्काचार्य प्रणीतम्, कलकत्ता, गुरुमण्डलग्रन्थमाला, 1952.

40. निरुक्तम्, यास्कमुनिप्रणीतम्, मेहरचन्द नई दिल्ली, लक्ष्मनदास, 1982.

41. पाणिनीय-अष्टाध्यायी, अनीता आर्ष प्रकाशन, पानीपत, हरियाणा, 1990.

42. उणादिकोषः, युधिष्ठिरमीमांसक, रामलाल कपूर ट्रस्ट, सोनीपत (हरियाणा), 1974.

43. शिक्षासूत्राणि (आपिशलि पाणिनि चन्द्रगोभिरचितानि) युधिष्ठिरमीमांसकः, 1983.

44. पाणिनीयः धातुपाठः रामलाल कपूर ट्रस्ट, सोनीपत (हरियाणा), 1975.

45. व्याकरणमहाभाष्यम् पतञ्जलिमुनिप्रणीतम्, चौखम्भासंस्कृतप्रतिष्ठान, दिल्ली, 1987.

46. वाक्यपदीयम्, सम्पूर्णानन्दसंस्कृतविश्वविद्यालय, वाराणसी

47. अमरकोशः रामाश्रमी टीकायुतः चौखम्भासंस्कृतप्रतिष्ठान, 1984.

48. शिवतत्त्वरत्नाकरः, प्राच्यविद्यासंशोधनालयः मैसूरुः, 1964.

49.(क) श्रीमद्वाल्मीकीयरामायणम्, महर्षिः वाल्मीकिः, गीताप्रेस, गोरखपुर, 1989

(ख) श्रीमद्वाल्मीकीयरामायणम्, महर्षिः वाल्मीकिः, प्राच्यविद्याशोधसंस्थान, मैसूरुः, 1975.

50. अध्यात्मरामायणम्, वेदव्यासकृतम्, गीताप्रेस, गोरखपुर, 1974.

51. राम चरितमानस गोस्वामी तुलसीदास, गीताप्रेस, गोरखपुर 1985

52. योगवासिष्ठः, मोतीलालबनारसीदास, 1984.

53. महाभारत, वेदव्यास, गीताप्रेस, गोरखपुर, 1989.

54. श्रीमद्भगवद्गीता शाङ्करभाष्य, गीताप्रेस, गोरखपुर, 1989.

55. श्रीमद्भगवद्गीता रामानुजभाष्य,गीताप्रेस, गोरखपुर, 1969.

56. महाभारत खिलभागहरिवंश (श्रीहरिवंशपुराण), गीताप्रेस, गोरखपुर, 1989.

57. मनुस्मृतिः कुल्लूभट्टटीकासहिता मोतीलाल बनारसीदास 1990

58. याज्ञवल्क्यस्मृतिः मिताक्षरासहिता, नागप्रकाशन, दिल्ली, 1985.

59. नारदस्मृतिः नागप्रकाशन, दिल्ली 1985

60. गौतमस्मृतिः नागप्रकाशन, दिल्ली 1985

61. विष्णुस्मृतिः अड़ियार लाइब्रेरी,मद्रास 1984

62.(क) ब्रह्मसूत्रं शाङ्करभाष्यम्, सत्यानन्द गोविन्दमठ टेढ़ीनीम, वाराणसी, 1972.

(ख) ब्रह्मसूत्रं श्रीभाष्यम् रामानुजाचार्यकृतम्,श्रीनिम्बार्काचार्यपीठ, प्रयाग, 1974.

(ग) ब्रह्मसूत्रं श्रीनिम्बार्कवेदान्त
निम्बार्काचार्यकृतम्,श्रीनिम्बार्काचार्यपीठ, प्रयाग, 1973.

(घ) ब्रह्मसूत्रं पूर्णप्रज्ञभाष्यम्
मध्वाचार्यकृतम्, श्रीनिम्बार्काचार्यपीठ, प्रयाग, 1975.

(ङ) ब्रह्मसूत्रं अणुभाष्यम्
वल्लभाचार्यकृतम्, श्रीनिम्बार्काचार्यपीठ, प्रयाग, 1980.

(च) ब्रह्मसूत्रं आनन्दभाष्यम्,
बालकृष्णाचार्य, राम चौक सिद्धपुर, 1970.

(छ) ब्रह्मसूत्रं श्रीकरभाष्यम्, प्राच्यविद्यासंशोधनालयः
श्रीपतिपण्डिताचार्यकृतम्, मैसूरुः, 1978.

63. तत्त्वबोधः, श्रीमदाद्यशङ्कराचार्यकृतम्,
खेमराज श्रीकृष्णदास, मुम्बई, 2000

64. विवेकचूड़ामणिः, श्रीमदाद्यशङ्कराचार्यकृतम्, गीताप्रेस,
गोरखपुर, 1996.

65. अपरोक्षानुभूतिः, श्रीमदाद्यशङ्कराचार्यकृतम्, गीताप्रेस,
गोरखपुर, 1196.

66. दक्षिणामूर्तिस्तोत्रम्, श्रीमदाद्यशङ्कराचार्यकृतम्, अम्बाचरण
दूबे, 1977.

67. चर्पटपञ्जरिकास्तोत्रम्, श्रीमदद्यशङ्कराचार्यकृतम्, गीताप्रेस,
गोरखपुर, 1996.

68. योगतारावली, श्रीमदाद्यशङ्कराचार्यकृता,
वाराणसेयसंस्कृतसंस्थान, वाराणसी, 1982.

69. खण्डनखण्डखाद्यम्, श्रीहर्षप्रणीतम्, चौखम्भाविद्याभवन,
वाराणसी, 1979.

70. तत्त्वप्रदीपिका, चित्सुखमुनिकृता, चौखम्भासंस्कृतप्रतिष्ठान,
वाराणसी, 1987.

71. न्यायामृताद्वैतसिद्धी, मेहरचन्दलक्ष्मनदास, नई दिल्ली, 1984.

| | | | |
|---|---|---|---|
| 72. | सिद्धान्तबिन्दुः, | मधुसूदनसरस्वती, चौखम्भासंस्कृतसंस्थान, | 1990. |
| 73. | सिद्धान्तलेशसंग्रहः, | अप्पय्यदीक्षितः, चौखम्भाविद्याभवन, | 1990. |
| 74. | द्वादशदर्शनसंग्रहः, | काशिकानन्दः, काशिकानन्दगिरि ट्रस्ट, | 1988. |
| 75. | गायत्रीमहामन्त्रः | शाङ्करभाष्येण जयमङ्गलीविवरणवार्तिकाभ्यां संवलितः,स्वामीकाशिकानन्दगिरिट्रस्ट, | 1990. |
| 76. | पञ्चदशी, विद्यारण्यः, | भार्गवपुस्तकालयः, वाराणसी, | 1956. |
| 77. | मीमांसादर्शनम् शावरभाष्यसहितम्, | ताराप्रिण्टिग प्रेस, वाराणसी, | 1985. |
| 78. | मीमांसादर्शनम्, | जैमिनिमुनिकृतम्, संस्कृतिसंस्थान, बरेली, | 1985. |
| 79. | वैशेषिकसूत्रम् वृत्तिसहितम् | केन्द्रीयसंस्कृतविद्यापीठ, प्रयाग, | 1979. |
| 80. | प्रशस्तपादभाष्यम्, | सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी, | 1977 |
| 81. | 'न्यायदर्शनम् वात्स्यायनभाष्यसहितम् | गौतममुनिकृतम् चौखम्भासंस्कृतप्रतिष्ठान, वाराणसी, | 1988. |
| 82. | सांख्यदर्शनम् | कपिलमुनिकृतम्, संस्कृतिसंस्थान, बरेली, | 1985 |
| 83. | सांख्यतत्त्वकौमुदी, | चौखम्भासंस्कृतसंस्थान, वाराणसी, | 1979. |
| 84. | पातञ्जलयोगदर्शनम्, व्यासभाष्ययुतम्, | चौखम्भा सुरभारती प्रकाशन, वाराणसी, | 1993. |
| 85. | शिवसूत्रं भक्तिसूत्रञ्च, | वसगुप्तकृतं शाण्डिल्यमुनिकृतञ्च, पीतम्बरापीठ दतिया, | 1961. |
| 86. | विष्णुपुराणम्, | गीताप्रेस, गोरखपुर, | 1989. |

87. हितोपदेशः, चौखम्भासंस्कृतप्रतिष्ठान, दिल्ली, 1987.

88. नारदभक्तिसूत्रम्, गीताप्रेस, गोरखपुर, 1997.

89. सर्वदर्शनसङ्ग्रहः माधवाचार्यकृतः, 1984.
चौखम्भाविद्याभवन, वाराणसी,

90. श्रीमद्भागवतमहापुराणम्, गीताप्रेस, गोरखपुर, 1989.

91. श्रीमत्स्यपुराणम् गीताप्रेस, गोरखपुर, 1989.

92. श्रीकूर्मपुराणाङ्क वर्ष 71, गीताप्रेस, गोरखपुर, 1997.
(मूलसहित)

93. श्री देवीभागवताङ्क (मूलसहित), गीताप्रेस, गोरखपुर, 2003.

94. आर्यभटीयम् इण्डियन नेशनल साइंस एकेडमी, 1976.
दिल्ली, (आर्यभट्टविरचितम्)

95. सूर्यसिद्धान्तः, प्रो. रामचन्द्र पाण्डेय,
चौखम्भासुरभारतीप्रकाशन, वाराणसी, 2000.

96. अर्वाचीनम् ज्योतिर्विज्ञानम्, रामनाथसहायकृतम्, 1996.
सम्पूर्णानसंस्कृतविश्वविद्यालयः, वाराणसी

97. वेङ्कटेश्वरशताब्दीपञ्चाङ्गम् , खेमराज श्रीकृष्णदास, 1987.

98. श्रीविश्वनाथपञ्चाङ्गम्, काशीहिन्दूविश्वविद्यालयः, वाराणसी, 2007.

99. गणेशआपापञ्चाङ्ग, बालकृष्णशास्त्री,राजेश्वरी पुस्तकालय,2007.
वाराणसी,

100. श्री आदित्यपञ्चाङ्गम्, ज्योतिर्वेदविज्ञानसंस्थान, वाराणसी, 2007.

101. ज्योतिर्गणितकौमुदी, गङ्गाविष्णु श्रीकृष्णदास प्रकाशन, 1988.
मुम्बई,

102. लीलावती, भास्कराचार्यविरचित, 1979.
चौखम्भाविद्याभवन, वाराणसी

103. रघुवंशम्, कालिदासकृतम्,
चौखम्भाओरियण्टालिया, 1987

| | | | |
|---|---|---|---|
| 104. | अभिज्ञान शाकुन्तलम् | कालिदासग्रन्थावलिःउ0प्र0,संस्कृत अकादमी | 1998 |
| 105. | मेघदूतम् | कालिदासग्रन्थावलिःउ0प्र0,संस्कृत अकादमी | 1998 |
| 106. | शिशुपाल बधम् | चौखम्भाविद्याभवन, वाराणसी, | 2000 |
| 107. | मृच्छकटिकम् | कृष्णदास अकादमी | 1999 |
| 108. | विमानार्चनाकल्पम् (वैखानसागमः), | मरीचिः, वेङ्कटेश्वरमुद्रणालयः, मद्रास, | 1926. |
| 109. | वैखानसागमः | मरीचिः, अनन्तशयनग्रन्थमाला, त्रिवेन्द्रम्, | 1935. |
| 110. | सात्वतसंहिता पाञ्चरात्रागमः | सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी, | 1982. |
| 111. | जयाख्यसंहिता पाञ्चरात्रागमः | ओरियण्टल इन्स्टीच्यूट, बड़ौदा, | 1967. |
| 112. | अहिर्बुध्न्यसंहिता पाञ्चरात्रागमः | अडियार लाइब्रेरी एण्ड रिसर्च सेण्टर, मद्रास, 1986. | |
| 113. | लक्ष्मीतन्त्रम् पाञ्चरात्रागमः | अडियार लाइब्रेरी एण्ड रिसर्च सेण्टर, मद्रास, | 1975. |
| 114. | विष्णुसंहिता पाञ्चरात्रागमः, | नाग प्रकाशन, दिल्ली-7, | 1991. |
| 115. | भार्गवतन्त्रम् : पाञ्चरात्रागमः | केन्द्रीय संस्कृत विद्यापीठ, इलाहाबाद, | 1981. |
| 116. | श्रीप्रश्नसंहिता पाञ्चरात्रागमः | केन्द्रिय संस्कृत विद्यापीठ, तिरुपति, | 1969. |
| 117. | नारदीयसंहिता पाञ्चरात्रागमः | केन्द्रिय संस्कृत विद्यापीठ, तिरुपति, | 1971. |
| 118. | रुद्रयामलम् (उत्तरतन्त्रम्), | सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी, | 1991. |

| | | | |
|---|---|---|---|
| 119. | मालिनीविजयोत्तरतन्त्रम्, | सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी, | 1991 |
| 120. | मृगेन्द्रतन्त्रम्, | पाणिनि, नई दिल्ली-2, | 1982. |
| 121. | शिवसूत्रम्, | मार्कण्डेय संन्यासाश्रम ओंकारेश्वर, म0प्र0, | 1985. |
| 122. | योगिनीहृदयम्, | सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी, | 1979. |
| 123. | वातुलशुद्धागमः, | प्राच्यविद्यासंशोधनालयः मैसूरविश्ववि0 मैसूरुः, | 1983. |
| 124. | वीरागमोत्तरम्, | प्राच्यविद्यासंशोधनालयः,मैसूरविश्ववि0, मैसूरुः, | 1988. |
| 125. | चिद्गगनचन्द्रिका, | सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी, | 1980. |
| 126. | ललितास्तवरत्नम् दुर्वासामुनिः | केन्द्रीय संस्कृत विद्यापीठ, जम्मू, | 1981. |
| 127. | शिवदृष्टिः सोमानन्दः, | वाराणसेय संस्कृत संस्थान, वाराणसी, | 1986. |
| 128. | परात्रिंशिका, | मोतीलाल बनारसीदास, | 1985. |
| 129. | स्पन्दकारिका, वसुगुप्तः, | मोतीलाल बनारसीदास, | 1984. |
| 130. | ईश्वरप्रत्यभिज्ञाविमर्शिनीयुता भास्करीसंवलिता च, | मोतीलाल बनारसीदास, | 1986. |
| 131. | श्रीतन्त्रालोकः, | अभिनवगुप्तः, मोतीलाल बनारसीदास, | 1987. |
| 132. | तन्त्रसारः, | अभिनवगुप्तः, शक्तिप्रकाशन, वाराणसी, | 1985. |
| 133. | परमार्थसारः, | अभिनवगुप्त मोतीलाल बनारसीदास, | 1984. |
| 134. | परमार्थसारः, | आदिशेषः, मोतीलाल बनारसीदास, | 1984. |

135. विज्ञानभैरवः, चौखम्भा सुरभारती प्रकाशन, वाराणसी, 1991.

136. पूर्णता प्रत्यभिज्ञा, म.म. रामेश्वर झा, अरुणकृष्ण जोशी, विजयकृष्ण जोशी, वाराणसी, 1984.

137. स्तोत्ररत्नावली, गीताप्रेस, गोरखपुर, 1997.

138. प्रत्यभिज्ञाहृदयम्, क्षेमराजः, ठा. जयदेव सिंह, मोतीलाल बनारसीदास, 1983.

139. स्पन्दसन्दोहः, क्षेमराजः, कश्मीर संस्कृत सीरीज, श्रीनगर कश्मीर, 1917.

140. षट्त्रिंशत् तत्त्वसन्दोहः, कश्मीर संस्कृत सीरीज, श्रीनगर कश्मीर, 1917.

141. पराप्रावेशिका, क्षेमराजः कश्मीर सं० सी०,श्रीनगर कश्मीर, 1917.

142. अनुभवसूत्रम्, मायिदेवः, प्राच्यविद्यासंशोधनालयः, मैसूरविश्वविद्यालयः, मैसूरुः, 1983.

143. सिद्धान्तशिखामणिः, जङ्गमवाडीमठ, वाराणसी, 1986.

144. गणकारिका, ओरियण्टल इन्स्टीच्यूट, बड़ौदा, 1966.

145. शैवपरिभाषा, शिवाग्रयोगीन्द्रज्ञानशिवाचार्यः, 1950.

146. शिवमहिम्नः स्तोत्रम्, कैलाशविद्या प्रकाशन, ऋषिकेश, 1986.

147. सौन्दर्यलहरी, श्रीमदाद्यशङ्कराचार्यः, प्राच्यविद्यासंशोधनालयः, मैसूरविश्वविद्यालयः, मैसूरुः, 1969.

148. भावनोपनिषद्, प्राच्यविद्यासंशोधनालयः, मैसूरवि०: मैसूरुः, 1969.

149. भर्तृहरिशतकत्रयम्, भर्तृहरिः, मनोज पब्लिकेशन्स, दिल्ली, 2002.

150. बहुरूपगर्भस्तोत्रम्, केन्द्रीय संस्कृत विद्यापीठ, दिल्ली, 1986.

| | | |
|---|---|---|
| 151. विराडविवरणम्, | सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी, | 1982. |
| 152. अद्वय तारकोपनिषद्, | प्राच्यविद्यासंशोधनालयः, मैसूरवि0: मैसूरुः, | 1969. |
| 153. आगममीमांसा, | व्रजवल्लभद्विवेदी, केन्द्रीयसं0-विद्यापीठम्, दिल्ली | 1982. |
| 154. तन्त्रसंग्रहः, | सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी, | 1982. |





## लेखकपरिचयः




**नाम** - **डॉ. भक्तिपुत्ररोहतमः**

**पिता** - श्री रघुराजसिंहः

**माता** - श्रीमती तारादेवी

**वेदान्ताचार्यः** - काशीहिन्दूविश्वविद्यालयात् लब्धस्वर्णपदकः

**आगमाचार्यः** - सम्पूर्णानन्दसंस्कृतविश्व-विद्यालयात्, लब्धस्वर्णपदकः।

**विद्यावारिधिः** - (पी-एच. डी.) जे. आर. एफ. 'नेट'

**असिटेन्टप्रोफेसर - धर्मागमविभागे**
**संस्कृतविद्या-धर्मविज्ञान-संकाये**
काशीहिन्दूविश्वविद्यालये
वाराणसी-221005।

**दूरभाष** : 0542-6701929
**मोबाईल** : 09450595765

**जन्मभूमिः**
ग्राम : - माँझगाँव, पत्रालयः - पालपुर
जनपदम् - अयोध्या (फैजाबाद) 224153
**उत्तरप्रदेशः, भारतम्**




# भक्तिकुलम्

भक्तिकुलग्रन्थमालायाः प्रथमं पुष्पम्




कला-प्रकाशन
बी. 33/33-ए-1, न्यू साकेत कालोनी
बी. एच. यू., वाराणसी-5

ISBN - 978-93-80467-70-2




मूल्य : 650.00 रुपये